शीयुतद्वादश्यां श्रावणयोगे कार्यम् ॥ तथाच मात्स्ये— द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशी यदि । स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥ तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः । प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥ विष्णुधर्मे—एकादशी द्वादशी च विष्ण्वर्क्षमपि यत्र च । तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ॥ एकादशीति तंत्रेण द्वादश्यामुपवासकृत् । संस्पृश्यैकादशीं राजन्द्वादशीं यदि संस्पृशेत् ॥ श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति । भाद्रशुक्लद्वादश्यां श्रवणयोगरहितायां पारणं कुर्यात् ॥ आमाकासितपक्षेषु इति दिवोदासोदाहृतवचनात् ॥ उपोष्यैकादशीं मोहात्पारणं श्रवणे यदि । करोति हंति यत्पुण्य द्वादशद्वादशीभवम् ॥ विशेषेण महीपाल श्रवण वर्द्धते यदि । तिथिक्षये न भोक्तव्यं द्वादशीं लघयेन्न हि । इह च श्रवणर्क्षं त्रेधा विभज्य मध्यविंशतिघटिकायोगं त्यक्त्वा पारणं कार्यम् ॥ तदुक्तं विष्णुधर्मे—श्रुतेश्च मध्ये परिवर्तमेति सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यम् । केचित्तु—चतुर्धा विभज्य मध्यपादद्वयमित्याहुः ॥ अत्रैव विष्णुपरिवर्तनोत्सवं कुर्यात् । अत्रैव शक्रोत्थापनमुक्तमपरार्के गर्गेण—द्वादश्यां तु सिते पक्षे मासि प्रोष्ठपदे तथा । शक्रमुत्थापयेद्राजा विष्णुश्रवणवासरे । इयमेव श्रवणद्वादशी नाम्नी ॥ तत्रैकादश्यां द्वादशीश्रवणयोगे सैवोपोष्या विष्णुशृंखलाविशेषयोगात् । एकादश्यां श्रवणयोगाभावेऽपि तद्दिनावच्छेदेन श्रवणस्पृष्टद्वादशीयोगादेव विष्णुशृंखलमिति हेमाद्रौ मतम् । निर्णयामृते तु श्रवणद्वादशीयोग एव । विष्णुशृंखलं नान्यथेति । यथा निशीथानंतर सूर्योदयावधि कलामात्रमपि श्रवणर्क्षं तदापि पूर्वैव । दिवोदासीये तु रात्रेः प्रथमयामे श्रवणयोगे पूर्वा । अन्यथोत्तरेत्युक्तम् । इय च बुधवासरेऽतिप्रशस्ता । यदा तु एकादशी श्रवणयुता, न द्वादशी, तदा एकादश्यामेव व्रतम् ॥ अशक्तस्तु एकादश्यां गौणोपवास कृत्वा द्वादशीमुपवसेत् । इदं व्रतं काम्यमिति गौडाः । नित्यमिति दाक्षिणा

त्याः । पारणं तु उभयांते अन्यतरांते वा कुर्यात् ॥ भाद्रपदे श्रवणैकादश्यां मध्याह्ने वामनावतारः ॥ श्रवणयुक्तशुक्लैकादश्यलाभे तु दशमीविद्धापि श्रवणयुता ग्राह्या । तथाच मदनरत्ने वह्निपुराणे—दशम्यैकादशी यत्र सा नोपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सोपोष्या सर्वकामदा ॥ अस्यां द्वादश्यां दुग्धव्रतसंकल्पः ॥ दुग्धव्रते तु पायसादिकं वर्ज्यम् । दधिघृतादयस्तु विकारा ग्राह्या एव । नन्वेवं संधिन्यादिक्षीरनिषेधेपि दध्यादि ग्राह्यं स्यादिति चेत्तत्र वाचनिकनिषेधसत्वात् । तदाह अपरार्के शंखः—क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः । सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समाहितः । व्रतं गोमूत्रपानकम् ॥ ॥ अथ व्रतविधिः ॥ अग्निपुराणे—कृष्ण उवाच । विधानं शृणु राजेंद्र यथा दृष्टं मनीषिभिः । यथोक्तं नियमं कुर्यादेकादश्यामुपोषितः ॥ दंतान्संशोध्य[1] यत्नेन वाग्यतो नियतेंद्रियः । श्रवणद्वादशीयोगे समुपोष्य जनार्दनम् ॥ अर्चयित्वा विधानेन त्रयोदश्यां परेहनि । नदीनां संगमे स्नायादर्चयेदत्र वामनम् ॥ सौवर्णं वस्त्रसंयुक्तं द्वादशांगुलमुच्छ्रितम् । पीतवस्त्रैः शुभैर्वेष्ट्य मृत्पात्रमव्रणं नवम् ॥ हिरण्मयेन पात्रेण अर्घ्यपात्रं प्रकल्पयेत् । दध्यक्षतफलैश्चैव सहिरण्यं सचंदनम् ॥ नमस्ते पद्मनाभाय नमस्ते जलशायिने । तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे ॥ नमः शार्ङ्गसीरे[2]बाणपाणये वामनाय च । यज्ञभुक्फलदात्रे च वामनाय नमो नमः ॥ देवेश्वराय देवाय देवसंभूतिकारिणे । प्रभवे सर्वदेवानां वामनाय नमोनमः ॥ मत्स्यकूर्म वराहेभ्यो नारसिंहस्वरूपिणे । रामचंद्राय रामाय वामनाय नमो नमः ॥ श्रीधराय नमस्ते ऽस्तु नमस्ते गरुडध्वज । चतुर्बाहो नमस्तेऽस्तु नमस्ते धरणीधर ॥ एवं संस्तूय विधिवन्नमस्कुर्याच्च नामभिः । रात्रौ जागरणं कुर्यात्पुरतो जलशायिनः ॥ धृत्वा बालमयं रूपं देवो ऽक्रीडत्पयोनिधौ[3] ।

१ दंतकाष्ठं भक्षयित्वाथेति पाठांतरं २ व्रतार्के तु नमःशार्ङ्गासिबाणायेतिदृश्यते । द्वावपि पाठावसाधू । ३ धृत्वाजलमयं रूपं देवदेवस्पचक्रिणःइतिच पाठोव्रतार्के ।

ब्रह्माण्डमुदरे यस्य महद्भूतैरधिष्ठितम् ॥ मायावी वामनः श्रीशः सोऽप्यायातु जगत्पतिः । एवं संस्तूय तं भक्त्या द्वादश्यामुदये रवेः । शृं-
गारसहितं तं च ब्राह्मणाय निवेदयेत् ॥ वामनः प्रतिगृह्णाति वामनो ऽहं ददामि ते । वामनं सर्वतोभद्रं द्विजाय प्रतिपादये ॥ जलधेनुं
तथा दद्याच्छत्रं चैव तु पादुके । सहिरण्यानि वस्त्राणि धूपधेनुं तथा नृप ॥ यत्किंचिद्दीयते तत्र तद्दानं प्राप्यते ध्रुवम् । श्रवणद्वादशीयोगे सम्पूज्य
गरुडध्वजम् ॥ दत्त्वा दानं द्विजातिभ्यो वियोगे पारणं ततः । सिंहस्थिते तु मार्तण्डे श्रवणस्थे निशाकरे ॥ विष्णुधर्मोत्तरे—राम उवाच । उपवासा
समर्थानां किं स्यादेकमुपोषणम् । महाफलं महादेव तन्ममाचक्ष्व पृच्छतः ॥ पुष्कर उवाच । या राजञ्छ्रवणोपेता द्वादशी महती तु सा ।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥ प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलम् । दध्योदनयुतं तस्यां जलपूर्णं तथा घटम् ॥ वस्त्रसं-
वेष्टितं दत्त्वा छत्रोपानहमेव च । न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति ॥ अक्षय्यं स्थानमाप्नोति नात्र कार्या विचारणा । श्रवणद्वाद-
शीयोगे बुधवारो भवेद्यदि । अत्यन्तमहतीनाम द्वादशी सा प्रकीर्तिता ॥ स्नानं जाप्यं तथा दानं होमः श्राद्धं सुरार्चनम् । सर्वमक्षय्यमा-
प्नोति तस्यां शृणु कुलोद्वह ॥ तस्मिन्दिने तथा स्नातो यत्र क्वचन संगमे । स गङ्गास्नानजं राजन् फलं प्राप्नोत्यसंशयम् ॥ श्रवणे संय-
माः सर्वे परतुष्टिप्रदाः सदा । विशेषाद्द्वादशी युक्ता बुधयुक्ता विशेषतः ॥ तथैव द्वादशी प्रोक्ता बुधश्रवणसंयुता । शुद्धा श्रवणसंयुक्ता संगमे
विजया स्मृता ॥ वारिकुम्भं प्रदायास्यां दध्योदनसमायुतम् । प्रेतयोनौ न जायेत पूजयित्वा ऽत्र वामनम् । वंशाः समुद्धृतास्तेन मुक्तः
पितृऋणादसौ ॥ नभस्ये संगमे स्नात्वा वामनो येन पूजितः । स याति परमं स्थानं विष्णुसायुज्यमाप्नुयात् ॥ भविष्योत्तरे—युधिष्ठिर उवाच । उ-
पवासासमर्थानां तदेव पुरुषोत्तम । एका या द्वादशी पुण्या तां वदस्व ममानघ ॥ श्रीकृष्ण उवाच । मासे भाद्रपदे शुक्ला द्वादशी श्र-

वणान्विता । सर्वकामप्रदा पुण्या उपवासमहाफला ॥ संगमे सरितां स्नात्वा द्वादश्यां समुपोषितः । समग्रं समवाप्नोति द्वादशद्वादशीफलम् ॥ सा धेनुद्वादशी ज्ञेया तस्या भाद्रपदे शुभा । दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा । पारणं तिथिवृद्धौ तु द्वादश्यामुडुसंक्षयात् ॥ वृद्धौ कुर्यात्त्रयोदश्यां तत्र दोषो न विद्यते ॥ इत्येषा कथिता राजन् द्वादश्यां श्रवणेन या । कर्तव्या सा प्रयत्नेन इहामुत्रफलप्रदा ॥ द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् । निषिद्धमपि कर्तव्यमित्याज्ञा पारमेश्वरी ॥ बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् । अतीव महती तस्यां सर्वं कृतमिहाक्षयम् ॥ द्वादशी श्रवणोपेता यदा भवति भारत । संगमे सरितां स्नात्वा गंगादिस्नानजं फलम् । सोपवासः समाप्नोति नात्र कार्या विचारणा । जलपूर्णं तदा कुंभं स्थापयित्वा विचक्षणः ॥ पंचरत्नसमोपेतं सोपवीतं सवस्त्रकम् । तस्योपरि स्थापयित्वा लक्ष्म्या सह जनार्दनम् ॥ यथाशक्त्या स्वर्णमयं शंखशार्ङ्गविभूषितम् । स्थापयित्वा विधानेन सितचंदनचर्चितम् ॥ सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम् ॥ ओंनमो वासुदेवाय शिरः संपूजयेत्ततः । श्रीधराय मुखं तद्वद्वैकुंठाय हृदब्जकम् ॥ नमः श्रीपतये नेत्रे भुजौ सर्वास्त्रधारिणे । व्यापकाय नमः कुक्षी केशवायोदरं नमः ॥ त्रैलोक्यजनकायेति मेंढ्रं संपूजयेद्धरेः । सर्वाधिपतये जंघे पादौ सर्वात्मने नमः ॥ अनेन विधिना राजन्पुष्पधूपैः समर्चयेत् । ततस्तस्याग्रतो देयं नैवेद्यं घृतपाचितम् ॥ द्वादश ब्राह्मणान्कुंभान् शक्त्या दद्याच्च दक्षिणाम् । एवं संपूज्य गोविंदं जागरं तत्र कारयेत् ॥ प्रभाते विमले स्नात्वा संपूज्य गरुडध्वजम् । पुष्पधूपादिनैवेद्यैः फलैर्वस्त्रैः सुशोभनैः ॥ पुष्पांजलिं

१ अत्र माप्नोतीत्यध्याहारः ।

ततो दत्त्वा मन्त्रमेतमुदीरयेत् ॥ नमो नमस्ते गोविंद बुधश्रवणसंज्ञक । अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ॥ अनंतरं ब्राह्मणे तु वे
दवेदांगपारगे । पुराणज्ञे विशेषेण विधिवत्संप्रदापयेत् ॥ प्रीयतां देवदेवेशो मम नित्यं जनार्दनः । अनेनैव विधानेन दद्यात्स्त्री वा नरोत्त
मः ॥ सर्वं निवर्तयेत्सम्यगेकभक्तिरतोपि सन् ॥ इति व्रतविधिः ॥ ॥ अथ कथा ॥ श्रीकृष्ण उवाच । अत्राप्युदाहरंतीममितिहासं पु
रातनम् । महत्यरण्ये यद्वृत्तं भूमिपाल शृणुष्व तत् १ देशो दाशार्णको नाम तस्य भागे तु पश्चिमे । अस्ति राजन्मरुद्देशः सर्वसत्त्वभयं
करः २ सुतप्तवालुकाभूमिर्यत्र दृष्टा महोरगाः । अल्पच्छायाद्रुमास्तत्र मृतप्राणिसमाकुलाः ३ शमीखदिरपालाशकरीरैश्च सपीलुभिः ।
यत्र भीमगणा वृक्षा मर्कटैः परिवेष्टिताः ४ गंधप्राणिगणाकीर्णा यत्र भूर्दृश्यते क्वचित् । अर्कप्रतापैः संतप्ता परुषा निस्तृणा मही ५ ज्व
लिताग्निसमं चैव यत्किंचित्तत्र दृश्यते । तथापि लोका जीवंति सर्वे कर्मनिबंधनात् ६ नोदकं नो तृषा भीता राजंस्तत्र बलाहकाः । क
दाचिदपि दृश्यंते प्लवमाना विहंगमाः ७ तैः कांतारगतैः केचित्तृषितैः शिशुभिः समम् । सैकतेष्वेव नश्यंति जलैः सैकतसेतुवत् ८ त
स्मिंस्तथाविधे देशे कश्चिद्दैववशाद्वणिक् । हरिदत्त इति ख्यातो वणिग्धर्मोपजीवकः ९ निजसार्थपरिभ्रष्टः प्रविष्टो मरुजांगले । दृष्टवान्म
लिनान् रूक्षान्निर्मांसान्भीमदर्शनान् । १० बभ्राम भ्रांतहृदयः क्षुत्तृषाश्रमकर्शितः । क्व ग्रामः क्व जनः क्वाहं क्व यास्यामि किमाचरे ११
अथ प्रेतान्ददर्शासौ क्षुत्तृषाव्याकुलेंद्रियान् । क्षुत्क्षामोल्लंबवपणान् निर्मांसान्सघकीकसान् १२ स्नायुबद्धास्थिचरणान्धावमानानितस्ततः ।
वणिक् सोपि तदाश्चर्यं दृष्ट्वा भयमुपागतः १३ भीतभीतस्तु तैः सार्धं जगाम पथि वंचयन् । ततो गत्वा पिशाचास्ते न्यग्रोधं महदाश्रय
म् १४ शीतच्छायं सुविस्तीर्णं तत्र ते समुपाविशन् । निविष्टेषु ततस्तेषु एकदेशे स्थितो वणिक् १५ प्रेतस्कंधसमारूढमेकं विकृत

दर्शनम् । ददर्श बहुभिः प्रेतैः समंतात्परिवारितम् १६ आगच्छञ्छवभक्षी स स्तुतिशब्दपुरःसरम् । प्रेतस्कंधान्महीं गत्वा तस्यांतिक-
मुपागमत् १७ सोपि वाचा वणिक्श्रेष्ठमिदं वचनमब्रवीत् । अस्मिन्घोरतरे देशे प्रवेशो भवतः कथम् १८ तमुवाच वणिग्धीमान् सार्थ-
भ्रष्टस्तदावशः । प्रवेशो दैवयोगेन कष्टकर्मकृतेन तु १९ तृष्णा मे बाधतेत्यर्थं क्षुत्तृषौ च भृशं तथा । प्राणाः कंटमनुप्राप्ता वचनं नश्य-
तीव मे ॥ अत्रोपायं न पश्यामि जीवेयं येन केनचित् २० श्रीकृष्ण उवाच । इत्येवमुक्तः प्रेतस्तु वणिजं वाक्यमब्रवीत् । पुन्नागमिममा-
श्रित्य प्रतीक्षस्व मुहूर्तकम् २१ कृतातिथ्यो यथा पश्चाद्गमिष्यसि यथासुखम् । एवमुक्तस्तथा चक्रे स वणिक् तृपयार्दितः २२ मध्याह्न-
समये प्राप्ते ततस्तं देशमागतः । पुन्नागवृक्षाच्छीतोदा वारिधानी मनोरमा २३ दध्योदनसुयुक्तेन वर्द्धमानेन संयुता । अवतीर्य ततः सो-
ग्रे ददावतिथये तदा २४ दध्योदनं च तोयं च क्षुत्तृड्भ्यां पीडिताय वै । दध्योदनेन तोयेन परां तृप्तिमुपागतः २५ वितृष्णो विज्वरश्चा-
पि क्षणेन स बभूव ह । ततस्तु प्रेतसंघस्य तस्माद्भागं क्रमाद्ददौ २६ दध्योदनात्सपानीयात्प्रेतास्तृप्तिं परां गताः । अतिथिं तर्पयित्वा च
प्रेतलोकं च सर्वशः २७ ततः स्वयं च बुभुजे भुक्तशेषं यथासुखम् । ततो भुक्तवतस्त्वन्नं पानीयं च स्वयं पपौ २८ प्रेताधिपं ततस्तुष्टो
वणिग्वचनमब्रवीत् ॥ वणिगुवाच । आश्चर्यमेतत्परमं वने ऽस्मिन्प्रतिभाति मे २९ अन्नपानस्य संप्राप्तिः परमस्य कुतस्तव । स्तोकेन च
तथान्नेन बिभर्षि सुबहून्वने ३० तृप्तिं गताः कथं त्वेते निर्मांसा भीमकुक्षयः । अपरं च कथं स्नेहमवाप्तावापरिक्षयम् ३१ हिमाचलं च
कस्मात्त्वं संप्राप्तो निर्जले वने । तृप्तश्चासि कथं ग्रासमात्रेणैव शुभं ब्रवीः ३२ पिशाचपतिरुवाच । शृणु भद्रं प्रवक्ष्यामि दुष्कृतं कर्म चा-
त्मनः । शाकले नगरे रम्ये अहमासं सुदुर्मतिः ३३ वणिगासं पुरा काले ततो भद्रमवाप ह । शाकले नगरे रम्ये नास्तिकस्य दुरात्म-

नः ३४ धनलोभात्तया तत्र कदाचित्प्रमदेरिता । न दत्ता भिक्षवे भिक्षा तृषिताय जलं नच ३५ प्रतिवेश्यस्तु तत्रासीद्ब्राह्मणो गुणवान्मम ।
श्रवणद्वादशीयोगे मासि भाद्रपदे तथा ३६ स कदाचिन्मया सार्द्धं तापीं नाम नदीं ययौ । तस्यास्तु संगमः पुण्यो यत्रासीच्चन्द्रभागया
३७ चन्द्रभागा सोमसुता तापी चैवार्कनन्दिनी । तयोः शीतोष्णसलिले संगमे सुमनोहरे । तत्तीर्थवरमासाद्य प्रतिवेश्यः स मे द्विजः ३८
श्रवणद्वादशीयोगे स्नातश्चैवोपवासकृत् । चान्द्रभागस्य तोयस्य वारिकुंभं नवं दृढम् ३९ दध्योदनयुतैः सार्द्धं संपूर्णैर्वर्द्धमानकैः । छत्रो
पानद्युगं वस्त्रं प्रतिमां विधिवद्वरे ४० प्रददौ विप्रमुख्याय रहस्यज्ञो महामुनिः । वित्तसंरक्षणार्थाय तस्यापि च ततो मया ४१ सोपवा
सेन दत्ता वै वारिधानी सुशोभना । चन्द्रभागास्य विप्राय दध्योदनयुता तदा ४२ एतत्कृत्वा गृहं प्राप्तस्ततः कालेन केनचित् । पञ्चत्वम
हमासाद्य नास्तिक्यात्प्रेततां गतः ४३ अस्यामटव्यां घोरायां यथा त्वं कुशलं तदा । पुरोहितो मया दृष्टो स्नात्वा गृहमुपागतः ४४
शिक्यहस्तः सकलशो द्वादश्यां समुपोषितः । तेनापि कथिता तत्र श्रवणद्वादशी शुभा ४५ सविनयं सोपदेशं व्रतं कृत्वा मयाऽनघ । त
स्येयं कर्मणः पुष्टिर्येयं दृष्टा त्वया ऽनघ ४६ यदन्नं च मया दत्तं सजलं घटकांचनम् । तत्तन्मां भजते नित्यं पिशाचत्वे ऽपि नित्यशः
४७ सेयं मध्याह्नसमये दिवसे दिवसे मम । उपतिष्ठति नैश्चेह यथादृष्टं त्वया ऽनघ ४८ उपवासफलेनैव जातिस्मरणमेव च । दधिभक्त
प्रसादेन जलान्न चाक्षयं मम ४९ ब्रह्मस्वहारिणस्त्वेते पापाः प्रेतत्वमागताः । परदाररता केचित्स्वामिद्रोहरताः परे ५० मित्रद्रोहरताः
केचिद्देशे ऽस्मिंस्तु सुदारुणे । ममैते भृत्यतां प्राप्ता अन्नपानकृते ऽनघ ५१ अक्षय्यो भगवान्विष्णुः परमात्मा सनातनः । यद्दीयते तमु

१ नैव तपोषित इत्यपि पाठः ।

द्दिश्य अक्षय्यं तत्प्रकीर्तितम् ५२ तेनाक्षय्येन चान्नेन तृप्ता एते पुनः पुनः । प्रेतभावाच्च दौर्बल्यं न मुंचंति कदाचन ५३ अहं च पूजयित्वा त्वामतिथिं समुपस्थितम् । प्रेतभावाद्विनिर्मुक्तो यास्यामि परमां गतिम् ५४ मया विहीनाः किंत्वेते वनेऽस्मिन्भृशदारुणे । पीडामनुभवंत्येते दारुणां कर्मयोनिजाम् ५५ एतेषां तु महाभाग ममानुग्रहकाम्यया । अनेकनामगोत्राणि गृह्णीष्व त्वं खिलं मम ५६ अस्ति कक्षागता चैव तत्त्वसंपुटिका शुभा । हिमवंतमथासाद्य तत्र त्वं लप्स्यसे निधिम् ५७ गयाशीर्षे ततो गत्वा श्राद्धं कुरु महामते । एकमेकमथोद्दिश्य प्रेते प्रेते यथासुखम् ५८ एवं संभाष्यमाणस्ते तप्तजांबूनदप्रभः । समारुह्य विमानं स स्वर्गलोकमितो गतः ५९ स्वर्गते प्रेतनाथे वै प्रभावात्स वणिक्क्रमात् । नामगोत्राणि संगृह्य प्रयातः स हिमालयम् ६० तत्र प्राप्य निधिं गत्वा विनिक्षिप्य स्वकं गृहे । धनभारमुपादाय गयाशीर्षवटं ययौ ६१ प्रेतानां क्रमशस्तत्र चक्रे श्राद्धं दिने दिने । यस्य यस्य यथा श्राद्धं स करोति दिने वणिक् ६२ सोपि तस्य तदा स्वप्ने दर्शयत्यात्मनस्तनुम् । ब्रवीति च महाभाग प्रसादेन तवानघ ६३ प्रेतभावमिमं त्यक्त्वा प्राप्तोऽस्मि परमां गतिम् । ततस्तु ते विमानस्था ऊचुश्च विणिजं तथा ६४ त्वया हि तारिताः सर्वे किल्बिषाद्वणिजोत्तम । प्रयामः स्वर्गतिं सर्वे इदानीं त्वत्प्रसादतः ६५ साधुसंगो नहि वृथा कदाचिदपि जायते । एवमुक्त्वा गताः सर्वे विमानैः सूर्यसन्निभैः ६६ दिव्यरूपधराः सर्वे द्योतयंतो दिशो दश । हरिदत्तश्च तान् सर्वान्समुद्धृत्य जगाम ह ६७ स्वदेशस्थं च नगरं स्वगृहं च विवेश ह । स कृत्वा धनलोभेन प्रेतानां सद्गतिं वणिक् ६८ जगाम स्वगृहं तत्र मासि भाद्रे युधिष्ठिर । श्रवणद्वादशीयोगे पूजयित्वा जनार्दनम् ६९ दानं दत्त्वा च विप्रेभ्यः सोपवासो जितेंद्रियः । संगमे च महानद्योः प्रतिवर्षमतंद्रितः ७० चकार विधिवद्दानं ततो दृष्टांतमागतः । अवाप परमं स्थानं दुर्लभं सर्वमानवैः ७१ यत्र का-

मफला वृक्षा नद्यः पायसकर्दमाः । शीतलामलपानीयाः पुष्करिण्यो मनोरमाः ७२ तद्देशमासाद्य वणिङ्महात्मा प्रतप्तजाम्बूनदभूषि
तांगः । कल्पं समग्रं सुरसुंदरीभिः स्वर्गे सुरेमे मुदितः सदैव ७३ बुधश्रवणसंयुक्ता द्वादशी सर्वकामदा । दानं दध्योदनं शस्तमुपवासः
परो विधिः ७४ सगरेण ककुत्स्थेन धुंधुमारेण गाधिना । एतैश्चान्यैश्च राजेंद्र कामदा द्वादशी कृता ७५ या द्वादशी बुधयुता श्रवणेन
सार्द्धं सा वै जयेति कथिता मुनिभिर्नभस्ये । तामादरेण समुपोष्य नरो हि सम्यक् प्राप्नोति सिद्धिमणिमादिगुणोपपन्नाम् ७६ ॥ इति
हेमाद्रौ भविष्योत्तरे श्रवणद्वादशीव्रतम् ॥ ॥ अस्यामेव वामनजयतीव्रतम् ॥ हेमाद्रौ भविष्ये-- श्रीकृष्ण उवाच । द्वादश्यास्ते विधिः
प्रोक्तः श्रवणेन युधिष्ठिर । सर्वपापप्रशमनः सर्वसौख्यप्रदायकः १ एकादशी यदा सा स्याच्छ्रवणेन समन्विता । विजया सा तिथिः प्रो
क्ता व्रतिनामभयप्रदा २ पुरा देवगणैः सर्वैः समेत्य च युधिष्ठिर । वरदः प्रार्थितो विष्णुर्विद्राग्न्यनिलसंयुतैः ३ बलवानजितो दैत्यो बलि-
र्नाम महाबलः । तेन देवगणाः सर्वे पातिता निजमंदिरम् ४ त्वं गतिः सर्वदेवानां शीघ्रं कष्टात्समुद्धर । दैत्यं जहि महाबाहो बलिं बल
वतांवर ५ श्रुत्वा विष्णुस्तदा वाक्यं देवानां करुणोदयम् । उवाच वाक्यं वाक्यज्ञो देवानां हितकाम्यया ६ विष्णुरुवाच । जातं वै-
रोचनेः पुत्रं बलिं त्रैलोक्यशंकितम् । तपसा भावितात्मानं शांतं दांतं जितेंद्रियम् ७ मद्भक्तं मद्गतप्राणं सत्यसंधं महाबलम् । प्र-
जापतिसमं स्वात्मप्रजानां प्रियकारणम् ८ न गुणास्तस्य शक्यंते वक्तुं केनापि भूतले । अवश्यं तपसोपेतैर्भोक्तव्यं तपसः फलम् ९
तपसोऽन्तस्तु बहुना कालेनास्य भविष्यति । यदा च विजयं दैत्यं ज्ञास्ये कालेन केनचित् १० समाहृत्य श्रियं तस्य तदा दा
स्ये दिवौकसाम् । अदितिर्मां प्रपन्ना वै पुत्रार्थं पुत्रगृध्निनी ११ तस्या मनीषितं कार्यमिति विष्णुरचिंतयत् । स चिंतयित्वा सुचि

रं देव्यां गर्भावधारणम् १२ अदितिं वरयामास वांच्छितं ते भविष्यति । अथ काले बहुतिथे गते सा गुर्विणी ह्यभूत् १३ सुषुवे नवमे मासि पुत्रं सा वामनं हरिम् । ऱ्हस्वपादं ऱ्हस्वकायं महाशिरसमर्भकम् १४ पाणिपादोदरकृशं ऱ्हस्वजंघोरुकेसरम् । दृष्ट्वा तु वामनं जातमदिति र्मोदमापवै १५ भयं बभूव दैत्यानां देवानां तोष आगमत् । जातकादीन् शुभकरान्संस्कारान्स्वयमेव हि १६ चकार कश्यपो धीमान्प्रजापतिसंमन्वितः । आबद्धमेखलो दंडी जटी यज्ञोपवीतवान् । कुशचर्माजिनधरः कमंडलुविभूषितः १७ बलेर्बलवतो यज्ञं जगाम बहुविस्तरम् । दृष्ट्वादैत्यबलं सर्वं वामनस्तु जगाद ह १८ अर्थी ह्यहं यज्ञपते दीयतां मम मेदिनी । पदत्रयप्रमाणो हि पठनार्थं मठो मम १९ दत्ता दत्ता तव तथा बलिः प्राह द्विजोत्तमम् । ततो वर्धितुमारब्धो वामनो ऽनंतविक्रमः २० पादौ भूमौ प्रतिष्ठाप्य शिरसावृत्य रोदसी । ताभ्यां स्वर्गादिकान्लोकान्ललाटे ब्रह्मणः पदम् २१ न तृतीयं पदं लेभे किं ददे मम तद्वद । तद्दृष्ट्वा महदाश्चर्यं सिद्धा देवर्षयस्तथा २२ साधु साध्विति देवेशं प्रशशंसुर्मुदान्विताः । ततो दैत्यगणान्सर्वान् जित्वा त्रिभुवनं वशी २३ बलिं प्राह च भो गच्छ पातालं सबलानुग । तत्र स्वमीप्सितान् भोगान् भुक्त्वा मद्बाहुपालितः २४ अस्येंद्रस्यावसाने तु त्वमेवेंद्रो भविष्यसि। एवमुक्तो बलिः प्रायान्नमस्कृत्य सुरोत्तमम् २५ विसर्ज च बलिं देवो लोकपालानुवाच ह । स्वानि धिष्ण्यानि गच्छध्वं तिष्ठध्वं विगतज्वराः २६ देवेनोक्ता गता देवाः प्रहृष्टाः पूज्य वामनम् । देवः कृत्वा जगत्कार्यं तत्रैवांतरधीयत २७ एतत्सर्वं समभवदेकादश्यां नराधिप । तेनेष्टा देवदेवस्य सर्वथा विजयातिथिः २८ मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता । विजया प्रोच्यते सद्भिः कोटिकोटिगुणोत्तरा २९ एकादश्यां सोपवासो रात्रौ

१ मरीच्यादिभिर्ऋषिभिर्युक्तः सन् । २ कतम स्यत्त्वंप्रति ।

संपूजयेद्धरिम् । रौप्ये सुवर्णपात्रे वा दारुवंशमयेपि वा ३० सौवर्णं वामनं कुर्यात्स्ववित्तस्यानुसारतः । शिखाकमण्डलुधरं छत्रयज्ञोपवीत
कम् ३१ एवं लक्षणसंपन्नं वामनं पूजयेद्धरिम् । आच्छाद्य पात्रं वासोभिरहतैः फलसंयुतैः ३२ मार्गेण चर्मणा कुर्याद्भक्त्या वा शक्त्यपे
क्षया । तिलाढकेन संपूर्णं प्रस्थेन कुडवेन च ३३ अलाभे यवगोधूमैः फलैः शुक्लतिलैर्भवेत् । अतसीपुष्पसंकाशं तिलकृष्णाजिनोप
रि ३४ पुष्पैर्गंधैः फलैर्धूपैः कालोत्थैरर्चयेद्धरिम् । नानाविधैश्च नैवेद्यैर्भक्ष्यभोज्यैर्गुडोदनैः ३५ स्वस्य वित्तानुसारेण सहिरण्यं च कारये
त् । एभिर्मंत्रपदैस्तत्र पूजयेद्गरुडध्वजम् ३६ उपहारैर्नरश्रेष्ठ शुचिर्भूत्वा समाहितः । धृत्वा चाक्षमयं देव देवदेवस्य चक्रिणः ३७ ब्रह्मांड
मुदरे यस्य महद्भूतैरधिष्ठितम् । मायावी वामनः श्रीशः समायातु जगत्पतिः ३८ युधिष्ठिर उवाच । उपवासासमर्थानां याचेय पुरुषोत्तम।
एकां च द्वादशीं पुण्यां वदस्व वदतां वर ३९ श्रीकृष्ण उवाच । मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता । सर्वकामप्रदा पार्थ उपोष्या
नियमात्सदा ४० सरितां संगमे स्नात्वा द्वादशीं समुपोषयेत् । स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ४१ तस्यां यत्क्रियते पार्थ
तदनंतफलं लभेत् । युधिष्ठिर उवाच । त्वत्प्रसादाच्युत कृष्ण मया तु वामनव्रतम् ४२ इदानीं ब्रूहि मे कृष्ण व्रतोद्यापनमुत्तमम् ।
श्रीकृष्ण उवाच । शृणु पांडव वक्ष्यामि व्रतोद्यापनमुत्तमम् ४३ कृतेन सफलं पार्थ व्रतं भवति निश्चितम् । आदौ मध्ये तथा चांते
व्रतस्योद्यापनं भवेत् ४४ ममेह जन्मनि जन्मांतरे च कृतदोषप्रायश्चित्तार्थं पुत्रपौत्राद्यभिवृद्ध्यर्थं वामनजयंतीव्रतमहं करिष्ये, व्रतस्य सं
पूर्णता सिद्ध्यर्थं उद्यापनं च करिष्ये । इति संकल्प्य ॥ श्रवणद्वादशीव्रतांगत्वेन पुरुषसूक्तेन षोडशोपचारैः वामनपूजनं च करिष्ये । द्वा

१ मृगसंर्मिणा, कृष्णाजिनेनेत्यर्थः ।

दशी श्रवणोपेता यदा भवति भारत । सरितां संगमे स्नात्वा ह्रदे वापि यथाक्रमात् १ पितृदेवार्चनं कृत्वा ध्यायेच्च परमेश्वरम् । जलेन पूरयेत्कुंभं स्थापयित्वा विचक्षणः २ पंचरत्नसमोपेतं तिलोपरि सुपूजितम् । तस्मिन्संसूत्रघटिते स्थापयित्वा च वामनम् ३ सौवर्णं च यथाशक्त्या शंखशार्ङ्गविभूषितं । सुभगं त्वस्त्रसंयुक्तं द्वादशांगुलमुच्छ्रितम् ४ पीतवस्त्रैः शुभैर्वेष्ट्य त्वजिनं च कमंडलुम् । अतसीपुष्पसंकाशं तिलकृष्णाजिनोपरि ५ स्थापयित्वा विधानेन चंदनेनानुलेपयेत् । धृत्वा बालमयं रूपं देवदेवस्य चक्रिणः ६ ब्रह्मांडमुदरे यस्य महद्भूतैरधिष्ठितम् । मायावी वामनः श्रीशो समायातु जगत्पतिः ७ आवाहनम् ॥ अजयाय महेशाय जलजास्याय शंसिने । नमस्ते केशवानंत वासुदेव नमोस्तु ते ८ ध्यानम् ॥ कमंडलुशिखाधारी कुब्जरूपो ऽसि वामन । छत्रदंडधरो देव पाद्यं गृह्ण नमोऽस्तु ते ९ पाद्यम् ॥ सहस्रशीर्षा त्वं देव श्रवणर्क्षसमन्वितः । अर्घ्यं गृहाण देवेश रमया सहितो हरे १० अर्घ्यम् ॥ कमंडलु स्थितं चारु गंगोदकप्रपूरितम् ॥ देवेशाचमनार्थं च तोयं मे प्रतिगृह्यताम् ११ आचमनीयम् ॥ गंगासरस्वतीरेवा पयोष्णीयमुनाजलैः । स्नापितोसि मया देव तथा शांतिं प्रयच्छ मे १२ स्नानम् ॥ अतसीपुष्पसंकाशं तिलकृष्णाजिनोपरि । कुरुक्षेत्रे प्रतिष्ठाप्यं वामनं स्थापयाम्यहम् १३ प्रतिष्ठापनम् ॥ प्रसीद देवदेवेश नमस्ते स्वस्ति वामन । नमस्ते ब्रह्मरूपाय पीतनिर्मलवाससे १४ वस्त्रम् ॥ श्रीखंडं चंदनं दि० १५ चंदनम् ॥ मल्लिकाशतपत्रं च जातीपुष्पसुगंधकम् ॥ चंपकैर्जलजैर्युक्तं पुष्पं गृह्ण नमोस्तु ते १६ पुष्पाणि ॥ नमः कमलकिंजल्कपीतनिर्मलवाससे । महाहवरिपुस्कंदधृतचक्राय चक्रिणे १७ पूजामंत्रः । मत्स्यं कूर्मं वराहं च नारसिंहं च वामनम् ॥ रामं रामं रामकृष्णं बौद्धं कल्किं हि ते नमः १८ पादाद्यैकैकमस्यांगं पूजयेच्छीर्षमंततः ॥ पादौ मत्स्याय च नमो नमः कूर्माय जानुनी १९ वराहाय नमो गुह्यं नृसिंहायेति नामतः । उरस्ते वामना-

येति भुजो रामाय वै नमः २० कर्णौ रामाय च नमः कृष्णाय च नमो मुखम् । बौद्धाय च नमो नेत्रे कल्किने च नमः शिरः २१ इत्यंगपूजा ॥ धू
पोय देवदेवेश शंखचक्रगदाधर । अच्युतानंत गोविंद वासुदेव नमोऽस्तु ते २२ धूपम् ॥ त्वमेव पृथिवीज्योतिर्वायुराकाशमेव च । त्वमेव ज्योति
षां ज्योतिर्दीपोऽयं प्रतिगृह्यताम् । दीपम् २३ अन्नं चतुर्विधं स्वा० । नैवेद्यम् ॥ आचमन करोद्वर्तन फल तांबूल दक्षिणाम् । नीराजनं मन्त्रपुष्पांज
लिंप्रदक्षिणाः नमस्कारान् प्रार्थना ॥ जगदादिर्जगद्रूप अनादिर्जगदन्तकृत् । जलशायी जगद्योनिः प्रीयतां मे जनार्दनः २४ अनेककर्मनिर्बंधध्वंसिन
जलशायिनम् । नतोस्मि मधुरावास माधव मधुसूदनम् २५ नमो वामनरूपाय नमस्ते ऽस्तु त्रिविक्रम । नमस्ते बलिबंधाय वासुदेव नमोस्तु
ते २६ इत्युक्त्वाऽथ गुरु नत्वा पूजयित्वा जनार्दनम् । भूमौ जपेज्जपः क्रोधः शब्दादिविषयैर्जिताः २७ उद्यापन ततः कुर्याद्द्वादशेवत्सरेस्त
था । सौवर्णीं राजतीं ताम्रीं मूर्तिं कृत्वा चतुर्भुजाम् २८ द्वादश्यास्तु दिने प्राप्ते, गुरुमभ्यर्च्य शक्तितः । सदाचाररत पार्थ वेदवेदांगपारगम्
२९ अस्मदीय व्रत विप्र विष्णुवासरसंभवम् । संपूर्णं तु भवेद्येन तत्कुरुष्व द्विजोत्तम ३० तस्याग्रे नियमः कार्यो दंतधावनपूर्वकम् । स्नानं
कृत्वा मन्त्रपूर्वं नद्यादौ विमले जले ३१ तर्पयित्वा पितृन्देवान्पूजयेन्मधुसूदनम् । एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् ३२ ततः प्रभा
तसमये स्नात्वाऽचार्यादिभिः सह । वामनं पूजयेत्प्राग्वद्धोम कुर्याद्विधानतः ३३ मन्त्रेणेदं विष्णुरिति समिदाज्यतिलोदनैः । प्रतिद्रव्य सहस्र वा
शतमष्टोत्तरं हुनेत् ३४ ब्राह्मणान्भोजयित्वा तु द्वादशीव्रती नृप । प्रतिमा च तथा धेनुमाचार्याय निवेदयेत् ३५ एवं कृते तु राजेंद्र गाः कृष्णा
द्वादशाष्ट वा । षट् चतस्रोऽथवा देया एका वापि पयस्विनी ३६ वामनः प्रतिगृह्णाति वामनो वै ददाति च । वामनस्तारको भाभ्यां वाम
नाय नमो नमः ३७ एवं दत्त्वा ततः प्रातर्भोजन स्वपदाय्यकम् । पूर्वं दद्याद्ब्राह्मणेभ्यः पश्चाद्भुञ्जीत वाग्यतः ३८ प्रत्येकं ब्राह्मणान्कुंभान्दक्षिणा

वस्त्रचंदनम् । भूयो यथेच्छया राजन्सर्वत्रैष विधिः स्मृतः ३९ एवं व्रते कृते राजन्यत्पुण्यं तन्निबोध मे । यावत्कल्पशतं पुण्यमेकसप्ततिसंख्यया ४० प्राप्य विष्णुपुरं भोगान्भुंजते कालमक्षयम् । इहागत्य भवेद्राजन्राजभिश्च सुसेवितः ४१ अथ शिक्यदानसंकल्पः । कृतश्रवणद्वादशीव्रतांग त्वेन विहितं श्रीवामनप्रीत्यर्थमिदं दध्योदनसहितं शिक्यदानं करिष्ये ॥ ब्राह्मणपूजनम् ॥ वायनमंत्रः—दध्योदनयुतं शिक्यं वारिधानीयुतं विभो । छत्रोपानहसंयुक्तं ब्राह्मणाय ददाम्यहम् ॥ इदं दध्योदनसहितं शिक्यममुकशर्मणे ब्राह्मणाय सुपूजिताय तुभ्यमहं संप्रददे । इतिवायनम् ॥ इति श्रीभविष्योत्तरपुराणे वामनद्वादशीव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ पौषकृष्णद्वादश्यां सुरूपद्वादशीव्रतम् ॥ इदं गुर्जरदेशे प्रसिद्धम् ॥ उमोवाच । भगवन्प्रष्टुमिच्छामि प्रसादं कुरु मे प्रभो । कथितव्यं प्रसादेन यद्यस्ति मयि सौहृदम् १ व्रतेन केन चीर्णेन विरूपत्वं प्रणश्यति । सौभाग्यं चैवमतुलं प्राप्यते कस्य पूजनात् २ तन्मे कथय देवेश परमाभीष्टदायकम् ३ ईश्वर उवाच । श्रूयतां परमं गुह्यं व्रतं पापहरं शुभम् । सुरूपा द्वादशी नाम महापातकनाशिनी ४ सुरूपदायिनी चैव महापातकनाशिनी । कुलवृद्धिकरी चैव सर्वसौख्यप्रदायिनी ५ तच्छृणुष्व प्रयत्नेन कथ्यमानं मया ऽनघे । पुरा वै द्वापरस्यांते विष्णुर्दैत्यनिषूदनः ६ अवतीर्णो मर्त्यलोके वसुदेवकुले किल । तेनोढा रुक्मिणी नाम भीष्मकस्य सुता पुरा ७ अत्यंतरूपसुभगा पतिव्रतपरायणा । नहि तस्या विना कृष्णः स्तोकमुद्वहते सुखम् ८ श्वश्रूश्वशुरयोः पादौ ववंदे सा पुनःपुनः । केनापि कर्मदोषेण कुपिता विष्णुमातरः ९ न प्रसादयति क्षिप्रमिति ज्ञात्वा तु देवकी । कृष्णं प्रोवाच कुपिता यदि ते जननी ह्यहम् १० ततस्त्वया हि वैवाह्या कुलरूपगुणाधिका । मद्वाक्यमन्यथा कर्तुं नार्हसि त्वं कुलोद्वह ११ कृष्ण उवाच । मायां तु रुक्मिणीं त्यक्त्वा उद्वहेऽहं कथं शुभे । यः परित्यजते भार्यामविक्लवशरीरि-

णीम् १२ स प्राप्नोति हि मदत्वं दौर्भाग्यं सपौरुषम् । विरूपत्वमवाप्नोति न सुखं विंदते क्वचित् १३ व्याधिर्वा जायते लोके निंदनी
यः स देहिनाम् । इत्यहं देवि जानामि कथं कुर्यां वचस्तव १४, देवक्युवाच । सर्वेषामेव देवानां तीर्थादीनामपि ध्रुवम् । माता गुरुतरा
पुत्र करतस्या वचनं त्यजेत् १५ मम वाक्यस्य करणात्कथं पापिष्ठता भवेत् । जननी पूज्यते तेन भार्या च यदुनंदन १६ कृष्ण उवाच ।
परित्यजामि नो भीरु प्रियां प्राणधनेश्वरीम् । इति तूष्णीं पराभूतां मातरं प्रेक्ष्य केशवः । चिंतयामास परमं कथं सौख्यं भवेदिति १७
एतस्मिन्नेव काले तु नारदो भगवानपि । अभ्युज्जगाम सहसा विष्णुं सप्रेक्ष्य विस्मितम् १८ पूजितः परया भक्त्या चार्घ्यं जग्राह नारदः ।
उपविष्टो यथान्यायं पर्यपृच्छदनामयम् १९ नारद उवाच । किं त्वं खेदं करोपीत्थं कथमुद्वेगकारणम् । किं नो सिद्ध्यति तेऽभीष्टं त्य
जोद्वेगं यदूत्तम २० कृष्ण उवाच । मात्रा नियुक्तो देवर्षे परिणेतुं द्विजोत्तम । कन्यामुद्वाहयिष्यामि सुरूपां कस्यचित्समो २१ नारद
उवाच । श्रूयतामभिधास्यामि पूर्ववृत्तांतमादरात् । लक्ष्मीयुक्तः पुरा नाथ क्रीडमानो हि नदते २२ तत्रागमत्स भगवान् दुर्वासा ऋषि
सत्तमः । अभ्युत्थानादिविधिना सत्कृत ज्ञानमूर्तिना २३ प्रेक्ष्य बीभत्सरूपं तं देव्या हास्यं कृतं तदा । स कोपेन महातेजा वैश्वानर
समप्रभ । शशाप लक्ष्मीं दुर्वासा मुनिः कोपेन संयुतः २४ हसितोऽहं त्वया मुग्धे आत्मनो रूपमीक्ष्य च । विरूपा भव दुर्वृत्ते किं न ज्ञातो
ऽहं त्वया २५ इत्युक्त्या तया देव्या यथाशक्त्या प्रसादितः । प्रसन्नो जगदे वाक्यं मच्छापो नान्यथा भवेत् २६ जन्मांतरेणास्य फल
करिष्यति विरूपिता । सेयं मर्त्येऽवतीर्णा हि गोपकस्य गृहे शुभा २७ सत्यभामा विरूपाक्षा विरूपदशना तथा । कर्णनासातिविकृता
सजाता तत्प्रभावतः २८ पाणिपादकटिग्रीवं सर्वं वैरूप्यलक्षणम् । तत्र गच्छ महाप्राज्ञ स ते कन्यां प्रदास्यति २९ कृष्ण उवाच । वि

रूपवदनां ब्रह्मन् कथं द्रक्ष्यामि नित्यशः । का गतिं वै गमिष्यामि ता विवाह्य कुरूपिणीम् ३० नारद उवाच । रुक्मिमण्यास्तु प्रसादेन
शापान्मुच्येत तत्क्षणात् । उत्तमं प्राप्यते रूपं सौभाग्यं परमं सुखम् ३१ देवक्याश्च प्रसादेन धर्मकामार्थसिद्धये । एवं भविष्यति तव
संबंधो विहितः सुरैः ३२ त्वया च नान्यथा कार्यं गुरूणां वचनं महत् । माता गुरुतरा भूमेरिति वेदेषु गीयते ३३ ईश्वर उवाच । ए-
वमुक्त्वा महादेवि नारदस्त्रिदिवं गतः । कृष्णोपि मातरं प्राह वैवाह्यं हि विधीयते ३४ विवाहिता च सा तेन वेदोक्तविधिना ततः । आ-
नीय स्वगृहं मातुर्दर्शयामास तां वधूम् ३५ पश्चाद्येव मया भामा परिणीता शुचिव्रता । निवृत्तिं परमां गच्छ प्रसादसुमुखी भव ३६
इत्युक्त्वा वीक्ष्य तां कृष्णः प्रणिपत्य च मातरम् । बभूव कृतकार्याणां कृतकृत्यो महाबलः ३७ तां दृष्ट्वा देवमाता च बभौ दुःखाधि-
का भृशम् । ईदृग्विरूपां विकृतां कथं भर्तास्मि गोपिताम् ३८ चिंतामवाप महतीमतीवोद्विग्नमानसा । कस्यापि नावचक्षेथा विरूपं
तच्छरीरजम् ३९ अथ कस्मिन्सुकाले तु रुक्मिणी तत्र भावतः । नमस्कृत्य ततः श्वश्रूं संसृष्टं गोमयं तदा ४० उवाच प्रस्तुतं वाक्यं भ-
क्तियुक्तं शुभावहम् । अंबाऽहं द्रष्टुमिच्छामि सपत्नीं कृष्णवल्लभाम् ४१ तां दर्शयितुं मे शीघ्रं प्रसादं सुविधीयताम् ॥ देवक्युवाच । श्व-
श्रूर्ह्यहं ते सुभगे ममापि वचनं कुरु ४२ पूर्वमाचरितं सुभ्रूः सुरूपाद्वादशीव्रतम् । संप्रयच्छसि चेत्तस्यै दर्शनं ते भविष्यति ४३ रुक्मिम-
ण्युवाच । कष्टेन क्रियते धर्मो व्रतं चापि सुदुष्करम् । कथं तस्यै प्रयच्छामि फलं देवैः सुदुर्लभम् ४४ देवक्युवाच । अर्धं प्रदीयताम-
स्यै तदर्द्धमथवा पुनः । पंचमांशमथो षष्ठं षोडशांशमथापि वा ४५ रुक्मिमण्युवाच । सुरूपाद्वादशीपुण्यं तिलार्द्धमपि नोत्सहे । किं
पुनः षोडशांशं तु सपत्न्यां दुःखचेतसि ४६ एवमुक्त्वा जगामाशु मंदिरं स्वं शुभेक्षणा । पुनः पप्रच्छ कृष्णं सा प्रणिपातेन वै रुषा ४७

देव पृच्छामि ते सर्वं ननु तुष्टोसि मे प्रभो । कथं पश्यामि तामद्य नवोढां कृष्ण वल्लभाम् ४८ श्रीकृष्ण उवाच । दर्शयिष्ये ह्यह
पूर्वरूपां तां सुमध्यमे । विरूपश्रवणाक्षीं तां कुरूपां विकृताननाम् ४९ अदृष्टवैचित्र्यकृत रूपात्र न संशयः । इत्युक्त्वा रुक्मिणीं
कृष्ण सत्यभामां तदा ब्रवीत् ५० मार्थयाथ प्रियां सुभ्रू सुरूपाद्वादशीव्रतम् । तिलादपि हि षष्ठांशं देहि मे सेवका ऽस्म्यहम् ५१
मा गता तत्सकाशं तु पिधाय द्वारमादरात् । उवाच रुक्मिणीं सा तु सत्यभामा शुचिव्रता ५२ एकामप्याहुतिं देवि देहि भीष्मकनंदि-
नि । अर्धाहुतिर्वा मे देया यद्यस्ति मयि सौहृदम् ५३ रुक्मिण्युवाच । कोऽयं मतिभ्रमस्ते वै सुरूपाद्वादशीं प्रति । तिलाहुतिं प्रयच्छा
मि उद्घाटय कपाटकम् ५४ इत्युक्त्वा त्वरितं स्नात्वा दत्त्वा ह्येकां तिलाहुतिम् । तस्यां चैव प्रदत्तायां रूपेण सा ऽधिका ऽभवत् ५५
तां दृष्ट्वा विस्मयपरा पप्रच्छ दयितां हरेः । कथ्यतां मम का हि त्वं किमर्थमिह चागता ५६ सत्यभामोवाच । तवाहं भगिनी भद्रे
कृष्णेनोढास्मि धार्मिके । सत्यभामेति मे नाम नमामि चरणौ तव ५७ इति श्रुत्वा तु वचनं विस्मयोत्फुल्ललोचना । नोवाच किंच
चार्वङ्गी ह्यत्यर्थं विस्मिता ऽभवत् ५८ एतस्मिन्नेव काले तु वागुवाचाशरीरिणी ५९ तव दानप्रभावेण सत्यासीद्व सुरूपिणी । सुरूपा
द्वादशीपुण्यं देवानामपि दुर्लभम् ६० देव्युवाच । कर्मणा केन कर्तव्या किमाधारं वदस्व मे । नियमं होमदानं च प्रसादं मे विधीय
ताम् ६१ ईश्वर उवाच । पौषे कृष्णे तु संप्राप्ते पुष्यर्क्षं च यदा भवेत् । तस्यां रात्रौ संयतात्मा ध्यात्वा विष्णुं सनातनम् ६२ श्वेता गौ
रेकवर्णा वा तस्या ग्राह्य तु गोमयम् । अतरिक्षात्तु पतितं शुचिर्मौनमवस्थितः ६३ तस्य कृत्वाऽऽहुतीनां तु शतमष्टोत्तरं तिलैः । प्रतीक्षेद्वा
दशीं कृष्णामुपवासपरायणः ६४ स्नात्वा नद्यां तडागे वा विष्णुमेवाथ चिंतयेत् । सौवर्णं तु हरिं कृत्वा रौप्यं वा भक्तिशक्तितः ६५ तिल-

पात्रोपरिस्थं च ततो विष्णुं प्रपूजयेत्।इतिसंपूज्य विधिवत्पुष्पधूपैः सुदीपकैः ६६नैवेद्यं तिलमिश्रं तु फलानि विविधानि च ६७नमः परमशांताय विरूपाक्ष नमोस्तु ते । सर्वसंकटनाशाय गृहाणार्घ्यं नमोस्तु ते ६८ एवं संपूज्य देवेशं कुर्याद्धोमं समाहितः । आवाह्य देवं लक्ष्मीशं होयमेद्धोमयाहुतीः ६९ शतमष्टाधिकं चैव तिलान्व्याहृतिसंयुतान् । सहस्रशीर्षामंत्रेण हृदि ध्यात्वा जनार्दनम् ७० लक्ष्मीयुक्तं च मेघाभं शंखचक्रगदाधरम् । होमांते कारयेच्छ्राद्धं वैष्णवं द्विजसत्तमैः ७१ दत्त्वा च भोजनं तेभ्यो घृतकुंभं सदक्षिणम् । कथाश्रवणसंयुक्तं जागृयात्तु ततो निशाम् ७२ तत्कुंभं वैष्णवी मूर्तिं विप्राय प्रतिपादयेत् । मंत्रहीनं विहीनं च सर्वं तत्र क्षमापयेत् ७३ ईश्वर उवाच । एवं यः कुरुते देवि सुरूपा द्वादशीव्रतम् । नरो वा यदि वा नारी तत्र पुण्यं शृणुष्व मे ७४ दौर्भाग्यं नश्यते तस्य अपि जन्मांतरार्जितम् । अपि धूमस्य संपर्को जायते कारणांतरात् ७५ तस्यापि नश्यते दुःखं वैरूप्यं जन्मजन्मनि । पतिना न वियोगः स्यान्निष्टैः सह वियोगता ७६ जायते गोत्रवृद्धिः स्यात्कीर्तिमाञ्जायते भुवि । जातिस्मरणमाप्नोति पदं निर्वाणमाप्नुयात् ७७ पठ्यमानमिदं भक्त्या यः शृणोति समाहितः । पुण्यमाप्नोति सततं स्वर्गलोके महीयते ७८ इति श्रीभविष्योत्तरपुराणे सुरूपाद्वादशीव्रतकथोद्यापनं संपूर्णम् ॥ ॥ इति द्वादशीव्रतानि समाप्तानि ॥ ॥ छ ॥ ॥ अथ त्रयोदशीव्रतानि लिख्यंते ॥ ॥ तत्राषाढशुक्लत्रयोदश्यां जयापार्वतीव्रतम् ॥ भविष्योत्तरपुराणे—। श्रीलक्ष्मीरुवाच । देवदेव जगन्नाथ भुक्तिमुक्तिप्रदायक । कथयस्व प्रसादेन लोकानां हितकाम्यया १ नारीणां तु व्रतं देव ह्यवैधव्यकरं शुभम् । येन चीर्णेन नारीणामखंडफलदं भवेत् २ श्रीभगवानुवाच । सत्यमुक्तं त्वया देवि न च मिथ्या त्वयोदितम् । तद्व्रतं कथयिष्यामि नाख्यातं कस्यचित्पुरा ३ अकथ्यं परमं गुह्यं पवित्रं पापनाशनम्। येन चीर्णेन नारीणामवै-

घर्व्यं प्रजापते ४ आषाढे च प्रकर्तव्या शुक्लपक्षे त्रयोदशी । गृह्णीयान्नियमं मंत्रैर्दंतधावनपूर्वकं ५ तत्र मन्त्रः— आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ६ नियमात्फलमाप्नोति निष्फलं नियमं विना । एतत्सर्वं प्रयत्नेन व्रत नियम पूर्वकम् ७ एकभुक्तं व्रतं चैव करिष्ये ऽद्य मुदा ऽधुना । स्वादहीनेन धान्येन मम पापं व्यपोहतु ८ उमामहेश्वरौ कार्यौ सुवर्णरजतादिभिः । अथवा मृन्मया कार्यौ वृषस्कंधोपरिस्थितौ ९ गोष्ठे देवालये वापि तथा ब्राह्मणवेश्मनि । स्थापयेद्वेदमंत्रेण प्रतिष्ठां तत्र कारयेत् १० तद्दिने दंतकाष्ठं हि यौथिकं च वरानने । स्नानशुद्धिं ततः कृत्वा ततः पूजां प्रकल्पयेत् ११ सप्तर्षिभिः सम तत्र पूजा कृत्वा पृथक्पृथक् । कुंकुमागुरुकस्तूरीसिंदूरैश्चगंधकैः १२ चंपकैः शतपत्रैश्च यूथिकादिऋतूद्भवैः । श्रीवासमंत्रेण दूर्वाभिः पूजयित्वा विधानतः १३ अर्घ्यंण वारिशुद्धेन उत्तरीययुगेन च । श्रीफलद्राक्षदाडिंबैर्ऋतुजातफलेन च १४ आद्ये देवि च शर्वाणि शंकरस्य सदाप्रिये । अर्घ्यं गृहाण देवेशि ममोपरि कृपां कुरु १५ इति पूजा प्रकर्तव्या कथां शृणुयाद्द्विजोत्तमात् १६ श्रीमहालक्ष्मीरुवाच । अच्युताय नमस्तुभ्यं पुरुषायादिरूपिणे । व्रताध्यक्ष महाप्राज्ञ त्व वृद्धिक्षयकारक १७ कथयस्व प्रसादेन व्रतानामुत्तम व्रतम् । केन चादौ पुरा चीर्णं मर्त्यलोके च कारकः । एतत्सर्वं प्रयत्नेन ब्रूहि मे जगदीश्वर १८ श्रीभगवानुवाच । अथातः संप्रवक्ष्यामि पार्वत्याश्च कथामिमाम् । यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः १९ आसीत्पुरा कृतयुगे कौंडिन्ये नगरे वरे । ब्राह्मणो वेदतत्त्वज्ञः सत्यशौचपरायणः २० गुणवाञ्छीलसंपन्नो वामनो नाम नामतः । तस्य भार्या प्रिया सत्या रूपलक्षणसंयुता २१ धनाढ्यो वेदविदुषो गृहे वै सर्वसंपद । पूर्वकर्मविपाकेन संतान

१ 'पूर्वं' इतिमसिद्धायाः पुण्यवस्याः । २ कलमूलेन यज्ञोपवीतेन च । ३ योऽधुना करोतिसः । ४ वेदविदुरः तस्येत्पन्वयः ।

रहितो ऽभवत् २२ अपुत्रस्य गृहं शून्यं श्मशानसदृशं मतम् । दंपती तेन दुःखेन क्षीणौ जातौ शरीरतः २३ एकदा शुभकाले तु नारदो गृ-
हमागतः । अर्घ्यपाद्यादिकं कृत्वा कथां चक्रे ऽमुना सह २४ वामन उवाच । नारद त्वमृषिश्रेष्ठः सर्वज्ञानपरायणः । कथयस्व प्रसादेन क-
थं दुखं प्रशाम्यति २५ दानेन केन देवर्षे व्रतेन नियमेन च । तीर्थेन च मुनिश्रेष्ठ संतानं मे कथं भवेत् २६ नारद उवाच । शृणु विप्र प्रव-
क्ष्यामि संतानं ते भविष्यति । वनस्य दक्षिणे पार्श्वे बिल्वयूथसुमध्यतः २७ भवानीसहितः शूली लिंगरूपेण तिष्ठति । सपर्यां कुरु
यत्नेन तुष्टो दास्यति संततिम् २८ अपूज्यलिंगमभ्यर्च्य संततिश्च प्रजायते । अनाथप्रेतसंस्कारी कोटियज्ञफलं लभेत् २९ इत्युक्त्वा
नारदः स्वर्गे गतो वै मुनिपुंगवः । वनमध्ये गतौ द्वौ तु दंपती पुत्रकांक्षिणौ ३० बिल्वमध्ये ततो दृष्ट्वा शिवलिंगं पुरातनम् । बिल्वप-
त्रैश्च जीर्णैश्च पिहितं सर्वतस्ततः ३१ विहाय बिल्वपत्राणि स ममार्जोपलेपनम् । पंचामृतेन प्रक्षाल्य पूजां चक्रे मनोरमाम् ३२ नित्यं
नियमसंयुक्तः पूजयेत्परमेश्वरम् । पंचाब्दं पूजितस्तेन पार्वतीसहितो हरः ३३ एकदा तु गतः सोऽथ पुष्पार्थे ब्राह्मणोत्तमः । कुसुमं गृ-
ह्यते यावत्तावद्दृष्टः स पन्नगैः ३४ पतितस्तद्वने घोरं सिंहव्याघ्रसमाकुले । तृतीयेन मुहूर्तेन तद्भार्या ऽचिंतयत्तदा ३५ केनापि कारणेनैव
कथं नायाति मे पतिः । रुदंती शोकसंयुक्ता वनमध्ये गता सती ३६ आगता यत्र तत्रास्ते भर्ता च पतितो भुवि । भर्तारं पतितं दृष्ट्वा
तदा मोहमुपागमत् ३७ तत्पश्चाच्चेतनायुक्ता सा ऽस्मरद्वनदेवताम् । पार्वती तु समायाता यत्र तिष्ठति ब्राह्मणी ३८ आक्रंदमानां तां दृ-
ष्ट्वा पार्वती वरदा ऽभवत् । सुधां सुभगहस्तेन विप्रवक्त्रे विमुंचती ३९ उत्थितो ब्राह्मणस्तत्र निशीथे निद्रितो यथा । तावेव चरणौ गृह्य
दंपती विनयान्वितौ ४० पार्वत्याः पूजनं भक्त्या चक्रतुस्तौ मुदान्वितौ ॥ पार्वत्युवाच । त्वत्पूजनादहं प्रीता वरं वरय सुव्रते ४१ ब्रा-

ब्रह्मण्युवाच । त्वत्प्रसादेन रुद्राणि मया लब्ध च वांच्छितम् । सतान चैव मे नास्ति एतदुःख च मे हृदि ४२ पार्वत्युवाच । व्रत कुरु
विधानेन मम नाम्ना च विश्रुतम् । जया मम व्रत नाम त्रैलोक्ये पावन परम् ४३ जयापार्वतीव्रतं नाम आषाढे चारुलोचने । स्वाद
हीनेन धान्येन त्याज्य लवणमुत्तमम् ४४ एतद्व्रतं च कर्तव्यं भोक्तव्य दिनपचकम् । त्रयोदश्यां व्रतारभस्तृतीयायां समापनम् ४५ शुक्ल-
पक्षे व्रतारभः कृष्णपक्षे समापनम् । पश्चाच्च गोधुमान्नेन व्रत कार्यं प्रयत्नतः ४६ पश्चान्द हि यवैश्चैव व्रत तु लवणं विना । पश्चाच्च
तडुलैः कार्यमिक्षुरसविवर्जितम् ४७ मुद्गैः कार्यं पचवर्षमेवं ह्यायनविंशति । विंशत्यब्दे समाप्ते तु व्रतोद्यापनमाचरेत् ४८ दपत्यो परिधान
हि दद्याद्भूषणपूर्वकम् । भोजन च सुवासिन्यै तृतीयायां यथोदितम् ४९ विंशतिप्रथमे वर्षे विप्रशाल्यमतःपरम् । पचके पचके कार्यं परि
धानैश्च भोजनैः ५० नानारसैः समायुक्त घृतसक्तसमन्वितम् । समर्त्कास्यो दातव्य भोग्यं सौभाग्यहेतवे ५१ कुकुमं कज्जल देयमब्दे
ऽब्दे तु स्वशक्तितः । रात्रौ जागरण कुर्यात्सर्वफलद भवेत् ५२ अनेन विधिना यस्तु कुरुते व्रतमुत्तमम् ५३ रात्रौ जागरण कार्यं व्रतसपूर्ण
हेतवे । व्रतेन तु विना नारी विधवा जन्मजन्मनि ५४ शोचती तु ससयुक्ता न च सौभाग्यभाग्भवेत् । नारीणां तु व्रतैर्दानैर्यदि भक्त्या ततः
परम् ५५ सौभाग्यमतुल याति पतिसतोषदानतः । एवमुक्त्वा व्रतमिदं तत्रैवांतरधीयत ५६ पश्चाद्गृहं समागत्य दपती च मुदान्वितौ । पू
र्वकेन विधानेन प्राप्त पुत्रसुखं तयोः ५७ दपतीभ्यां विशेषेण अवैधव्य परं सुखम् । भुक्त्वा च विविधान्भोगानते प्राप्त शिवालयम् ५८
एव या कुरुते नारी न च भर्त्रा वियुज्यते । कुलत्रय समुद्धृत्य नीयते शिवमदिरम् ५९ सान्निध्यसुखमाप्नोति शिवलोके महीयते । कथां श्रुत्वा
विधानेन सर्वपापात्प्रमुच्यते ६० इति श्रीभविष्योत्तरपुराणे जयापार्वतीव्रतोद्यापन संपूर्णम् ॥ इदं गुर्जरदेशे गुर्जराचारप्राप्तम् ॥ ॥

अथ भाद्रपदशुक्लत्रयोदश्यां गोत्रिरात्रव्रतम् ॥ हेमाद्रौ भविष्योत्तरे—। युधिष्ठिर उवाच । भगवंस्त्वत्प्रसादेन बहूनि सुव्रतानि मे । श्रुतानि बहुपुण्यानि कृतानि मधुसूदन १ सर्वपापहराणि स्युः सर्वकामप्रदानि च । सांप्रतं श्रोतुमिच्छामि व्रतानामुत्तमं व्रतम् २ किंचिद्योगव्रतं ब्रूहि यदि तुष्टोसि माधव । यत्कृत्वा सर्वपापेभ्यो नरो नारी प्रमुच्यते ३ श्रीकृष्ण उवाच । कथयामि नृपश्रेष्ठ व्रतानामुत्तमं व्रतम् । यन्न कस्यचिदाख्यातं तच्छृणुष्व नृपोत्तम ४ यान्यान्कामान्वांछयति लभेत्तांस्तांस्तथैव च । तत्क्षणादेव मुच्यंते नरा नार्यश्च सर्वशः ५ प्रभोर्भगवतो राजन् कामधेनोः प्रसादतः । सौभाग्यं संततिं लक्ष्मीं प्राप्नोति सुखमुत्तमम् ६ युधिष्ठिर उवाच । यदि तुष्टोसि भगवन् व्रतस्यास्य विधिं शुभम् । ब्रूहि मे देवदेवेश करोमि त्वत्प्रसादतः ७ के मंत्राः के नमस्कारा देवतार्थे प्रकीर्तिताः । किं दानमत्रमर्घ्यं च कथयस्व सुरोत्तम ८ श्रीकृष्ण उवाच । नारदेन पुरा राजन्यदुक्तं सगरादिषु । स्मारितं तत्त्वया राजन् शृणुष्वैकमना व्रतम् ९ मासिभाद्रपदे शुक्ले त्रयोदश्यांसमारभेत् । त्रयोदश्यां प्रभाते तु समुत्थाय शुचिर्भवेत् १० गृह्णीयान्नियमं पूर्वं दंतधावनपूर्वकम् । आचम्योदकमादाय इमं मंत्रमुदीरयेत् ११ गोत्रिरात्रव्रतस्यास्योपवासकरणे मम । शरणं भव देवि त्वं नमस्ते धेनुरूपिणी । प्रसीदतु महादेवो लक्ष्मीनारायणः प्रभुः १२ लक्ष्मीनारायणं देवं सौवर्णं वा स्वशक्तितः । पंचामृतेन गव्येन स्नापयेत्कमलापतिम् १३ स्थापयेत्सर्वतोभद्रे मंडलेष्टदलेपि वा । गंधपुष्पैः सनैवेद्यैः स्तुतिगीतादिनर्तनैः । नारिकेलार्घ्यदानेन प्रीणयेद्वा हरिं तथा १४ लक्ष्मीकांत जगन्नाथ गोत्रिरात्रव्रतं मम । परिपूर्णं कुरुष्वेदं गृहाणार्घ्यं नमोस्तु ते १५ आर्तिक्यं च ततः कुर्याद्भक्त्या कृष्णस्य तुष्टिदम् । नवकुंभं जलभृतं हविष्यान्नेन पूरितम् १६ कृत्वा दिनत्रयं पार्थ प्रीतये विनिवेदयेत् १७ धेनुपूजां ततः कुर्याज्जलधारां प्रदक्षिणाम् । पुरा दत्त्वा तु मुकुटं कुंडलं कुंकुमं तथा १८ अन्नाच्छादनगं-

धादिदिव्यपुष्पैः सदीपकैः । अहोरात्रभवं किंचिद्घृतदीप दिनत्रयम् १९ अर्घ्यदान ततः कुर्यान्नारिकेलादिभिः फलैः २० अर्घ्यमंत्रः– पंच
गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नंदा तस्यै धेन्वै नमो नमः २१ प्रदक्षिणीकृता तेन सप्तद्वीपावसुंधरा । गावो ममाग्रतः
संतु गावो मे संतु पृष्ठतः २२ गावो मे हृदये संतु गवां मध्ये वसाम्यहम् । आरार्तिकं सनैवेद्य गीतवाद्यमहोत्सवैः २३ कुंकुम कज्जल सूत्र धे
न्वै दद्याद्विचक्षणः । एवं संपूज्य तां धेनुं सम्यग्भक्त्या दिनत्रयम् २४ यवांश्च यवसं चैव चारयेत्पाययेदपः । गोमयादागतैर्धौतैः कुर्यात्तैरेव
पारणम् २५ धेन्वै प्रजागरं कुर्यात्सर्वपापप्रणाशनम् । त्रिविधान्मुच्यते पापात्प्रहरार्धेन पांडव २६ तस्योत्तरात्कृतात्पापात्प्रहरार्धेन मुच्यते ।
चत्वारि वेणुपात्राणि कारयित्वा प्रपूरयेत् २७ नारिकेलगुडदलद्राक्षाखर्जूरदाडिमैः । शुभैर्विरूढैः सिंदूरैर्वस्त्रकुंकुमकज्जलैः २८ प्रथमे बीजपूरा
र्घ्यं द्वितीये दाडिमं शुभम् । तृतीये नारिकेलं च दद्यादर्घ्यं दिनत्रयम् २९ प्रकारास्तु त्रयः कार्या हविष्यान्नेन पूरिताः । लक्ष्मीनारायणं देवं
ब्राह्मणं भार्यया सह ३० पूजयेत्कुसुमैर्वस्त्रैर्हेमसूत्रैर्युधिष्ठिर । दंपत्योर्भोजनं देयं धेनुभक्त्या दिनत्रयम् ३१ पारणे गौरिणीं विप्रान्मिष्टान्नघृश्व
भोजयेत् । गुरूपाय तां धेनुं द्विजाय प्रतिपादयेत् ३२ सकुंकुमां सवत्सां च घंटामुकुटभूषिताम् । गीतवादित्रनृत्यादिशांतिपाठपुरः सर
म् ३३ यायाद्विप्रगृहं यावत्प्राप्तये तत्फलस्य वै । एवं या कुरुते पार्थ गोत्रिरात्रव्रतोत्तमम् ३४ दुर्लभं तु सदा स्त्रीणां नारीणां नृपसत्तम ।
अश्वमेधसहस्राणि वाजपेयशतानि च ३५ कृत्वा यत्फलमाप्नोति गोत्रिरात्रव्रते कृते । प्रभासे च कुरुक्षेत्रे चंद्रसूर्यग्रहे तथा ३६ हेम
भारशतं दद्यात्फलं तत्प्राप्नुयान्नृप । धेनुदानं ततः पश्चात्सवत्सं सर्वकामदम् ३७ सागरांबरसंयुक्ता दत्ता तेन वसुंधरा । एवं या कुरुते पार्थ
त्रिरात्रव्रतमुत्तमम् ३८ भवांतरकृतात्पापात्त्रिविधान्मुच्यते नरः । या वा काचिन्न पश्येत भर्तृदुःखं नराधिप ३९ पुत्रपौत्रसुखं तस्य भ-

विष्यति न संशयः। जन्मांतरेप्यसौ नारी वैधव्यं नैव पश्यति ४० वैधव्यं च महद्दुःखं न भवेत्तु भवांतरे । अपुत्रा लभते पुत्रान् धनही-
ना धनं लभेत् ४१ कायेन मनसा चैव कर्मणा यदुपार्जितम् । तत्सर्वं विलयं याति गोत्रिरात्रव्रतेन वै ४२ इह भोगान्सुविपुलान् भु-
क्त्वायुः पूर्णमेव च । व्रतस्यास्य प्रभावेण गोलोके च महीयते ४३ कीर्तिदं धनदं चैव सौभाग्यकरणं नृप । आयुरारोग्यकरणं सर्वपाप-
प्रणाशनम् ४४ एतस्मात्कारणाद्राजन् सभार्यस्त्वं कुरु व्रतम् । राज्यं वा यदि सत्कीर्तिं नित्यं प्राप्तुमिहेच्छसि ४५ तच्छ्रुत्वा पांडवश्रेष्ठो
व्रतं चक्रे समाहितः । व्रतस्यास्य प्रभावेण लब्धं राज्यमकंटकम् ४६ इति हेमाद्रौ भविष्ये गोत्रिरात्रव्रतम् ॥ ॥ अथाश्विनशुक्लत्रयोदश्यां
गुर्जराचारप्राप्तगोत्रिरात्रव्रतम् ॥ युधिष्ठिर उवाच । येन लक्ष्मीश्च सकला नराणां भवने भवेत्। संततिर्वर्द्धते स्त्रीणां तद्व्रतं वद मे प्रभो १
श्रीकृष्ण उवाच । श्रृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । येन वै क्रियमाणेन सर्वपापक्षयो भवेत् २ गोत्रिरात्रमिति ख्यातं नृस्त्रीणां
फलदायकम् । वांछितं जायते तेषां येषां चेतसि वर्तते ३ युधिष्ठिर उवाच । कीदृशं तद्व्रतं देव विधानं तत्र कीदृशम् । कथमेषा समुत्पन्ना क-
स्मिन्काले तु केशव ४ श्रीकृष्ण उवाच । पुरा कृतयुगे पार्थ मनुर्नाम बभूव ह । वैवस्वतकुले जातो बभूव पृथिवीपतिः ५ तदन्वये
दिलीपश्च प्रसूतः पतिरुत्तमः । नृपाः सर्वे वशं तस्य संजाताः करदायकाः ६ नित्यं धर्मपरो राजा पूजनीयो मनीषिभिः । न जायते
सुसंतानं तस्य नीतिमतः सदा ७ वांच्छयंस्तनयं राजा सर्वकोसलपालकः । पुत्रार्थे च सपत्नीको वसिष्ठस्याश्रमं ययौ ८ पश्यन्हि पथि
कल्याणं सारसैस्तोरणं कृतम् । विविधानि अरण्यानि मार्गेषु फलितानि वै । राजा महिष्या सहितो गजारूढः सवाहनः ९ संध्यायां यो-
गिनस्तस्य महर्षेः प्रापदाश्रमम् । सारथिं च समादिश्य वाजीन्विश्रामयेत्यथ १० रथादुत्तीर्य दंपत्यावाश्रमं जग्मतुर्मुनेः । स्थितं कर्मणि

सध्यायां दिलीपो ददृशे गुरुम् ११ अरुंधत्या सहासीनं सावित्र्येव पितामहम् । तौ प्रणम्य गुरुं तत्र मुनिपत्नीं विशेषतः १२ स्थितौ
तस्य समीपे तु प्रीतावानदपूरितौ । दिलीपं च तथाऽत्यर्थं धर्मज्ञं लोकपालकम् १३ पप्रच्छ कुशलं राज्ये वसुधायाश्च वै मुनिः ॥ दिलीप
उवाच । कुशलं मे सदा देव स्थिते त्वयि गुरौ सति १४ सुराणां च मनुष्याणां विपदो रक्षिता भवान् । विषये मम कांतायामपत्यं किं
न जायते १५ किंतु कार्यं वरिष्ठ्या मे निराशाः पितरो गताः । तथा कुरु मुनिश्रेष्ठ पुत्रो भवति मे यथा १६ राज्ञां विपदि प्राप्तायां
तदापत्यसुखं मुने । वदेति कथितं राज्ञा मुनये वै युधिष्ठिर १७ तदा मुनिः क्षणं तस्थौ ध्यानस्तिमितलोचनः । कारणं संतते रा
ज्ञो मुनिर्दृष्ट्वा समाधिना १८ पश्चान्निवेदितं तस्मै दिलीपाय प्रयत्नतः ॥ वसिष्ठ उवाच । पूर्वं वृत्रारिमाराध्य वसुधां गच्छता
त्वया १९ कल्पमूले च तिष्ठन्ती कामधेनुर्न वंदिता । जातस्तस्यास्तदा कोपो दत्तस्ते शाप ईदृशः २० न वंदिताऽहं भवता साम्
तं यदि भूमिप । भविष्यति न ते पुत्रस्तच्छापो न श्रुतस्त्वया २१ न पूजयेत्पूज्यानां वचनानां यो न वदते । न जायते तु कल्याण
पातकैरेव लिप्यते २२ दिलीप उवाच । कृतो मयाऽपराधोऽस्य करोमि किमहं मुने । संततिर्जायते येन तद्व्रतं वद मे प्रभो २३ वसिष्ठ
उवाच । अन्यैर्नानाविधैः पुण्यैस्तपोभिर्नृप दुःसहैः । न जायते तु संतानं गोत्रिरात्रव्रतं विना २४ सपत्नीक सवत्सां मे धेनुं राजन्फलप्रदाम् ।
आराधयैकाग्रमना गोत्रिरात्रव्रतं कुरु २५ यावदित्थं दिलीपस्य मुनिना कथितं व्रतम् । तावच्च नंदिनीधेनुर्वनादावव्रते शुभा २६ कुंभोघ्नी
ग्रीवलंबा सुतसुखफलदा नंदिनी लोकमाता देवानां वरदा क्षुमोदधिभवा कामप्रदा पाटला । गीर्वाणाः सकलाः स्तुता वपुषि वै तिष्ठंति
यस्याश्च वै संपूर्णाः शशिनं कलाश्च दधती श्रेयस्करी पौर्णिमा २७ माघे मासि समायातु शुक्लपक्षे तु पार्थिव । प्रातः कुर्यात्त्रयोदश्यां

नियमं तु सुभक्तितः २८ समुपोष्य गोत्रिरात्रं भक्त्या कृत्वा व्रतं तव । भोक्ष्येऽहनि चतुर्थेऽहं सौभाग्यं देहि गौर्मम २९ ( इति नियममंत्रः ) ततो गावं समभ्यर्च्य मंडले गंधदीपकैः । तगरैः शतपत्रैश्च चंपकाद्यैः शुभाननाम् ३० गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः । गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ३१ पंच गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नंदा तस्यै धेन्वै नमो नमः ३२ ( इतिपूजामंत्रः ) फलैर्नानाविधैः पुष्पैर्गंधैरपि स्वशक्तितः । पूजनीयाः प्रयत्नेन दद्यादर्घ्यं विधानतः ३३ नारीकेलं सकूष्मांडं मातुलिंगं च दाडिमम् । हविष्यान्नं च नैवेद्यं कारयेद्यवसंयुतम् ३४ गोत्रिरात्रव्रतार्थाय सफलं च करे धृतम् । सर्वकामप्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते ३५ ( इत्यर्घ्यमंत्रः ) वस्त्रयुग्मं विधानेन दद्याद्वासांसि दक्षिणाम् । सपत्नीकाय गुरवे स्वशक्त्या च व्रती नरः ३६ दिनानि व्रतिभिस्त्रीणि श्रोतव्या च कथा शुभा । जितक्रोधैस्ततः सर्वैस्त्रिभिर्वा पुरुषैरपि ३७ एवं संपूज्य विधिवल्लक्ष्मीयुक्तं तु केशवम् । चतुर्थे दिवसे प्राप्ते ततो धेनुं विसर्जयेत् ३८ ततो धेनुं सवत्सां तु मंत्रेणानेन पार्थिव । दद्याद्विप्राय विदुषे धर्मिणे शास्त्रज्ञानिने ३९ परिपूर्णव्रतं कृत्वा दत्त्वा कामानभीप्सितान् । विप्राय त्वं मया दत्ता मातर्गच्छ यथासुखम् । ( दानमंत्रः ) ४० सर्वदानानि देयानि स्वशक्त्या व्रतिभिर्नरैः । विविधेभ्यो द्विजेभ्यश्च दक्षिणां च स्वशक्तितः ४१ वित्तशाठ्यं न कृत्वा तु दापयेच्च ततो नरः । गृहं स्वावद्व्रजेत्पृष्ठे गीतनृत्यपुरःसरम् ४२ गोपालानां च पाथेयं दद्याद्वै धेनुतुष्टये । यवाद्याश्चारिता नित्यं फलैर्नानाविधैः सह ४३ मुक्ता वै कामधेन्वा च संयुक्ता गोमयेन तु । पारणं तैः प्रकर्तव्यं सर्वैरिष्टजनैः सह ४४ सपत्नीकाय गुरवे दद्याच्चान्नं सदक्षिणम् ४५ श्रीकृष्ण उवाच । भाद्रे मासि सिते पक्षे त्रयोदश्यां नराधिप । एवमाराध्य तां धेनुं दिलीपो भक्तितत्परः ४६ ततः प्रजानामधिपः प्रभाते सुरभिं मुनेः ।

सुपूजितां विधानेन मुमोच त्वरितं शुचिः ४७ संध्यायाः प्रभृति स्थित्वा आययौ पुनराश्रमे । अर्थी सुदक्षिणा कर्तुं गृहीत्वा विधिव
द्बलिम् ४८ ययौ धेनोः समीपे तु बलिं कृत्वा दिनत्रयम् । अनुयातस्ततो धेनोर्वनं गत्वा ततःपरम् ४९ जयशब्द प्रवदतः पक्षिणः सु
दराननाम् । दृष्ट्वा च वनदेवीभिर्गीयमानं तथा यशः ५० सुश्राव च ततो राजा भृशं मनसि हर्षितः । चिरं शुभे वने व्यक्ते भूमिपे
भ्रामिते सति ५१ धेनुश्च शुश्रूमे राज्ञा राजा धेन्वा बभौ पुनः । तद्दिने च मुनेर्धेनू राज्ञो भाव च पश्यती ५२ विवेश गह्वरं तत्र पा
र्वत्यास्त्व पितुर्द्रुमे । कृत्रिमश्च कृतः सिंहो मुनिधेन्वा भयकरः ५३ सिंहश्च दधृशे राज्ञा धेनुं कर्षन्बलेन वै । दृष्ट्वा राज्ञा च तां धेनुं क्रं
दमानां स्वरोत्स्वनैः ५४ ततो धनुर्धरः सोपि तां मोक्तुमुपचक्रमे । वध्यसिंहवधार्थाय राजा बाणं करे दधौ ५५ उत्पन्नस्तु तदा शोकः
कोपयुक्तो बभूव सः । धनुष्यारोपयन्बाणं चित्रन्यस्त इव स्थितः ५६ हस्तस्य निश्चलत्वेन क्रोधस्तस्य व्यवर्द्धत । विस्मयं प्रापयन्सिं
हो राजानं वै युधिष्ठिर ५७ मानवस्य गिरा प्राह दुष्टत्वेन गवि स्थितः ५८ सिंह उवाच । बाणः प्रयुक्तो भवता वृथा मयि भविष्यति । ततः
कष्टेन महता श्रमं मा कुरु सर्वथा ५९ मा मारुतस्य वेगोपि पर्वतोन्मूलने क्षमः । जायते न महाराज गवां ककुदि वै स्थितः ६०
महेश्वरस्य मां राजन्नाम्ना कुम्भोदरेण तु । सेवकानां च सर्वेषां मुख्यं जानीहि भूमिप ६१ विलोकयेमं पुरतो देवदारुमहाद्रुमम् । सिक्तः
स्नेहेन भूपाल शिवया च सुतः कृतः ६२ कदाचिदागतो हस्ती भग्नस्तेन महाद्रुमः । तस्य संरक्षणार्थाय नियुक्तोहं शिवेन तु ६३ कृत्वा
शिवेन सिंहत्वमुक्तोहं तीव्रमोजने । तदीयं सत्त्व गौ राजन् भक्ष्या मे समुपागता ६४ त्यक्त्वा लज्जां निवर्तस्व भक्तोसि गुरवे भवान् ।
आपत्काल इद वृत्तं न स्याच्छस्त्रभृतो यदि ६५ दोषो न जायते तस्य यशो राजन्न गच्छति । श्रुत्वा गिरं च सिंहस्य राजा चैनमुवाच

ह ६६ दिलीप उवाच । ईश्वरेण समो नान्यो यदि सिंहो भवानपि । समीपाच्च कथं याति मम धेनुर्गुरोरियम् ६७ प्रसीद भक्ष मे देहं धेनुं
मुंच सवत्सकाम् । भविष्यति जनन्याश्च वत्सो मार्गं विलोकयन् ६८ सिंहेन तु दिलीपश्च कथितो वै तदा पुनः ६९ देहांतरे च दृष्टानि
भयंकाराणि कुर्वताम् । स्तोकेन हेतुना पार्थ कीर्तिच्छत्रं च सत्कृतम् ७० सर्वस्य जगतो राज्यं वपुरेतन्नवं वयः । त्यक्तुमिच्छसि वा रा-
जन्मूर्खस्त्वमीदृशः कथम् ७१ ददाति च कथं प्राणान् प्रजापालनतत्परः । जीवन्न किं महाराज मुनेः कोपमपास्यसि ७२ ततो रक्षय देहं
स्वं राज्यं स्वं कुरु भूमिप ७३ यावच्चोवाच सिंहोऽसौ नगेनानुगतां गिरम् । दिलीपोऽपि तदा पार्थ वाणीमेतामुवाच ह ७४ धेन्वा निरी-
क्षितश्चैव भूमिपो दीनया गिरा ॥ दिलीप उवाच । किं नो राज्येन मे सिंह विषये जीवनेन वा ७५ यशो गतं च मे सर्वं यदि धेनुं ग्रसि-
ष्यसि । एवमुक्त्वा ततश्चाग्रे सिंहस्य पतितस्तदा ७६ यावदित्थं च पतितो मांसस्य पिंडवन्नृपः । तावत्सिंहो रवं कृत्वा धावितश्च भयं-
करः ७७ दृष्ट्वा सिंहनिपातं च चंचलो न बभूव ह । तावत्तस्योपरिष्टाच्च पुष्पवृष्टिः पपात वै ७८ उत्तिष्ठ वत्स भूपाल वाचमित्थं निशम्य
सः । उत्थितस्तु पुनश्चाग्रे गां ददर्श न वै हरिम् ७९ सेवया च गुरोः पार्थ भक्त्या चापि विशेषतः । प्रीता कामदुघा तस्य वरं वरय
सुव्रत ८० योजयित्वा करौ राजा ययाचे तनयं ततः । वंशकर्ता महाप्राज्ञः शिवभक्तो निरंतरम् ८१ गौरुवाच । गोत्रिरात्रव्रतं राजन्यद्भ-
क्त्या भवता कृतम् । भविष्यति च ते दक्षः पुत्रः पौरुषविग्रहः ८२ अन्येपि ये करिष्यंति गोत्रिरात्रव्रतं मम । तेषां कामं च दास्यामि
मनसीष्टं न संशयः ८३ इत्युक्त्वा चलिता धेनुर्वसिष्ठस्याश्रमं प्रति । बलिं संगृह्य विधिवद्ययावाशु सुदक्षिणा ८४ पूजां कृत्वा विधा-
नेन राजपत्नी विशेषतः । प्रदक्षिणात्रयं कृत्वा चलिता वै युधिष्ठिर ८५ आश्रमं च ततो गत्वा दिलीपो ऽसौ पुनस्तदा । गुरोरग्रे च त-

तस्यै दृष्यातमवदत्पुनः ८६ नदितौ च तदा पार्थ दंपती तौ सुकोमलौ । पारणं च ततः कृत्वा प्रस्थितौ नगरं प्रति ८७ हुताशं च नमस्कृत्य होतारं मां तथैव च । आगतश्च ततो राजा त्वयोध्यानगरं पुनः ८८ दिलीपश्च महाराज प्रजापालनतत्परः । दिनैः कतिपयैरेव गोत्रिरात्रप्रभावतः ८९ राज्यं च कुर्वतस्तस्य सुषुवे महिषी तदा । प्रभाते सुमुहूर्ते च उत्पन्नो रघुवंशजः ९० रम्यं जातं सदा सर्वं सजाता निर्मला दिशः । आददे ब्राह्मणेभ्यश्च गावो वै वत्ससंयुताः ९१ मृदंगस्य स्वनैर्दिव्यै रम्यं जातं पुरं महत् । प्रजाः सर्वास्तदा पार्थ वदंति स्म पुनः पुनः ९२ गोत्रिरात्रप्रभावाच्च राज्ञः पुत्रो बभूव ह । पुरंदरस्य जेता च महाधर्मपरायणः ९३ दिशां जेता च यज्ञस्य कर्ता सोपि युधिष्ठिर । तदाप्रभृति लोकेऽस्मिन्लोकाः कुर्वंति तद्व्रतम् ९४ देवैः सर्वैः कृतं तत्र सर्वकामार्थसिद्धये । सर्वाभिर्देवपत्नीभिः कृतं च व्रतमुत्तमम् ९५ गोत्रिरात्रव्रतं पुण्यं विधानेन फलप्रदम् । कुरुष्व त्वं महाराजन्भक्त्या चापि युधिष्ठिर ९६ साक्षादनंतरं मातुः कृत्वा मनसि वर्तते । मादृपदे सपत्नीं तु भक्त्या त्वाराधयस्व माम् ९७ एवं यः कुरुते भक्त्या गोत्रिरात्रव्रतं पुनः । सिद्ध्यंति सर्वकार्याणि सुखं चैव प्रवर्द्धते ९८ कर्तव्यं सुप्रयत्नेन गोत्रिरात्रव्रतं शुभम् । तपोभिर्दुष्करैः किंचिन्नैवास्तीर्थैर्गयादिभिः ९९ न भवेच्च फलं राजन्भवेत्तस्य विधानतः १०० कुर्वंति ये व्रतमिदं जगति प्रसिद्धं पापापहं सकलवांछितकामदं च । आरुह्य चैव तु विमानमनुत्तमं च स्वर्गं प्रयाति यमतो हि भयं विहाय १ इति गोत्रिरात्रव्रतम् ॥ ॥ अथोद्यापनम् ॥ युधिष्ठिर उवाच । कथयस्व महापुण्यं गोत्रिरात्रव्रतस्य वै । उद्यापनविधिं कृष्ण येन चीर्णेन तत्फलम् १ श्रीकृष्ण उवाच । वर्षे चतुर्थे संप्राप्ते गोत्रिरात्रव्रतस्य वै । उद्यापनविधिं वक्ष्ये सर्वेषां व्रतसिद्धये २ तृतीये दिवसे स्नायान्मध्याह्ने विधिपूर्वकम् । देवान्पितॄन्समभ्यर्च्य शुद्धे च स्वगृहे व्रती ३ रात्रौ च सर्वतोभद्रं गौरीतिलकमेव च । पूजयेत्पंचभिर्वर्णैः शोभमानं भवेद्यथा ४

ताम्रस्य कलशं कृत्वा पूर्णपात्रसमन्वितम् । माषेण च सुवर्णेन लक्ष्मीनारायणं प्रभुम् ५ नूतनं वस्त्रयुग्मं तु सूक्ष्मं तत्र प्रकल्पयेत् । वंशपात्राणि कुर्वीत सौभाग्यद्रव्यसंयुतैः ६ विरूढवस्त्रपक्वान्नैर्नारीकेलादिभिः फलैः । विलेपनैश्च पुष्पैश्च धूपैर्दीपैस्तथोत्तमैः ७ पंचामृतैश्च नैवेद्यैः पूजयेद्विधिपूर्वकम् ॥ लक्ष्मीनारायणं देवं गां सवत्सां विशेषतः ८ रात्रौ जागरणं कृत्वा गीतवादित्रनिस्वनैः ॥ ततः प्रभातसमये होमं कुर्याच्च वैष्णवैः ९ आचार्यं वरयेत्तत्र वेदवेदांगपारगम् । तदाज्ञया च कर्तव्यं साधु कर्म प्रयत्नतः १० तिस्रो गावः प्रदातव्या एका वापि सवत्सका । बहुदोग्ध्री सुशीला च तरुणी च सुशोभना ११ दंपती परिधानं च वस्त्रैराभरणैः शुभैः ॥ शय्यां सोपस्करां दद्यात्पानपात्रं कमंडलुम् १२ चामरं घृतपात्रं च तिलपात्रं सदक्षिणम् ॥ दानानि च सुवर्णानां भोज्या गव्येन वै द्विजाः १३ एवं धेनुं च विप्राय दत्त्वा च पृष्ठतो व्रजेत् ॥ पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् १४ अथान्यानि च दानानि दद्याद्विप्रेभ्य एव च॥भूयसीं दक्षिणां दद्याद्व्रतसंपूर्णहेतवे १५ गोपालेभ्यश्च पाथेयं शष्कुल्यादि च कंबलम् ॥ सर्वं क्षमापयित्वा तु पारणं च ततश्चरेत् १६ अनाथैर्व्याधियुक्तैश्च सीदद्भिश्च कुटुंबकैः ॥ गवा भक्षितमन्नं च दुग्धेन परिपाचितम् १७ तेनान्नेन प्रकर्तव्यं देहस्य परिपालनम् ॥ भक्तिभावे द्विजानुज्ञां गृह्णीयुर्व्रतिनः सदा १८ तया तत्पूर्णतामेति नान्यथापि कदाचन ॥ एवमुद्यापनं कार्यं व्रतस्य फलमिच्छता १९ नारी वा पुरुषो वापि पुत्रवाञ्जायते ध्रुवम् । इहलोके सुखं भुक्त्वा अंते गोलोकमाप्नुयात् २० श्रीकृष्ण उवाच । एतत्ते कथितं राजन्व्रतस्योद्यापनं शुभम् । श्रोष्यंतिये पठिष्यंति तेषां सर्वे मनोरथाः २१ ये करिष्यंत्यसंदेहं तेषां लोकाश्च शाश्वताः २२ इति श्रीभ० गोत्रिरात्रव्रतकथोद्यापनं संपूर्णम् ॥ ॥ अथ चैत्रशुक्लत्रयोदश्यामशोकत्रिरात्रव्रतं भविष्ये ॥ सा च पूर्वा ग्राह्या । तत्र त्रयोदशीतिथिः पूर्वासितेति दीपिकोक्तेः । श्रीकृष्ण उ-

वाच । शृणु राजन् पुरा वृत्तमयोध्यायां व्रतं शुभम् । वसिष्ठेन मुनीन्द्रेण सीतायै यन्निवेदितम् १ विधाय रावणवधं यदा रामः पुरेऽभ्यगात् ॥
तदा देवी प्रणम्याथ वसिष्ठं वाक्यमब्रवीत् २ सीतोवाच । भगवन्दण्डकारण्याद्रावणेन हृता पुरा । न पश्यामि तदा किंचिदात्मीयं विकलें-
द्रिया ३ लंकायां प्रापिता तेन राक्षसेन हृता ग्रहम् । अशोकवृक्षे प्रणता महाचिंतापरायणा ४ उक्तं त्रिजटया तत्र वाक्यं हेत्वर्थसंयुतम् ।
अशोकस्य व्रतं कृत्वा विशोका त्वं भविष्यसि ५ तथेत्युक्तं मया ब्रह्मन् यथोक्तं त्रिजटावच । ततः प्रभृत्यहं शश्वदशोकव्रतमारभ
म् ६ तेन व्रतप्रभावेण हनुमान्पवनात्मजः । शतयोजनविस्तीर्णं तीर्त्वा सागरमद्भुतम् ७ मया दृष्टः कपिश्रेष्ठः साभिज्ञानो महाबलः । पु
नश्च कुशली जातो दग्ध्वा लंकां महाबलः ८ ततो मे प्रत्ययो जातो व्रतस्यास्य महामुने । व्रतराजप्रभावेण रामः प्रीतो महाहरिः ९ ततः
कैश्चिदहोरात्रैर्भर्ता मे राघवो बली । निहत्य रावणं सख्ये मां विशुद्धां गृहीतवान् १० तदहं भगवन्निमं पृच्छामि त्वां दृढव्रतम् । अ
शोकस्य प्रभावं मे वक्तुमर्हस्यशेषतः ११ व्रतस्य तस्य पुण्यं तु पुराणोक्तं महीतले । अथवा सुरलोकेषु सुरनारीनिषेवितम् १२ वसिष्ठ
उवाच । एवमेतज्जनकजे यथा वदसि सुव्रते । अशोकस्य प्रभावेण रामो दृष्टः पुनस्त्वया १३ शृणु चात्र महाख्यानं नंदने दिव्यका
नने । बृहस्पतिमुखाल्लब्धं यज्जातं परमाद्भुतम् १४ वृत्रासुरमहायुद्धे देवेंद्रश्च महासुरम् । निहत्य सर्वधर्माणां स्थापनं च चकार ह १५
ब्रह्महत्यामवाप्याथ देवेंद्रो नष्टचेतनः । त्रैलोक्यराज्यं त्यक्त्वा ऽप्सु ममज्जारिभयार्दितः १६ एतस्मिन्नंतरे देवि नहुषो नृपसत्तमः । त्रै-
लोक्यराज्यं सकलं जहार बलदर्पितः १७ ततः शची प्रव्यथिता हृतं राज्यमवेक्ष्य सा । नंदनांतं समासाद्य तपस्तेपे सुदुष्करम् १८
तां श्रुत्वा धर्मनिरतां बृहस्पतिरुदारधीः । आगत्य नंदनं देवीं वाक्यमाह महातपाः १९ बृहस्पतिरुवाच किमर्थं तप्यते देवि तपः परम

दुष्करम् । त्वया किं प्रार्थ्यते तेन तपसा ब्रूहि कारणम् २० शच्युवाच । हत्याभिभूतं देवेंद्रं हतराज्यं हतद्विषम् । क्वापि प्रनष्टं तं विप्र न जानेहं प्रियं पतिम् २१ एतस्मात्कारणाद्ब्रह्मन् तप उग्रं समाश्रितम् । यथा पुनर्निजं राज्यं देवेंद्रः प्राप्नुयादिति २२ क्व तिष्ठति मुने ब्रूहि सुरराट् शत्रुतापनः । प्रसीद कुरु मे देव संयोगं तेन चाप्नुयाम् २३ वाचस्पतिरुवाच । शृणु पौलोमि देवेंद्रो यथा नष्टो भयातुरः । मानसांभसि संभूतं पंकजांतरमाश्रितः २४ वृत्रहत्याप्रभावेण ह्युद्वेगं गुरुमाश्रितः । अभिभूतमिवापश्यंस्ततोऽप्सु निलयं गतः २५ कामं तपःप्रसंगेन सर्वं प्राप्स्यसि सुव्रते । बहुकालं स्थितं यस्मात्तपसा लभ्यते फलम् २६ स्त्रीणां पुष्टिकरं ह्येकं व्रतं प्रोक्तं स्वयंभुवा । सावित्र्याः पृच्छमानायास्तत्त्वं कर्तुमिहार्हसि २७ अशोकव्रतमित्येकं नाम्ना ख्यातं त्रिविष्टपे । येन चीर्णेन वै सद्यो नारी दुःखं न संस्मरेत् २८ हरः स्वयं वसन्साक्षाद्वृक्षराजेषु नंदते । अस्मिंस्तुष्टे हरस्तुष्ट इति जानामि निश्चितम् २९ शच्युवाच । पुन्नागनागबकुलचंपकाद्यान्महीरुहान् । परित्यज्य कथं चान्यान् हरोऽस्मिन्कृतसन्निधिः ३० वाचस्पतिरुवाच । हरेण निर्मितः पूर्वमशोकोऽयं कृपालुना । लोकोपकारकरणे ततोयं शिववल्लभः ३१ वसिष्ठ उवाच ॥ निर्माय वृक्षप्रवरं प्रणम्य भक्त्या ऽर्चयित्वा विधिमस्य विप्रम् । पप्रच्छ देवी पुनराह विप्रो देवि शृणुत्वं विधिमस्य सर्वम् ३२ वाचस्पतिरुवाच । आरभ्य तद्व्रतं कार्यं त्रिरात्रं समुपोषणम् । त्रिरात्रं देवि विख्यातमशोकतरुमूलके ३३ कार्यं नारीभिरमलं मनोवाक्कायकर्मभिः । ततः प्रदक्षिणा देया ह्यष्टोत्तरशतैः फलैः ३४ नारीकेरैश्च खर्जूरै र्गोस्तनीभिर्दिने दिने । मंत्रेणानेन मनसा ध्यात्वा नित्यं सदाशिवम् ३५ अशोक शोकापनुद सर्वकामफलप्रद । व्रतेनानेन चीर्णेन यथोक्तफलदो भव ३६ ततस्तृतीये दिवसे सम्यगभ्यर्च्य भामिनी । महादेवं वृषयुतं वंशपात्राणि कारयेत् ३७ अनेनैव विधानेन या कुर्याद्व्रतमुत्तमम् ।

वैधव्य नाप्नुयान्नारी पुत्रसौख्ययुता भवेत् ३८ वसिष्ठ उवाच । बृहस्पतिमुखाच्छ्रुत्वा शची चक्रे व्रत शुभम् । शास्त्रोक्तविधिना सीते भ-
क्त्या देवः समागतः ३९ वृत्रहत्याविनिर्मुक्तो नात्र कार्या विचारणा । तथा त्वमपि वांछार्थं व्रतमेतत्समाचर ४० तथा साध्विसु पुष्ट
श्रीप्राधान्यं जायते क्षितौ । व्रत एव कृते लोके ख्याता देवि भविष्यसि ४१ श्रीकृष्ण उवाच । व्रतमेतदशोकस्य त्वयोध्यायां चकार
सा । सीता व्रते कृते तस्मिन्दुःखहीना बभूव ह ४२ युधिष्ठिर उवाच । अशोकस्य समाख्याता पूजा देवविधानतः । का देवता तत्र पू
ज्या नारीणां व्रतसिद्धये ४३ श्रीकृष्णउवाच ॥ अशोकवृक्षे तिष्ठंति सर्वे देवा युधिष्ठिर । पल्लवेषु च शाखासु शिवाद्याः सर्वदेवताः ४४ अ
शोकसन्निधौ रामः पूजनीयः सलक्ष्मणः । सीतया सहितो राजन्विष्णोरंशो यतो मतः ४५ पृथङ्मंत्रैः पृथग्वर्णैरशोकाख्या यथाक्रमम् ।
पूजा च भरतश्रेष्ठ पुराणोक्तविधानतः ४६ अशोकवृक्षनिहिताः शिवाद्या ये सुरोत्तमाः ।अशोकपूजनेनाशु तुष्टास्ते मे भवन्त्विह४७ गौर्या
लक्ष्म्या तथेंद्राण्या अरुंधत्या च सीतया । त्वं समाराधितः पूर्वमशोकफलदो भव ४८ अशोकवाटिकामध्ये सीतया त्वं प्रसादितः । अ
शोकसपन्नफल गृहाणार्घ्यं कृतं मया ४९ रावणस्य वधार्थाय उत्पन्नस्त्वं महीतले । विष्णोरंशोसि देवेश गृहाणार्घ्यं नमोस्तु ते ५०
दशावताररग्रहणं करोषि त्वं प्रभावतः । गृहाणार्घ्यं मया दत्त सीतालक्ष्मणसंयुत ५१ तातभक्त्युन्मुख वीरं वनं यो ऽनुययौ तदा । तं ल
क्ष्मीवर्द्धनं गौर लक्ष्मण पूजयाम्यहम् ५२ अवनीतलसंभूते सीते सर्वांगसुंदरि । गृहाणार्घ्यं मया दत्त पूजां जनकनंदिनि ५३ लक्ष्मी
स्त्वं सर्वदेवस्य विष्णोरसि महीतले । अवतीर्णा मया दत्त गृहाणार्घ्यं नमोस्तु ते ५४ एवं संपूज्य विधिना सर्वशोकविनाशनम् । सर्व
पापप्रशमनं सर्वकीर्तिविवर्द्धनम् ५५ अपुत्रया पुरा पार्थ पार्वत्या मंदराचले । अशोकः शोकशमनः पुत्रत्वे परिकल्पितः ५६ जातक-

र्मोदिकं तस्य ह्यशोकस्य महातरोः । कारितं विधिवत्तस्य तेन वृक्षो नगोत्तमः ५७ या व्रतं कुरुते नारी पुराणोक्तविधानतः । अशोक-
स्य प्रसादेन सर्वान्कामानवाप्नुयात् ५८ अवैधव्ययुता सा तु लक्ष्मीसान्निध्यमाप्नुयात् । सर्वोपहारान्राजेंद्र ब्राह्मणाय निवेदयेत् ५९ क-
थामपि समाकर्ण्य यः कुर्याद्द्विजतर्पणम् । व्रतस्य फलमाप्नोति सुव्रतोपि न संशयः ६० युधिष्ठिर उवाच । विशेषं ब्रूहि मे देव ह्यशो-
कतरुपूजने । येनार्चिते तरौ कृष्ण प्राप्यते सकलं फलम् ६१ श्रीकृष्ण उवाच । कथयामि कथां राजन्याभिर्व्रतमिदं कृतम् । मनुष्यदेव-
गंधर्वनारीभिः पुत्रवृद्धये ६२ अनुसूयया ऽत्रिपत्न्या ह्यरुंधत्या च तथैव च । देवक्या सीतया चैंद्र्या द्रौपद्या सत्यभामया ६३ दमयंत्या च
सावित्र्या कृतं तद्व्रतमुत्तमम् । सर्वाभिः पूजितो वृक्षो यथावच्छृणु पार्थिव ६४ अशोकं राजतं चैव सौवर्णं च तथा शिवम् । तथैव का-
रयेत्सीतां सौवर्णौ रामलक्ष्मणौ ६५ पूजयेद्विविधैर्मंत्रैः पूर्वोक्तैर्नृपसत्तम । अशोकं पूजयेद्वृक्षं प्ररूढं शुभपल्लवैः ६६ विरूढैः सप्तधान्यैश्च
गुणकैर्मोदकैः शुभैः । काळोद्भवैः शुभैर्दिव्यैर्नारिकेलैः सदाडिमैः ६७ पुष्पादिना तथा धूपैः पूजयेत्तरुमुत्तमम् । अशोकं पांडवश्रेष्ठ शो-
को नश्यति तत्क्षणात् ६८ पितृमातृपतीनां वै श्वशुराणां तथैव च । अशोक त्वं शोकहरो भव सर्वत्र नः कुले ६९ अशोककलिका
श्चाष्टौ ये पिबंति च हस्तभे । चैत्रशुक्लत्रयोदश्यां न ते शोकमवाप्नुयुः ७० त्वामशोकहराभीष्ट मधुमाससमुद्भवम् । पिबामि शोकसंतप्तो
मामशोकं सदा कुरु ७१ हस्तर्क्षे च बुधोपेता चैत्रशुक्लत्रयोदशी । प्रातस्तु विधिवत्स्नात्वा वाजपेयफलं लभेत् ७२ इतिश्रीभवि० अशो-
कत्रयोदशीव्रतम् ॥ ॥ अथ चैत्रकृष्णत्रयोदश्यां महावारुणीसंज्ञको योगः ॥ तदुक्तं वाचस्पतिनिबंधे—शनिवारसमायुक्ता सा महावारुणी
स्मृता । मधौ कृष्णत्रयोदश्यां शनौ शतभिषा यदि १ गंगायां यदि लभ्येत कोटिसूर्यग्रहाधिका । शुभयोगसमायुक्ता शनौ शतभिषा यदि २

महायोगेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥ ॥ इति वारुणीमहावारुणीत्रयोदशी ॥ ॥ अथ स्कंदपुराणे शनिप्रदोषव्रतम् ॥ शनौ शु
क्लत्रयोदश्यां कार्तिके श्रावणेऽथवा । जया पूर्वा पराप्राप्ता व्यासा चेद्रजनीमुखम् १ लोमश उवाच । पुरा वृत्रादिभिर्दैत्यैर्वर्तमाने महाहवे ।
हतः शक्रेण नमुचिरपांफेनेन वै बली २ दैत्यान्पलायितान्दृष्ट्वा हन्यमानान्सुरैर्भृशम् । वृत्रः कोपपराविष्टो देवान्योद्धुमथाययौ ३ कालाग्निरूपसदृ
श रूपं कृत्वा महाजवम् । व्यवर्द्धत महातेजा रोदसी प्रग्रसन्निव ४ तं दृष्ट्वा भयवित्रस्ता देवाः शक्रपुरोगमाः । कर्तव्यं नाभ्यपद्यत तदा
गुरुरुवाच ह ५ गुरुरुवाच । तपसा सुमहोग्रेण व्रतेन नियमेन च । अजेयोऽयं महातेजा वृत्रः शत्रुविनाशनः ६ आराधय ततो देव पूज्य
शंकरमव्ययम् । व्रतेन विधियुक्तेन वृत्रं जेष्यथ माचिरम् ७ देवा ऊचुः । गुरो केन विधानेन कीदृशेन व्रतेन च । आराधनीयो गौरीशो
ह्यस्माभिर्जयकामुकैः ८ तद्वदस्व सुराचार्य त्वं हि नः परमा गतिः ॥ गुरुरुवाच । कार्तिकादिषु मासेषु मंदवारे त्रयोदशी ९ विशेषाच्छु
क्लपक्षेषु सर्वकामकरी शुभा । तस्यां प्रदोषसमये लिंगरूपी सदाशिवः १० पूजनीयो हि देवेंद्र सर्वकामसमृद्धये । स्नात्वा मध्यान्हसमये
तिलामलकसंयुतम् ११ शिवस्य चार्चनं कुर्यान्नवपुष्पफलादिभिः । पश्चात्प्रदोषसमये स्थावरं लिंगमर्चयेत् १२ स्वयंभूस्थापितं चापि
पौरुषेयमपौरुषम् । जने वा विजने वापि अरण्ये वा तपोवने १३ ग्रामाद्बहिःस्थितं लिंगं ग्राम्याच्छतगुणं स्मृतम् । बाह्याच्छतगुणं पु
ण्यमरण्ये च प्रपूजने १४ वन्याच्छतगुणं पुण्यं लिंगं यै पर्वते स्थितम् । पर्वताद्दशायुतं पुण्यं तपोवनसमाश्रितम् १५ काश्यादिसंस्थितं
लिंगं पूजितं स्यादनंतकम् । एवं विशेषलिंगानां तीर्थानां निपुणो भृशम् १६ स्नात्वा च शिवपूजाया विधिं शंभुं प्रपूजयेत् । कूपवापीतडा
गेषु देवखातनदीषु च १७ क्रमाच्छतगुणं पुण्यं गंगायां स्यादनंतकम् । पंचपिंडाननुद्धृत्य सुस्नायात्परवारिणि १८ ततः प्रदोषसमये स्नात्वा

मौनं समाचरेत् । प्रदीपानां सहस्रेण दीपनीयः सदाशिवः १९ शतेनाप्यथवा देवो द्वात्रिंशद्दीपमालया । घृतेन दीपयेद्दीपान् शिवस्य परितुष्टये २० तथाफलैश्च धूपैश्च नैवेद्यैर्विविधैरपि । उपचारैः षोडशभिर्लिंगरूपी सदाशिवः २१ पूज्यः प्रदोषसमये नृभिः सर्वार्थसिद्धये । नाम्नां शतेन रुद्रो ऽसौ स्तोतव्यश्च स्तुतिप्रियः २२ नमो रुद्राय भीमाय नीलकंठाय वेधसे । कपर्दिने सुरेशाय व्योमकेशाय वै नमः २३ वृषध्वजाय सोमाय सोमनाथाय वै नमः । दिगंबराय भर्गाय उमाकांत कपर्दिने २४ तपोमयाय व्यासाय शिपिविष्टाय वै नमः । व्यालप्रियाय व्यालाय व्यालानां पतये नमः २५ महीधराय व्याघ्राय पशूनां पतये नमः । त्रिपुरांतकाय सिंहाय शार्दूलाय झषाय च २६ मिताय मितनाथाय सिद्धाय परमेष्ठिने । कामांतकाय बुद्धाय बुद्धीनांपतये नमः २७ कपोताय विशिष्टाय शिष्टाय परमात्मने । वेदगीताय गुप्ताय वेदगुह्याय वै नमः २८ दीर्घाय दीर्घरूपाय दीर्घार्थाय मृडाय च । नमो जगत्प्रतिष्ठाय व्योमरूपाय वै नमः २९ गर्वकृत्सुमहादित्य अंधकासुरभेदिने । नीललोहितशुक्लाय चंडमुंडप्रियाय च ३० भक्तिप्रियाय देवाय ज्ञाताज्ञाताऽव्ययाय च । महेशाय नमस्तुभ्यं महादेवहराय च ३१ त्रिनेत्राय त्रिदेवाय वेदांगाय नमो नमः । अर्थाय अर्थरूपाय परमार्थाय वै नमः ३२ विश्वरूपाय विश्वाय विश्वनाथाय वै नमः । शंकराय च कालाय कालावयवरूपिणे ३३ अरूपाय विरूपाय सूक्ष्मासूक्ष्माय वै नमः । श्मशानवासिने तुभ्यं नमस्ते कृत्तिवाससे ३४ शशांकशेखरायैव रुद्रभूमिश्रयाय च । दुर्गाय दुर्गपाराय दुर्गावयवसाक्षिणे ३५ लिंगरूपाय लिंगाय लिंगानांपतये नमः । नमः प्रभावरूपाय प्रणवार्थाय वै नमः ३६ नमो नमः कारणकारणाय मृत्युंजयायात्मभवस्वरूपिणे । त्रियंबकायासितकंठगर्भगौरीपते मंगलहेतवे नमः ३७ नाम्नां शतं महेशस्य उच्चार्यं व्रतिना सदा । प्रदक्षिणा नमस्कारा एतत्संख्याः प्रयत्नतः ३८ कार्याः प्रदोषसमये

तुष्ट्यर्थं शंकरस्य च । एतद्व्रतं मयादिष्टं तव शक्र महामते ३९ शीघ्रं कुरु महाभाग पश्चाच्छुर्द्ध कुरु प्रभो । शंभोः प्रसादात्सर्वं ते भवि-
ष्यति जयादिकम् ४० शक्र उवाच । वृत्रः कदा महेशानं समाराधयदादरात् । कथं च स वरं प्राप्तः पुरा कथ्यामवद्द्विज ४१ गुरुरुवाच ।
वृत्रो ह्यह महातेजास्तपस्वी तपसा पुरा । शिवं प्रसादयामास पर्वते गंधमादने ४२ नाम्ना चित्ररथो राजा वनं चित्ररथस्य तत् । एत-
ज्जानीहि भो इन्द्र तव पुर्याः समीपतः ४३ यस्मिन्वने महाभाग वसंति च महर्षयः । तस्माच्चैत्ररथं नाम वनं परममंगलम् ४४ तस्य
दत्तं शिवेनैव यानं च परमाद्भुतम् । कामदं किंकिणीयुक्तं सिद्धचारणसंयुतम् ४५ गंधर्वैरप्सरोयक्षैः किन्नरैरुपशोभितम् । ततस्तेनैव याने-
न पृथिवीं पर्यटन्पुरा ४६ तथा गिरिसमुद्रांश्च द्वीपांश्च विविधांस्तथा । एकदा पर्यटन्राजा नाम्ना चित्ररथो महान् ४७ कैलासमागत
स्तत्र ददर्श परमाद्भुतम् । तदा सभां महेशस्य गणैश्चैव विराजिताम् ४८ अर्धांगलग्नया देव्या शोभितं च महेश्वरम् ४९ निरीक्ष्य देव्या
सहितं सदाशिवं कर्पूरगौरं वरमंजुलेक्षणम् । कपर्दिनं चंद्रकलाविभूषितं गंगाधरं देववरं सभायाम् ५० प्रहस्य राजा च तदा गिरीशं न्या
यान्वितं वाक्यमिदं बभाषे । वयं च शंभो विषयान्विताश्च मर्त्यादयः स्त्रीविजितास्तथाऽन्ये ५१ न लोकमध्ये च मया विलोकिताश्चा-
लिंग्य कांतां सदसि प्रविष्टाः ५२ एवं वाक्यं निशम्याथ गिरीशः प्रहसन्निव । उवाच न्यायसंयुक्तं सर्वेषामपि शृण्वताम् ५३ शिव उ
वाच । मम लोकापवादश्च सर्वेषां न भवेत्तथा । भक्षितं कालकूटं मे सर्वेषामपि दुर्जयम् ५४ लोकातीतं च मे वृत्तं तथाऽप्युपहसत्य-
सौ । ततश्चित्ररथं देवी गिरिजा वाक्यमब्रवीत् ५५ गिरिजोवाच । कथं दुरात्मनाऽनेन शंकरश्चोपहासितः । मया सहैव मदात्मन्नीक्षसे
कर्मणः फलम् ५६ साधूनां समचित्तानामुपहासं करोति यः । देवो वाप्यथवा मर्त्यः स विज्ञेयोऽधमाधमः ५७ एते मुनींद्राश्च म

हानुभावास्तथाहि चैते ऋषयो वेदगर्भाः । तथैव सर्वे सनकादयो ह्यमी चाज्ञाननाशाच्छिवमर्चयंति ५८ रे मूढ सर्वेषु जनेष्वभिज्ञस्त्वमेव चैकोसि परो न कश्चन । तस्मादतिप्रौढतरं नरं त्वां संशिक्षये नैव कुर्याद्यथा त्वम् ५९ अस्मात्पत विमानात्त्वं दैत्यो भूत्वा सुदुर्मते । मम शापेन दग्धस्त्वं गच्छाद्य च महीतलम् ६० एवं शप्तस्तदा देव्या भवान्या राजसत्तमः । राजा चित्ररथः सद्यः पपात सहसा दिवः ६१ आसुरीं योनिमापन्नो वृत्रो नाम्ना ऽभवत्तदा । तपसा परमेणैव त्वष्ट्रा संयोजितः क्रमात् ६२ तपसा ब्रह्मचर्येण शंभोराराधनेन च । व्रतेनानेन च बली जेतुं शक्यो न केनचित् ६३ आसुरेण हि भावेन व्यंगं चक्रे व्रतं यतः । तेन च्छिद्रेण चैवासौ पश्चाज्जेयो भविष्यति ६४ तस्मात्त्वमपि देवेंद्र कृत्वा चेदं व्रतं शुभम् । हनिष्यसि महाबाहो वृत्रं नास्त्यत्र संशयः ६५ गुरोस्तद्वचनं श्रुत्वा ह्युवाचाथ शतक्रतुः । उद्यापनविधिं ब्रूहि प्रदोषस्य च मेऽधुना ६६ गुरुरुवाच । कार्तिके श्रावणे प्राप्ते मंदवारे त्रयोदशी । संपूर्णा तु भवेद्या सा समग्रव्रतसिद्धये ६७ वृषभो राजतः कार्यो पृष्ठे तस्य सुपीठकम् । तस्योपरि न्यसेद्देवमुमाकांतं त्रिलोचनम् ६८ पंचवक्त्रं दशभुजमर्धांगे गिरिजां सतीम्। सौवर्णीं प्रतिमां कृत्वा ताम्रकुंभं जलैर्युतम् ६९ पंचरत्नफलोपेतं पंचपल्लवशोभितम्। चंदनेन सुगंधेन मिश्रितं शोभितं तथा ७० रौप्यपात्रं ततः कृत्वा कुंभस्योपरि विन्यसेत्। अशक्तौ मृन्मयं कुंभं वंशपात्रमथापि वा ७१ पूर्णं शरावं संस्थाप्य सौवर्णीं प्रतिमां तथा। शक्त्या कृतां प्रतिष्ठाप्य वस्त्रमाल्यविभूषणैः ७२ पूजयित्वा विधानेन रात्रौ जागरणं चरेत्। पुष्पमंडपिकामादौ कृत्वा श्रद्धासमन्वितः ७३ वितानमंडपं कुर्यान्नानावर्णैः समन्वितम् । ततः प्रभातसमये नद्यादौ विमले जले ७४ स्नात्वा पुनः समभ्यर्च्य जुहुयात्पायसेन च । उमया सहितं रुद्रं पृथगष्टोत्तरं हुनेत् ७५ गौरीर्मिमायमंत्रेण त्र्यंबकेण च शंकरम् । आचार्यं च सपत्नीकं वस्त्रालंकारचंदनैः ७६ तोषयित्वा शुचिं

वीतो गादद्याच पयस्विनीम् । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिः प्रतोषयेत् ७७ दीनानाथांश्च संतर्प्य ह्यच्छिद्रं वाचयेत्ततः । लब्ध्वाऽनुज्ञां ब्रा
ह्मणेभ्यो बंधुभिः सहितः शुचिः ७८ हृदि स्मरन् शिवं भक्त्या भुंजीत नियमेनच च । अनेनैव विधानेन कुर्यादुद्यापनं व्रती ७९ एवं
यः कुरुते भक्त्या प्रदोषव्रतमुत्तमम् । शनिवारेण संयुक्तं सोद्यापनविधिं नरः ८० आयुरारोग्यमैश्वर्यं पुत्रपौत्रसमन्वितः । शत्रून्विजयते
नित्यं प्रसादाच्छंकरस्य च ८१ तस्मात्त्वमपि देवेंद्र पूजयस्व सदाशिवम् । एवं प्रदोषविधिना युद्धे शत्रून् विजेष्यसि ८२ एवं निशम्य गु-
रुणा कथितं तदानीमिंद्रो यमेन विधिना गिरिशं प्रपूज्य । लोकं ग्रसंतमिव दैत्यपतिं महांतं तत्क्षणादगमयत्क्षयमीशतुष्ट्या ८३ ई-
श्वर उवाच । त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् । पश्यति प्रथमे यामे मुच्यते सर्वपातकैः ८४ देव्युवाच । देव केन विधानेन
प्रदोषव्रतमुत्तमम् । विधातव्यं नरैः स्त्रीभिः संतानफलसिद्धये ८५ ईश्वर उवाच । यदा त्रयोदशी कृष्णा मंदवारेण संयुता । आरब्धव्यं
व्रतं तत्र संतानफलसिद्धये ८६ ऋणनिर्मोचनार्थाय भौमवारेण संयुता । आयुरारोग्यसिद्ध्यर्थं भानुवारेण संयुता ८७ एकवत्सरपर्यंतं
प्रतिपक्षे त्रयोदशी । प्रदोषे शिवमभ्यर्च्य नक्तं भोक्ष्यामि शंकर ८८ तत्र प्रोक्तेन मंत्रेण व्रतसंकल्पमाचरेत् । स्नात्वा तु लोहिते भानौ
तथादौ नियमी व्रती ८९ शिवालये ततो गत्वा प्रदोषे शिवमर्चयेत् ९० पूजामंत्रः–ॐभवायनमः महादेवायन० रुद्राय० नीलकंठाय०
शशिमौलिनेन० उग्राय० उमाकांताय० ईशानाय० विश्वेश्वराय० त्रिपुरघ्नाय० त्रिपुरांतकाय० त्रिकाग्निकालाय० कालाग्निरुद्राय०
नीलकंठाय० सर्वेश्वरायन० १६ पंचामृतेन स्नपनमेभिर्मंत्रैः प्रपूजयेत् । दधिभक्तेन नैवेद्यं पक्वान्नैर्घृतसंयुतम् ९१ दत्त्वा सुसुखवासं च
तांबूलं क्रमुकादिकम् । समर्प्याष्टदिशस्तत्र दीपानाज्यसमन्वितान् ९२ यथा भवान्समस्तानां भक्तानां पापमोचनः । तथा व्रतेन सं

तुष्टः पुत्रं देहि सुलक्षणम् १३ ऋणरोगादिदारिद्र्यपापक्षुद्रापमृत्यवः । भयशोकमनस्तापा नश्यंतु मम सर्वदा १४ पृथिव्यां यानि तीर्थानि सागरांतानि यानि च । अंडमाश्रित्य तिष्ठंति प्रदोषे गोवृषस्य तु १५ स्पृष्ट्वा तु वृषणौ तस्य शृंगमध्ये विलोक्य च । पुच्छं च ककुदं चैव सर्वपापैः प्रमुच्यते १६ निवेद्यकर्मजातं च दद्याद्वित्तानुसारतः । दक्षिणा ब्राह्मणेभ्यश्च ततो मौनं विसर्जयेत् १७ मंदवारे प्रदोषोऽयं शुक्ले कृष्णे त्रयोदशी । यश्चतुर्विंशतिं कुर्याद्यथोक्तफलमाप्नुयात् १८ अथ पूजनम् ॥ आवाहयेत्प्रथमतो मंत्रेणानेन सुव्रत । एह्येहि त्वमुमाकांत स्थाने चात्र स्थिरो भव । यावद्व्रतं समाप्येत कृपया दीनवत्सल । आवाहनम् ॥ आसने ऽस्मिन्नुमाकांत सुखस्पर्शे सुनिर्मले । उपविश्य मृडेदानीं सर्वशांतिप्रदो भव । आसनम् ॥ पाद्यं च ते मया दत्तं पुष्पगंधसमन्वितम् । गृहाण देवदेवेश मया दत्तं हि भक्तितः । अर्घ्यम् ॥ शीतलं निर्मलं तोयं कर्पूरेण सुवासितम् । आचम्यतां सुरश्रेष्ठ मया दत्तं हि भक्तितः । आचमनीयम् ॥ पंचामृतेन स्नपनं तत्तन्मंत्रैश्च कारयेत् । गोक्षीरधामन्देवेश गोक्षीरेण मया कृतम् ॥ स्नपनं देवदेवेश गृहाण परमेश्वर । दुग्धस्नानम् ॥ दध्ना चैव मया देवे स्नपनं क्रियते तव । गृहाण भक्त्या दत्तं मे प्रसन्नो मे भवाव्यय । दधिस्नाम् ॥ सर्पिषा देवदेवेश स्नपनं क्रियते मया । उमाकांत गृहाणेदं श्रद्धया सुरसत्तम । घृतस्नानम् ॥ इदं मधु मया दत्तं तव तुष्ट्यर्थमेव च । गृहाण शंभो त्वं भक्त्या मम शांतिप्रदो भव। मधुस्नानम्॥ सितया देवदेवेश स्नपनं क्रियते मया । गृहाण शंभो मे भक्त्या सुप्रसन्नो भव प्रभो । शर्करास्नानम् ॥ कावेरी नर्मदा वेणी तुंगभद्रा सरस्वती । गंगा च यमुना चैव ताभ्यः स्नानार्थमाहृतम् । गृहाण त्वमुमाकांत स्नानाय श्रद्धया जलम् । स्नानम् ॥ एतद्वासो मया दत्तं सोत्तरीयं सुशोभनम् ॥ गृहाण त्वं सुरश्रेष्ठ मम वासःप्रदो भव । वस्त्रम् ॥

यज्ञोपवीतं सौवर्णं मया दत्तं च शंकर । गृहाण परया तुष्ट्या तुष्टिदो भव सर्वदा ।उपवीतम् ॥ सुगंधं चंदनं दिव्यं मया दत्तं तव प्रभो । भक्त्या परमया शंभो सुभगं कुरु मे प्रभो । चंदनम् ॥ मालतीचंपकादीनि कुमुदान्युत्पलानि च । बिल्वपत्राणि पूजार्थं स्वीकुरु त्वमुमापते । पुष्पम् ॥ धूपं विशिष्टं परमं सर्वौषधिविजृंभितम् । गृहाण परमेशान ममोपरि दयां कुरु । धूपम् ॥ दीपं च परमं शंभो घृतवर्तिषु योजितम् ॥ दत्तं गृहाण देवेश मम ज्ञानप्रदो भव । दीपम् ॥ शाल्योदनघृतापूपपायसादिसमन्वितम् ॥ नैवेद्यं विविधं दत्तं भक्त्या मे प्रतिगृह्यताम् । नैवेद्यम् ॥ नैवेद्यमध्ये पानीयं मया दत्तं हि भक्तितः । स्वीकुरुष्व महादेव प्रसन्नो भव सर्वदा । मध्येपानीयम् ॥ उत्तरापोशनार्थं वा आनीतं जलमुत्तमम् । गृहाण त्वमुमाकांत सर्वदुःखनिवारक । उत्तरापोशनम् ॥ कर्पूरैलालवंगादिपूगीफलसमन्वितम् ॥ तांबूलं कल्पितं भक्त्या गृहाण गिरिजाप्रिय । तांबूलम् ॥ इदं फलं मया देव० । फलम् ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । दक्षिणा कांचनी देव स्थापिता मे तवाग्रतः । दक्षिणाम् ॥ दीपावलिर्मया दत्ता सुवर्तिघृतसंयुता । पंचार्तिक्यप्रदानेन मम तेजःप्रदो भव । पंचार्तिक्यम् ॥ यानि कानि च पापानि० । प्रदक्षिणाम् ॥ मृत्युंजयाय रुद्राय नीलकंठाय शंभवे । अमृतेशाय शर्वाय महादेवाय ते नमः । नमस्कारान् ॥ सेवंतिकावकुलचंपकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः । बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद । मन्त्रपुष्पांजलिम् ॥ निपत्य दंडवद्भूमौ प्रणम्य च पुनः पुनः । क्षमापयित्वा देवेशं रात्रौ जागरणं चरेत् । गीतवादित्रनृत्याद्यैर्गृहे वा देवतालये ॥ एवं पूजा प्रकर्तव्या शंकरस्य च तुष्टिदा । इच्छितं च नराणां तु ददाति भगवान्हरिः ॥ इति श्रीस्कंदपु० शनिप्रदोषव्रतकथोद्यापनपूजा समाप्ता ॥ ॥ अथ प्रदोषव्रतम् ॥ सूत उवाच । काचिच्च विप्रवनिता सपुत्रा दुःखकर्शिता ।

शांडिल्यस्य मुखाच्छ्रुत्वा प्रदोषे शिवपूजनम् १ इत्युक्ता मुनिना साध्वी सा विप्रवनिता पुनः । तं प्रणम्याथ पप्रच्छ शिवपूजाविधिं क्रमात् २ शांडिल्य उवाच । पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा । घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेत् ३ शुक्लांबरधरो भूत्वा वाग्यतो नियमान्वितः । कृतसंध्याजपविधिः शिवपूजां समारभेत् ४ देवस्य पुरतः सम्यगुपलिप्य नवांभसा । विधाय मंडपं रम्यं धौतवस्त्रादिभिर्वृतम् ५ वितानाद्यैरलंकृत्य फलपुष्पनवांकुरैः । विचित्रं पद्ममुलिख्य वर्णपंचकसंयुतम् ६ तत्रोपविश्य तु शुभे सूपविष्टः स्थिरशासने । सम्यक् संपादिताशेषपूजोपकरणः शुचिः ७ आगमोक्तेन मंत्रेण पीठमामंत्रयेत्सुधीः । ततः कृत्वाऽऽत्मशुद्धिं च भूतशुद्ध्यादिकं क्रमात् ८ प्राणायामत्रयं कुर्याद्बीजमंत्रैः सबिंदुकैः । मातृका न्यस्य विधिवद्ध्यात्वा तां देवतां पराम् ९ वामभागे गुरुं नत्वा दक्षिणे गणपं यजेत् । अंसोरयुग्मे धर्मादीन् न्यस्य नाभौ च पार्श्वयोः १० अधर्मादीननंतादीन् हृदि पीठमनुं न्यसेत् । आधारशक्तिमारभ्य ज्ञानात्मानमनुक्रमात् ११ उक्तक्रमेण विन्यस्य हृदये साधुभाविते । नवशक्तिमये रम्ये ध्यायेद्देवमुमापतिम् १२ चंद्रकोटिप्रतीकाशं त्रिनेत्रं चंद्रभूषणम् । आपिंगलजटाजूटं रत्नमौलिविराजितम् १३ नीलग्रीवमुदारांगं नानाहारोपशोभितम् । वरदाभयहस्तं च हरिणं च परश्वधम् १४ दधानं नागवलयं केयूरांगदभूषणम् । व्याघ्रचर्मपरीधानं रत्नसिंहासने स्थितम् १५ ध्यात्वा तद्वामभागे च गिरिजां भक्तवत्सलाम् । भास्वज्जपाप्रसूनाभामुदयार्कसमप्रभाम् १६ विद्युत्कुंजनिभां तन्वीं मनोनयननंदिनीम् । बालेंदुशेखरां स्निग्धां नीलकुंचितकुंतलाम् १७ भृंगसंघातरुचिरनीलालकविराजिताम् । मणिकुंडलविद्योतमुखमंडलविभ्रमाम् १८ नवकुंकुमपंकाभां कपोलतलदर्पणाम् । मधुरस्मितविभ्राजदरुणाधरपल्लवाम् १९ कंबुकंठी शिवामुद्यत्कुचपंकजकुड्मलाम् । पाशांकुशाभयाभीष्टविलसंती चतुर्भुजाम् २० अनेकरत्नविलसत्कंकणांगदशोभि-

ताम् । वलित्रयेण विलसद्धेमकाञ्चीगुणान्विताम् २१ रक्तमाल्यांबरधरां दिव्यचंदनचर्चिताम्। दिक्पालवनितामौलिलसत्पादसरोरुहाम् २२
रत्नसिंहासनारूढां सर्वराजपरिच्छदाम् २३ एवं ध्यात्वा महादेवं देवीं च गिरिजां शुभाम् २२ न्यासक्रमेण संपूज्य देवं गंधादिभिः क्र-
मात्। पंचभिर्ब्रह्मभिः कुर्यात्प्रोक्तस्थानेषु वा हृदि २४ पृथक्पुष्पांजलिं देहे मूलेन च हृदि त्रयम्। पुनस्त्वयं शिवो भूत्वा मूलमंत्रेण सा
धकः २५ ततः संपूजयेद्देवं बाह्यपीठे पुनः क्रमात्। संकल्पं प्रवदेत्तत्र पूजारंभे समाहितः २६ कृतांजलिपुटो भूत्वा चिंतयेद्धृदि शंकरम् ।
ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये २७ अशेषाघविनाशाय प्रसीद मम शंकर। दुःखशोकाग्निसंतप्तं संसारभयपीडितम् २८ बहुरोगाकुल
दीनं त्राहि मां वृषवाहन । आगच्छ देवदेवेश महादेवाभयंकर २९ गृहाण सह पार्वत्या त्वं च पूजां मया कृताम् । इति संकल्प्य वि
धिवद्बाह्यपूजां समाचरेत् ३० गुरुं गणपतिं चैव यजेत्सव्यापसव्ययोः । क्षेत्रेशमीशकोणे तु यजेद्वास्तोष्पतिं क्रमात् ३१ वाग्देवीं च य
जेत्तत्र ततः कात्यायनीं यजेत् । धर्मं ज्ञानं सवैराग्यमैश्वर्यं च नमोंतकैः ३२ स्वरैरीशादिकोणेषु पीठपादावनुक्रमात् । आभ्यां बिंदुवि
सर्गाभ्यामधर्मादीन्प्रपूजयेत् ३३ मातृरूपां चतुर्दिक्षु मध्येऽनंतं सतारकम् । सत्वादित्रिगुणांस्तत्तद्रूपान्पीठेषु विन्यसेत् ३४ अत ऊर्ध्वछदे
मायालक्ष्म्यौ देव्या शिवेन च । तदंते चांबुजं भूयः सकलं मलकोत्तमम् ३५ यत्र केसरकिंजल्कव्याप्तं तत्राक्षरैः क्रमात् । आत्मत्रयमथा
भ्यर्च्य मध्ये मंडपमादरात् ३६ वामां ज्येष्ठां च गौरीं च भवार्थे दिक्षु पूजयेत् । वामाद्या नव शक्तीश्च नवस्वरयुता यजेत् ३७ हृदि
बीजत्रयाद्यैश्च पीठमंत्रेण चार्चयेत् । आवृतिः प्रथमांगैस्तु पंचभिर्मूर्तिपंक्तिभिः ३८ त्रिंशद्भिर्मूर्तिभिश्चान्यैर्निधिद्वयसमन्वितैः । अनंताद्यैः
पराद्या यामानुभिश्च वृषादिभिः ३९ सिद्धिभिश्चाणिमाद्याभिरिंद्राद्यैश्च तदायुधैः । वृषभक्षेत्रचंडेशदुर्गाश्च स्कंदनंदिनौ ४० गणेशसैन्यपौ

चेव स्वस्वलक्षणलक्षितौ। अणिमा महिमा चैव गरिमा लघिमा तथा ४१ ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च। अष्टैश्वर्याणि चोक्तानि तेजोरूपाणि केवलम् ४२ पंचभिर्ब्रह्मभिः पूर्वं हृल्लेखाद्यादिभिः क्रमात्। अंगैरुमाद्यैरिंद्राद्यैः पूर्वोक्तैर्मुनिभिस्तुतैः ४३ उमां चंडेश्वरादींश्च पूजयेदुत्तरादितः। एवमावरणैर्युक्तं तेजो रूपं सदाशिव ४४ उमया सहितं देवमुपचारैः प्रपूजयेत्। सुप्रतिष्ठितशंखस्य तीर्थैः पंचामृतैरपि ४५ अभिषिच्य महादेवं रुद्रसूक्तैः समाहितः। कल्पयेद्वैदिकैर्मंत्रैरासनाद्युपचारकान् ४६ आसनं कल्पयेद्धैमं दिव्यवस्त्रसमन्वितम्। अर्घ्यमष्टगुणोपेतं पाद्यं शुद्धोदकेन च ४७ तेनैवाचमनं दद्यान्मधुपर्कं मधूत्तमम्। पुनराचमनं दत्त्वा स्नानमंत्रैः प्रकल्पयेत् ४८ वसंते चोपवीतं च भूषणानि निवेदयेत्। गंधमष्टांगसंयुक्तं सुपूतं विनिवेदयेत् ४९ ततश्च बिल्वमंदारकल्हारसरसीरुहम्। धत्तूरं कर्णिकारं च द्रोणपुष्पं च मल्लिकाम् ५० अपामार्गं च तुलसीमाधवीचंपकादिकम्। बृहतीकरवीराणि यथालब्धानि भामिनि ५१ निवेदयेत्सुगंधीनि माल्यानि विविधानि च। धूपं कालागरूत्पन्नं दीपं च विमलं शुभम् ५२ अथ पायसनैवेद्यं सघृतं सोपदंशकम्। मोदकापूपसंयुक्तं शर्करागुडसंयुतम् ५३ मधुरान्नं दधियुतं जलपानसमन्वितम्। तेनैव हविषा वन्हौ जुहुयान्मंत्रभाविते ५४ आगमोक्तेन विधिना गुरुवाक्यनियंत्रितः। नैवेद्यं शंभवे भूयो दत्त्वा तांबूलमुत्तमम् ५५ फलं नीराजनं दिव्यं छत्रदर्पणमुत्तमम्। समर्पयित्वा विधिवन्मंत्रैर्वैदिकतांत्रिकैः ५६ यद्यशक्तः स्वयं निःस्वो यथाविभवमर्चयेत्। भक्त्या दत्तेन गौरीशः पुष्पमात्रेण तुष्यति ५७ अथांगभूतान्सकलान् गणेशादीन्प्रपूजयेत्। स्तवैर्नानाविधैः स्तुत्वा साष्टांगं प्रणमेद्बुधः ५८ ततः प्रदक्षिणीकृत्य वृषचंडेश्वरादिकान्। पूजां समर्प्य विधिवत्प्रार्थयेद्गिरिजापतिम् ५९ जय देव जगन्नाथ जय शंकर शाश्वत। जय सर्वसुराध्यक्ष जय सर्वसुरार्चित ६० जय सर्वगुणातीत जय सर्ववरप्रद। जय नित्यं निराधार जय विश्वंभराऽव्यय च॥ जय विश्वैकवंद्येश जय

नार्मेद्रभूषण ६१ जय गौरीपते शंभो जय नित्यं निरंजन । जय नाथ कृपासिंधो जय भक्तार्तिभंजन ६२ जय दुस्तारसंसारसागरोत्तारण
प्रभो । प्रसीद मे महादेव संसारदग्ध स्विद्यतः ६३ सर्वपापक्षयं कृत्वा रक्ष मां परमेश्वर । महादारिद्र्यमग्नस्य महापापहतस्य च ६४ म
हाशोकनिविष्टस्य महारोगातुरस्य च । ऋणभारपरीतस्य दह्यमानस्य कर्मभिः ६५ ग्रहैः प्रपीड्यमानस्य प्रसीद मम शंकर । दरिद्रो प्रार्थ
येदेवं पूजांते गिरिजापतिम् ६६ अभाग्यो वापि राजा वा प्रार्थयेदेवमीश्वरम् । दीर्घमायुः सदारोग्यं कोशवृद्धिर्बलोन्नतिः ६७ ममास्तु नि
त्यमानंदः प्रसादात्तव शंकर । शत्रवश्च क्षयं यांतु प्रसीदंतु मम प्रजाः ६८ नश्यंतु दस्यवो राष्ट्रे जनाः संतु निरापदः । दुर्भिक्षमरिसंतापाः
शमं यांतु महीतले ६९ सर्वसस्यसमृद्धिश्च भूयात्सुखमया दिशः । एवमाराधयेद्देवं प्रदोषे गिरिजापतिम् ७० ब्राह्मणान्भोजयेत्पश्चाद्दक्षि
णाभिश्च पूजयेत् । सर्वपापक्षयकरी सर्वदारिद्र्यनाशिनी ७१ शिवपूजेयमाख्याता सर्वाभीष्टफलप्रदा । महापातकसंघातमधिकं चोपपातकं
च ७२ शिवद्रव्यापहरणात्सर्वमन्यद्विनाशयेत् । ब्रह्महत्यादिपापानां पुराणेषु स्मृतिष्वपि ७३ प्रायश्चित्तानि दृष्टानि न शिवद्रव्यहारि
णाम् । बहुनाऽत्र किमुक्तेन श्लोकार्द्धेन ब्रवीम्यहम् ७४ ब्रह्महत्याशतं वापि शिवपूजा विनाशयेत् । मया कथितमेतत्ते प्रदोषे शिवपूजनम् ७५
रहस्यं सर्वजंतूनामत्रापस्त्येव न संशयः । एताभ्यामपि पुत्राभ्यां शिवपूजाविधीयताम् ७६ अतः संवत्सरादेव परां सिद्धिमवाप्स्यथ । इति
शाण्डिल्यवचनमाकर्ण्य द्विजभामिनी ७७ ताभ्यां तु सह बालाभ्यां प्रणनाम मुनेः पदे । ऋष्युवाच । अहमद्य कृतार्थोऽस्मि तव दर्शनमात्र
तः ७८ एतौ कुमारौ भगवन् त्वामेव शरणं गतौ । एष मे तनयो ब्रह्मन् शुचिव्रत इतीरितः ७९ एष राजसुतो नाम्ना धर्मपुत्रः कृतो मया ।
एतावद्य च भगवन् भवच्चरणकिंकरौ ८० समुद्धरास्मिन्पतितान् घोरे दारिद्र्यसागरे ८१ इति प्रपन्ना शरणं द्विजांगना तस्याथ वाक्यैरमृतो

पमानैः । उपादिदेशापि तयोः कुमारयोर्मुनिः शिवाराधनमंत्रविद्याम् ८२ अथोपदिष्टौ मुनिना कुमारौ ब्राह्मणी च सा । तं प्रणम्य समामंत्र्य जग्मुस्ते शिवमंदिरात् ८३ ततः प्रभृति तौ बालौ मुनिवर्योपदेशतः। प्रदोषे पार्वतीशस्य पूजां चक्रतुरंजसा ८४ एवं पूजयतोर्देवं द्विजराजकुमारयोः । सुखेनैव व्यतीयाय तयोर्मासचतुष्टयम् ८५ कदाचिद्राजपुत्रेण विनाऽसौ द्विजनंदन । स्नातुं गतो नदीतीरे चचार वहुलीलया ८६ तत्र निर्झरनिष्पातनिर्भिन्ने वप्रकर्दमे । निधानकलशं स्थूलं प्रस्फुरंतं ददर्श ह ८७ तं दृष्ट्वा सहसागत्य हर्षकौतुकविह्वलः । दैवोपपन्नं मन्वानो गृहीत्वा शिरसा दधौ ८८ ससंभ्रमं समानीय निधानकलशं वलाव् । निधाय भवनस्यांतं मातरं समभाषत ८९ मातर्मातरिमं पश्य प्रसादं गिरिजापतेः । निधानं कुंभरूपेण दर्शितं करुणात्मना ९० अथ सा विस्मिता साध्वी समाहूय नृपात्मजम् । स्वपुत्रं प्रतिनंद्याह मानयंती शिवार्चनम् ९१ शृणुतां मे वचः पुत्रौ निधानकलशीमिमाम् । समं विभज्य गृह्णीतां मम शासनगौरवात् ९२ इति मातृवचः श्रुत्वा तुतोष द्विजनंदनः । प्रत्याह राजपुत्रस्तां विश्रब्धः शंकरार्चने ९३ मातस्तव सुतस्यैव सुकृतेन समागतम् । नाहं गृहीतुमिच्छामि विभक्तं धनसंचयम् ९४ आत्मनः सुकृताल्लब्धं स्वयमेव भुनक्त्यसौ । स एव भगवानीशः करिष्यति कृपां मयि ९५ एवमभ्यर्चतोः शंभुं भूयोऽपि परया मुदा । संवत्सरो व्यतीयाय तस्मिन्नेव गृहे तयोः ९६ अथैकदा राजसूनुः सह तेन द्विजन्मना। वसंतसमये प्राप्ते विजहार वनांतरम् ९७ अथ दूरंगतौ क्वापि वने द्विजनृपात्मजौ । गंधर्वकन्याः क्रीडंतीः शतशस्तावपश्यताम् ९८ ताः सर्वाश्चारुसर्वांगीर्विहरंतीर्मनोहरम् । दृष्ट्वा द्विजात्मजो दूरादुवाच नृपनंदनम् ९९ इतः परं न गंतव्यं विहरंत्यग्रतः स्त्रियः । स्त्रीसंनिधानं विबुधास्त्यजंति विमलाशयाः १०० एताः कैतवधारिण्यो धनयौवनदुर्मदाः । मोहयंत्यो जनं दृष्ट्वा वाचानुनयकोविदाः १ अतः परित्यजेत् स्त्रीणां सन्निधिं सहभाषणम् ।

निजधर्मरतो विद्वान् ब्रह्मचारी विशेषतः २ अतोऽहं नोत्सहे गंतुं क्रीडास्थानं मृगीदृशाम् । इत्युक्त्वा द्विजपुत्रस्तु निवृत्तो दूरत स्थितः ३ अयासौ राजपुत्रस्तु कौतुकाविष्टमानस । तासां विहारपदवीमेक एवाऽभयो ययौ ४ तत्र गंधर्वकन्यानां मध्ये त्वेका वरांगना । दृष्ट्वाऽऽयांत राजपुत्रं चिंतयामास चेतसा ५ अहो कोऽप्यमुदारांगो युवा सर्वांगसुंदरः । मत्तमातंगगमनो लावण्यामृतवारिधि ६ लीलालोलविशालाक्षो मधुरस्मितपेशल । मदनोपमरूपश्रीः सुकुमारांगलक्षण ७ इत्याश्चर्ययुता बाला दूराद्दृष्ट्वा नृपात्मजम् । सर्वाः सखीः समालोक्य वचन चेदमब्रवीत् ८ इतोऽप्यदूरे हेसख्यो वनमस्त्येकमुत्तमम् । विचित्रचंपकाशोकपुन्नागबकुलैर्युतम् ९ तत्र गत्वा तरून् सर्वान् प्रसिच्य कुसुमोत्करम् । भवत्यः पुनरायांतु तावत्तिष्ठाम्यहं त्विह १० इत्यादिष्टः सखीवर्गो जगामापि वनांतरम् । सापि गंधर्वजा तस्यौ न्यस्तदृष्टिर्नृपात्मजे ११ तां समालोक्य तन्वंगीं नवयौवनशालिनीम् । बालां स्वरूपसंपत्त्या परिभूततिलोत्तमाम् १२ राजपुत्रः समागम्य कौतुकोत्फुल्ललोचनः । अवाप देवयोगेन मदनस्य शरव्यताम् १३ गंधर्वतनया सापि प्राप्ताय नृपसूनवे । उत्थाय तरसा तस्मै प्रददौ पल्लवासनम् १४ कृतोपचारमासीनं तमासाद्य सुमध्यमा । पप्रच्छ तद्रूपगुणैर्ध्वस्तधैर्याकुलेंद्रिया १५ कस्त्वं कमलपत्राक्ष कस्माद्देशादिहागतः । कस्य पुत्र इति प्रेम्णा पृष्टः सर्वं न्यवेदयत् १६ विदर्भराजतनयं विध्वस्तपितृमातृकम् । शत्रुभिश्च हृतस्थानमात्मानं परया गिरा १७ सर्वं भावेन भूयस्तां पप्रच्छ नृपनंदनः । का त्वं वामोरु किं चात्र कार्यं ते कस्य चात्मजा १८ किमिच्छ ध्यायसि हृदि किंवा वक्तुमिहेच्छसि । इत्युक्ता सा पुनः प्राह शृणु राजेंद्रसत्तम १९ आस्ते विद्रविको नाम गंधर्वाणां कुलाग्रणीः । तस्याहमस्मि तनया नाम्ना चांशुमती शुभा २० त्वामायांतं विलोक्याहं त्वत्संभाषणलालसा । त्यक्त्वा सखीजनं सर्वमेकैवास्मि महामते २१ सर्वसंगीतविद्यासु न मत्तोऽन्यास्ति काचन । मम

गानेन तुष्यंति सर्वा अपि सुरस्त्रियः २२ साऽहं सर्वकलाभिज्ञा ज्ञातसर्वजनेंगिता। तवाहमीप्सितं वेद्मि मयि ते संगतं मनः २३ तथा ममापि ते सौख्यं दैवेन प्रतिपादितम्। आवयोः स्नेहभेदोऽत्र नाभिभूयादितः परम् २४ इति संभाष्य तेनाशु प्रेम्णा गंधर्वकन्यका। मुक्ताहारं ददौ तस्मै स्वकुचांतरभूषणम् २५ तमादायाद्भुतं हारं स तस्याः परमाकुलः। गूढहर्षपरासिक्तामिदमाह नृपात्मजः २६ सत्यमुक्तं त्वया भीरु तथाप्येकं वदाम्यहम्। त्यक्तराज्यस्य निःस्वस्य कथं मे भवसि प्रिया २७ या त्वं पितृमती बाला विलंघ्य पितृशासनम्। स्वच्छंदाचरणं कर्तुं मूढे त्वं कथमर्हसि २८ इति तस्य वचः श्रुत्वा तं प्रत्याह शुचिस्मिता। अस्तु नाम तथैवाहं करिष्ये पश्य कौतुकम् २९ गच्छ स्वभवनं कांत परश्वः प्रातरेव तु। आगच्छ पुनरत्रैव कार्यमस्ति च नो मृषा १३० इत्युक्त्वा तं नृपं कांतं सा संगतसखीजना। अपक्रामत चार्वंगी स चापि नृपनंदनः ३१ स समभ्येत्य हर्षेण द्विजपुत्रस्य सन्निधिम्। सर्वमाख्याय तेनैव सार्द्धं स्वभवनं ययौ ३२ तां च विप्रसतीं भूयो हर्षयित्वा नृपात्मजः। परश्वो द्विजपुत्रेण सार्द्धं तस्मिन् वने ययौ ३३ स तया पूर्वनिर्दिष्टं स्थानं प्राप्य नृपात्मजः। गंधर्वराजमद्राक्षीद्दुहित्रा च समन्वितम् ३४ स गंधर्वपतिः प्राप्तावभिनंद्य कुमारकौ। उपवेश्यासने रम्ये राजपुत्रमभाषत ३५ गंधर्व उवाच। राजेंद्रपुत्र पूर्वेद्युः कैलासं गतवानहम्। तत्रापश्यं महादेवं पार्वत्या सहितं विभुम् ३६ आहूय मां स देवेशः सर्वेषां त्रिदिवौकसाम्। सन्निधावाह भगवान् करुणामृतवारिधिः ३७ धर्मगुप्ताह्वयः कश्चिद्राजपुत्रोऽस्ति भूतले। अकिंचनो भ्रष्टराज्यो हतबंधुश्च शत्रुभिः ३८ स बालो गुरुवाक्येन मदर्चायां रतः सदा। अद्य तत्पितरः सर्वे मां प्राप्तास्तत्प्रभावतः ३९ तस्य त्वमपि साहाय्यं कुरु गंधर्वसत्तम। यथा स निजराज्यस्थो हतशत्रुर्भविष्यति १४० इत्याज्ञप्तोऽहमीशेन संप्राप्य निजमंदिरम्। अनया च दुहित्रा च बहुशोऽभ्यर्थितस्तथा ४१ ज्ञात्वेमं सकलं शंभोर्नि-

योग करुगात्मनः । आदायेमां दुहितर प्राप्तोऽस्मीदं वनांतरम् ४२ अत एनां प्रयच्छामि कन्यामंशुमतीं तव । हत्वा शत्रूंस्वराष्ट्रे त्वां
स्थापयामि शिवाज्ञया ४३ तस्मिन्पुरे त्वमनया भुक्त्वा भोगान् यथोचितान् । दशवर्षसहस्रांते गंतासि गिरिशालयम् ४४ तत्रापि मम
कन्येय त्वामेव प्रतिपत्स्यते । अनेनैव स्वदेहेन दिव्येन शिवसंनिधौ ४५ इति गंधर्वराजस्तमाभाष्य नृपनंदनम् । तस्मिन्वने स्वदुहितुः
पाणिग्राहमकारयत् ४६ पारिबर्हमदात्तस्मै रत्नभारान्महोज्ज्वलान् । चूडामणिं चंद्रनिभं मुक्ताहारांश्च भास्वरान् ४७ दिव्यालंकारवासां
सि कार्तस्वरपरिच्छदान् । गजानामयुतं भूयो नियुतं नीलवाजिनाम् ४८ स्यंदनानां सहस्राणि सौवर्णानि महांति च । पुनरेकं रथं दिव्यं
धनुश्चक्रायुधोपमम् ४९ मंत्रास्त्राणां सहस्राणि तूणौ चाक्षय्यसायकौ । अमेयां सर्वजंतूनां शक्तिं च रिपुमर्दिनीम् १५० दुहितुः परिच-
र्यार्थे दासीनां च सहस्रकम् । ददौ प्रीतमनास्तस्मै धनानि विविधानि च ५१ गंधर्वसैन्यमत्युग्रं चतुरंगसमन्वितम् । पुनश्च तत्सहायार्थं
गंधर्वाधिपतिर्ददौ ५२ इत्थं राजेंद्रतनयः समाप्य श्रियमुत्तमाम् । अभीष्टजायासहितो मुमुदे निजसंपदा ५३ कारयित्वा स्वदुहितुर्विवाहं
समयोचितम् । ययौ विमानमारुह्य गंधर्वाधिपतिर्दिवम् ५४ धर्मगुप्तः कृतोद्वाहः सह गंधर्वसेनया । निःशेषितारातिबलः प्रविवेश निजं पुरम्
५५ ततोऽभिषिक्तः सचिवैर्ब्राह्मणैश्च महोत्तमैः । रत्नसिंहासनारूढश्चक्रे राज्यमकंटकम् ५६ या विप्रवनिता पूर्वं तमपुष्णात्स्वपुत्रवत् । सैव
माताभवत्तस्य स भ्राता द्विजनंदनः ५७ गंधर्वतनया जाया विदर्भविषयेश्वर । आराध्य देवं गिरिशं धर्मगुप्तो नृपोऽभवत् ५८ एवमन्ये समा-
राध्य प्रदोषे गिरिजापतिम् । लभंतेऽभीप्सितान् कामान्देहांते तु परां गतिम् ५९ सूत उवाचाएतन्महाव्रतं पुण्यं प्रदोषे शंकरार्चनम् । धर्मार्थ
काममोक्षाणां यदेतत्साधनं परम् ६० य एतच्छृणुयान्नित्यमाख्यानं परमाद्भुतम् । प्रदोषे शिवपूजांते कथयेद्वा समाहितः ६१ न भवेत्तस्य दारिद्र्य

जन्मांतरशतेष्वपि । ज्ञानैश्वर्यसमायुक्तः सोऽते शिवपुरं व्रजेत्६२ये प्राप्य दुर्लभमिदं मनुजाः शरीरं कुर्वंत्यहोऽत्र परमेश्वरपादपूजाम् । धन्यास्त एव निजपुण्यजितत्रिलोकास्तेषां पदांबुजरजो भुवनं पुनाति६३॥अथोद्यापनं शनिप्रदोषव्रतवत्॥तिथ्यादीनां तु संकल्पं पुण्यवाचनपूर्वकम्। अब्दमेकं व्रतं कृत्वा तदुद्यापनमाचरेत् १ उमया सहितं रुद्रं सुवर्णेन च कारयेत् । रौप्येण वृषभं कृत्वा कलशोपरि पूजयेत् २ ब्रह्माद्यावाहयेत्तत्र लिंगतोभद्रमंडले । स्वशाखोक्तेन विधिना हुनेद्घृततिलोदनम् ३ पृथक्शिवशिवामंत्रैरष्टोत्तरशतद्वयम् ४ इति श्रीस्कंदपु० सोद्यापनपक्षप्रदोषः समाप्तः ॥ ॥ अथमार्गशीर्षशुक्लत्रयोदश्यामनगंत्रयोदशीव्रतम् । श्रीकृष्ण उवाच । शृणु पार्थ व्रतं श्रेष्ठं नाम्नाऽनंगत्रयोदशी । या शिवायै पुरा प्रोक्ता प्रसन्नेनेंदुमौलिना १ गौर्युवाच । पुरा सौभाग्यकरणा ख्याता ऽनंगत्रयोदशी । तस्या व्रतं महादेव ममापि कथय प्रभो २ कस्मिन्मासे प्रकर्तव्यं संपूर्णं च कथं भवेत् । पूज्यानि कानि नामानि विधिना केन वै मृड ३ दुर्भगानां च नारीणां सौभाग्यकरणं प्रभो । वंध्यानां पुत्रजनकं धनधान्यविवर्द्धनम् ४ एतद्व्रतं महादेव प्रसादाद्वक्तुमर्हसि । ईश्वर उवाच । कथयामि न संदेहो महापुण्यं महाफलम् ५ चीर्णेन येन देवेशि सर्वं संपद्यते सुखम् । स्त्रीभिश्चैव विधातव्यं कर्तव्यं च प्रयत्नतः ६ हेमंते हि ऋतौ प्राप्ते मासि मार्गशिरे शुभे । शुक्लपक्षे त्रयोदश्यामुपवासं तु कारयेत् । ७ मल्लिका दंतकाष्ठं च पूजां च मरुवेण तु । नारंगेणार्घ्यदानं च नैवेद्ये फेणिकास्तथा ८ गंधपुष्पैस्तथा धूपैरर्चयेच्च यथाविधि । अक्षतैश्च फलैश्चैव एकाग्रहृदयः स्थितः ९ सम्यग्जितेंद्रियो भूत्वा ह्यनंगं हृदि कल्पयेत् । पश्चात्प्रदक्षिणां कृत्वा अर्घ्यं चैव निवेदयेत् १० नमस्कुर्यादनंगं च मंत्रेणानेन भामिनि । नमोऽस्त्वनंगदेवाय सर्वसंगनिवासिने ११ हृद्युपस्थाय नित्याय सूक्ष्माय परमेष्ठिने । स्वर्गे चैव तु पाताले मर्त्यलोके तथै-

योग करुणात्मनः । आदायेमां दुहितरं प्राप्तोऽस्मीदं वनांतरम् ४२ अत एनां प्रयच्छामि कन्यामंशुमतीं तव । हत्वा शत्रून्स्वराष्ट्रे त्वां
स्थापयामि शिवाज्ञया ४३ तस्मिन्पुरे त्वमनया भुक्त्वा भोगान् यथोचितान् । दशवर्षसहस्रांते गतासि गिरिशालयम् ४४ तत्रापि मम
कन्येयं त्वामेव प्रतिपत्स्यते । अनेनैव स्वदेहेन दिव्येन शिवसन्निधौ ४५ इति गंधर्वराजस्तमामाष्य नृपनंदनम् । तस्मिन्वने स्वदुहितुः
पाणिग्राहमकारयत् ४६ पारिबर्हमदात्तस्मै रत्नभारान्महोज्ज्वलान् । चूडामणिं चंद्रनिभं मुक्ताहारांश्च भास्वरान् ४७ दिव्यालंकारवासां
सि कार्तस्वरपरिच्छदान् । मत्तानामयुतं भूयो नियुतं नीलवाजिनाम् ४८ स्यंदनानां सहस्राणि सौवर्णानि महांति च । पुनरेकं रथं दिव्यं
धनुश्चक्रायुधोपमम् ४९ मंत्रास्त्राणां सहस्राणि तूणौ चाक्षय्यसायकौ । अभेद्यां सर्वजंतूनां शक्तिं च रिपुमर्दिनीम् ५० दुहितुः परिच-
र्यार्थं दासीनां च सहस्रकम् । ददौ प्रीतमनास्तस्मै धनानि विविधानि च ५१ गंधर्वसैन्यमत्युग्रं चतुरंगसमन्वितम् । पुनश्च तत्सहायार्थं
गंधर्वाधिपतिर्ददौ ५२ इत्थं राजेंद्रतनयः समाप्य श्रियमुत्तमाम् । अभीष्टजायासहितो मुमुदे निजसंपदा ५३ कारयित्वा स्वदुहितुर्विवाहं
समयोचितम् । ययौ विमानमारुह्य गंधर्वाधिपतिर्दिवम् ५४ धर्मगुप्तः कृतोद्वाहः सह गंधर्वसेनया । निःशेषितारातिबलः प्रविवेश निजं पुरम्
५५ ततोऽभिषिक्तः सचिवैर्ब्राह्मणैश्च महोत्सवे । रत्नसिंहासनारूढश्चक्रे राज्यमकंटकम् ५६ या विप्रवनिता पूर्वं तमपुष्णात्स्वपुत्रवत् । सैव
माताभवत्तस्य स भ्राता द्विजनंदनः ५७ गंधर्वतनया जाया विदर्भविषयेश्वरः । आराध्य देवं गिरिशं धर्मगुप्तो नृपोऽभवत् ५८ एवमन्ये समा
राध्य प्रदोषे गिरिजापतिम् । लभंतेऽभीप्सितान् कामान्देहांते तु परां गतिम् ५९ सूत उवाच । एतन्महाव्रतं पुण्यं प्रदोषे शंकरार्चनम् । धर्मार्थ
काममोक्षाणां यदेतत्साधनं परम् ६० य एतच्छृणुयान्नित्यमाख्यानं परमाद्भुतम् । प्रदोषे शिवपूजांते कथयेद्वा समाहितः ६१ न भवेत्तस्य दारिद्र्य

जन्मांतरशतेष्वपि । ज्ञानैश्वर्यसमायुक्तः सोंऽते शिवपुरं व्रजेत् ६२ ये प्राप्य दुर्लभमिदं मनुजाः शरीरं कुर्वंत्यहोऽत्र परमेश्वरपादपूजाम् । धन्यास्त एव निजपुण्यजितत्रिलोकास्तेषां पदांबुजरजो भुवनं पुनाति ६३ ॥ अथोद्यापनं शनिप्रदोषव्रतवत् ॥ तिथ्यादीनां तु संकल्पं पुण्यवाचनपूर्वकम् । अब्दमेकं व्रतं कृत्वा तदुद्यापनमाचरेत् १ उमया सहितं रुद्रं सुवर्णेन च कारयेत् । रौप्येण वृषभं कृत्वा कलशोपरि पूजयेत् २ ब्रह्माद्यावाहयेत्तत्र लिंगतोभद्रमंडले । स्वशाखोक्तेन विधिना हुनेद्घृततिलोदनम् ३ पृथक्शिवशिवामंत्रैरष्टोत्तरशतद्वयम् ४ इति श्रीस्कंदपु० सोद्यापनपक्षप्रदोषः समाप्तः ॥ ॥ अथमार्गशीर्षशुक्लत्रयोदश्यामनगंत्रयोदशीव्रतम् । श्रीकृष्ण उवाच । शृणु पार्थ व्रतं श्रेष्ठं नाम्नाऽनंगत्रयोदशी । या शिवायै पुरा प्रोक्ता प्रसन्नेनेंदुमौलिना १ गौर्युवाच । पुरा सौभाग्यकरणा ख्याता ऽनंगत्रयोदशी । तस्या व्रतं महादेव ममापि कथय प्रभो २ कस्मिन्मासे प्रकर्तव्यं संपूर्णं च कथं भवेत् । पूज्यानि कानि नामानि विधिना केन वै मृड ३ दुर्भगानां च नारीणां सौभाग्यकरणं प्रभो । वंध्यानां पुत्रजनकं धनधान्यविवर्द्धनम् ४ एतद्व्रतं महादेव प्रसादाद्वक्तुमर्हसि । ईश्वर उवाच । कथयामि न संदेहो महापुण्यं महाफलम् ५ चीर्णेन येन देवेशि सर्वं संपद्यते सुखम् । स्त्रीभिश्चैव विधातव्यं कर्तव्यं च प्रयत्नतः ६ हेमंते हि ऋतौ प्राप्ते मासि मार्गशिरे शुभे । शुक्लपक्षे त्रयोदश्यामुपवासं तु कारयेत् । ७ मल्लिका दंतकाष्ठं च पूजां च मरुवेण तु । नारंगेणार्घ्यदानं च नैवेद्ये फेणिकास्तथा ८ गंधपुष्पैस्तथा धूपैरर्चयेच्च यथाविधि । अक्षतैश्च फलैश्चैव एकाग्रहृदयः स्थितः ९ सम्यग्जितेंद्रियो भूत्वा ह्यनंगं हृदि कल्पयेत् । पश्चात्प्रदक्षिणां कृत्वा अर्घ्यं चैव निवेदयेत् १० नमस्कुर्यादनंगं च मंत्रेणानेन भामिनि । नमोऽस्त्वनंगदेवाय सर्वसंगनिवासिने ११ हृद्युपस्थाय नित्याय सूक्ष्माय परमेष्ठिने । स्वर्गे चैव तु पाताले मर्त्यलोके तथै-

व च १२ सर्वव्यापिन्ननंग त्वं गृहाणार्घ्यं नमोऽस्तु ते । इत्यर्घ्यम् ॥ पूजयेत्स्वस्थचित्तेन प्राशयेन्मधु वै निशि १३ रमातुल्या भवे-
न्नारी सौभाग्यमतुलं भवेत् । नश्यंति सर्वपापानि ह्यन्यजन्मकृतानि च १४ लावण्यमतुलं चैव रूपैश्वर्यसमन्वितम् । अश्वमेध-
स्य यज्ञस्य फलं प्राप्नोति माधवः १५ पौषे शुक्लत्रयोदश्यामौदुंबरं दंतधावनम् । जातिपुष्पैः पूजनं स्यात्दाडिमेनार्घ्यमेव च १६
अशोकवर्तिका स्निग्धा नैवेद्यं च प्रकल्पयेत् । उपोष्य पूजयेद्देवं भक्त्या नाथेश्वरं प्रिये १७ नाथेश्वराय शर्वाय ईश्वराय नमो नमः । नमस्ते
भुवनेशाय गृहाणार्घ्यं नमो नमः १८ इत्यर्घ्यम् ॥ व्रतस्थः स्वस्थचित्तेन घृतं प्राशयेन्निशि । सर्वपापविशुद्धात्मा सौभाग्यमतुलं भवे-
त् १९ माघे शुक्लत्रयोदश्यामुपवासं च कारयेत् । विष्णुक्रांतेन काष्ठेन दंतान्संशोधयेच्छुचिः २० कुंदपुष्पैः समभ्यर्च्य ह्यर्घ्यं जंबीर-
पूर्वकम् । नैवेद्ये शर्करां दद्याद्देवो योगेश्वरस्तथा २१ योगेश्वराय देवाय योगजटानिवासिने । गृहाणार्घ्यं मया दत्तं योगेश्वर नमोऽस्तु
ते २२ इत्यर्घ्यम् ॥ मौक्तिकं प्राशयेद्रात्रौ वाजपेयफलं लभेत् । फाल्गुनस्य सिते पक्षे त्रयोदश्यां शुचिस्मिता २३ बदर्या दंतकाष्ठं च
जपापुष्पैस्तु पूजयेत् । अपूपैस्तु च नैवेद्यं वीरेशं नामपूजनम् २४ वीरेश्वर वीरभद्र उमाकांत सुरेश्वर । सपूगं च गृहाणार्घ्यं मयादत्तं महे-
श्वर २५ सीतातुल्या भवेन्नारी कंकोलं प्राशयेन्निशि । चैत्रशुक्लत्रयोदश्यां मल्लिकादंतधावनम् २६ दमनेनार्चयेद्देवं जंबीरार्घ्यं प्रकल्पये-
त् । नैवेद्ये शष्कुल्यः प्रोक्ता विश्वरूपं तु पूजयेत् २७ नमस्ते विश्वरूपाय स्वरूपाय महात्मने । गृहाणार्घ्यं मया दत्तं विश्वरूप नमोस्तुते२८
इत्यर्घ्यम् । उमातुल्या भवेन्नारी कर्पूरं प्राशयेन्निशि । वैशाखशुक्लपक्षे तु अपामार्गेण पूर्ववत् २९ पूजां च मल्लिकापुष्पैः खर्जूरार्घ्यं तु दा-
पयेत् । नैवेद्ये घटकान् दद्यान्महारूपं तु पूजयेत् ३० महारूप नमस्तेऽस्तु सर्वविज्ञानरूपिणे । गृहाणार्घ्यं मया दत्तं महारूप नमोस्तु ते ।

३१ इदमर्घ्यम् ॥ ततः शुद्धमना भूत्वा जातीतोयं पीबेन्निशि । ज्येष्ठे शुक्लत्रयोदश्यां निर्गुंडीदंतधावनम् ३२ पूजा बकुलपुष्पैश्च श्रीफलेनार्घ्यकल्पना । नैवेद्ये मंडकान्दद्याल्लवंगं प्राशयेन्निशि ३३ प्रद्युम्नं पूजयेद्देवं सर्वपापप्रणाशनम् । नमस्ते पशुपतये प्रद्युम्न भुवनेश्वर ३४ गृहाणार्घ्यं मया दत्तं प्रद्युम्न परमेश्वर । इत्यर्घ्यम् । सुवर्णशतदानस्य फलमष्टगुणं भवेत् ३५ शुचि शुक्ले त्रयोदश्यां नारिंगं दंतधावनम् । कदंबैः पूजयेद्देवं नारिकेलार्घ्यदानतः ३६ नैवेद्यं दधिभक्तं च पूजयेच्च उमापतिम् । स्वस्थेन मनसा तत्र बिल्वतोयं पिबेन्निशि ३७ उमापते महाबाहो कामदेवस्य नायक । गृहाणार्घ्यं चंद्रमौले ह्युमाकांत नमोऽस्तु ते ३८ इत्यर्घ्यम् । वाजपेयस्य यज्ञस्य फलं प्राप्नोति मानवः । श्रवणस्य सिते पक्षे त्रयोदश्यां शुभव्रतः ३९ कारंजं दंतकाष्ठं च पद्मपुष्पैस्तु पूजयेत् । मातुलिंगं चार्घ्यदाने दद्यात्प्रहृष्टेण चेतसा ४० नैवेद्यं पायसं दद्याच्छूलपाणिं तु पूजयेत् । प्राशयेदगरुं चैव रात्रौ जागरणं चरेत् ४१ नमस्ते गिरिजानाथ नमस्ते भक्तिभावन । गृहाणार्घ्यं मया दत्तं शूलपाणे नमोऽस्तु ते ४२ इत्यर्घ्यम् । सौत्रामणेश्च यज्ञस्य फलमष्टगुणं भवेत् । भाद्रे शुक्लत्रयोदश्यां कंकोलं दंतधावनम् ४३ अर्चयेच्चंपकैः पुष्पैर्नैवेद्ये घृतपूरिकाः । अर्घ्ये निंबूफलं दद्यात्सद्योजातं तु पूजयेत् ४४ ततः स्वस्थमना भूत्वा केशरं प्राशयेन्निशि । त्रिदशेशाय देवाय सद्योजाताय वै नमः ४५ गृहाणार्घ्यं मया दत्तं सद्योजात नमोस्तु ते । इत्यर्घ्यम् । दशानामश्वमेधानां फलमाप्नोति मानवः ४६ आश्विने च त्रयोदश्यां कंकतीदंतधावनम् । अर्चयेत्करवीरैस्तु अर्घ्ये कर्कटिकाफलम् ४७ त्रिदशाधिपतिः पूज्यो नैवेद्ये शुभ्रमंडकान् । प्राशयेत्कांचनं तोयं निशि देवं प्रपूज्य च ४८ त्रिदशाधिप देवेश उमाकांत महेश्वर । त्रिधारूपमयस्त्वंहि अर्घोऽयं प्रतिगृह्यताम् ४९ इत्यर्घ्यम् । चातुर्मास्यस्य यज्ञस्य फलं दशगुणं भवेत् । कार्तिके च त्रयोदश्यां कदंबं दंतधा-

नम् ५० रक्तोत्पलैः पूजनं च कूष्मांडार्घं प्रदापयेत् । नैवेद्ये पूरिका दद्यात्पूजयेज्जगदीश्वरम् ५१ प्राशयेन्मौक्तिकजलं निशि चैव समाहितः । नमस्ते जगदीशाय त्रापिने शूलपाणये ५२ गृहाणार्घ्यं महेशान जगदीश नमोऽस्तु ते । इत्यर्घ्यम् । पूजांते जागरं कुर्या द्गीतवाद्यमहोत्सवैः ५३ अर्धनारीश्वरं कुर्यात्सौवर्णं स्वयमेव च । वस्त्रयुग्मेन संवेष्ट्य शय्यायां विनिवेशयेत् ५४ एवं कृत्वा तु देवेश शोभां तत्र तु कारयेत् । श्वेतपुष्पैस्तु संपूज्य श्वेतचंदनचर्चितम् ५५ धूपैर्दीपैश्च नैवेद्यैः सवत्सां गां पयस्विनीम् । श्वेतवस्त्रपरीधानां घंटाभरणभूषिताम् ५६ सुसूक्ष्मवस्त्रयुगुलमाचार्याय निवेदयेत् । तथैव दक्षिणां दद्यादासनं चैव पादुके ५७ छत्रं च मुद्रिकां चैव कंकणं भूषणं शुभम् । शय्या दिव्या प्रदेया तु तूलाच्छादनसंयुता ५८ गृहोपस्करसंयुक्ता भक्तिसंयुक्तचेतसा । तत्रोपवेश्य चाचार्यमुप वासव्रती ततः ५९ पादौ मूर्ध्नि समारोप्य प्रणिपत्य वचो वदेत् । भगवंस्त्वत्प्रसादेन व्रतसंपूर्णता मम ६० एवमस्त्विति स ब्रूयात्त्वं तुष्टोऽस्तु शंकरः । ईश्वर उवाच ॥ एवं कृत्वा प्रयत्नेन दंपती चैव पूजयेत् ६१ तयोश्च भोजनं दद्याद्दंपत्योः पारितोषकम् । अनेन वि धिना तुष्याम्यहं युक्तस्त्वयाऽनघे ६२ तेभ्यो दत्तं च यत्किंचिदक्षयं नात्र संशयः । आचार्यमग्रतः कृत्वा तस्यादेशं तु कारयेत् ६३ न ह्याचार्यसमं तीर्थं न ह्याचार्यसमं तपः । तस्मात्कायमास्थाय सर्वसिद्धिं नयेद्ध्रुवम् ६४ तेनैवाचार्यदानेन सर्वं भवति चाक्षयम् । एत द्व्रतं मम श्रेष्ठं गुह्याद्गुह्यतरं परम् ६५ राज्यमर्थान् सुतान् सिद्धिमैश्वर्यं प्रयच्छति । रूपं धनं धान्यमायुरारोग्यं च प्रदापये ६६ इष्ट लाभं च सौभाग्यं वर्द्धयिष्ये वरानने । त्रयोदशीव्रतान्नास्ति सौभाग्यकरणं परम् ६७ ॥ इति भ० अनंगत्रयोदशीव्रतं संपूर्णम् ॥ इति त्र योदशीव्रतानि ॥ ॥ ४ ॥ अथ चतुर्दशीव्रतानि लिख्यंते ॥ ॥ तत्र चैत्रशुक्लचतुर्दशी पूर्वा ग्राह्या । निशि भ्रमंति भूतानि शक्त-

यः शूलभृद्यतः । अतस्तत्र चतुर्दश्यां सत्यां तत्पूजनं भवेत् १ मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी । सा रात्रिव्यापिनी ग्राह्या नान्या शुक्ला कदाचन २ चैत्रकृष्णचतुर्दश्यां विशेषः स्मर्यते । पृथ्वीचंद्रोदये पुलस्त्यः । चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ । न प्रेतत्वमवाप्नोति गंगायां तु विशेषतः ३ इयं च पूर्वा ग्राह्या। इति चैत्रकृष्णचतुर्दशी ॥ ॥अथ वैशाखशुक्लचतुर्दश्यां नृसिंहचतुर्दशीव्रतम् । तच्च प्रदोषव्यापिन्यां कार्यम् । तदुक्तं नृसिंहपुराणे हेमाद्रौ । वैशाखे शुक्लपक्षे तु चतुर्दश्यां निशामुखे । मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशनम् । वर्षेवर्षे च कर्तव्यं मम संतुष्टिकारणमिति १ स्कांदेपि — वैशाखस्य चतुर्दश्यां सोमवारे ऽनिलर्क्षके । अवतारो नृसिंहस्य प्रदोषसमये द्विजाः २ अनिलर्क्षं स्वाती । दिनद्वये तद्व्याप्तावव्याप्तौ अंशतः समव्याप्तौ च परा । विषमव्याप्तौ त्वधिकव्याप्तिरिति । दिनद्वयेप्यव्याप्तौ पूर्वा । पूर्वदिने गौणकालव्याप्तेः सत्त्वात्परदिने च तदभावात् । अस्यां च संकल्परूपव्रतोपक्रमो मध्यान्ह एव कर्तव्यः । स्वातीनक्षत्रयोगे च शनिवारे महद्व्रतम् । सिद्धियोगस्य संयोगे वणिजे करणे तथा १ पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः । एभिर्योगैर्विनापि स्यान्मद्दिनं पापनाशनम् २ सर्वेषामेव वर्णानामधिकारोऽस्ति मद्व्रते ॥ तथा । अनंगेन समायुक्ता न सोपोष्या चतुर्दशी ३ धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् ४ इति तत्रैव निषेधात् । विज्ञाय मद्दिनं यस्तु लंघयेत्पापकृन्नरः । स याति नरकं घोरं यावच्चंद्रदिवाकरौ ५ ततो मध्याह्नवेलायां नद्यादौ स्नानमाचरेत् । परिधाय ततो वस्त्रं व्रतकर्म समारभेत् ६ इतिव्रतविधिः ॥ ॥ अथ कथा ॥ सूत उवाच । हिरण्यकशिपुं हत्वा देवदेवं जगद्गुरुम् । सुखासीनं च नृहरिं शांतकोपं रमापतिम् १ प्रल्हादो ज्ञानिनां श्रेष्ठो पालयन् राज्यमुत्तमम् । एकाकी च तदुत्संगे प्रियं वचनमब्रवीत् २ प्रल्हाद उवाच ॥ नमस्ते भगवन्विष्णो नृसिंहरूपिणे नमः । त्वद्भक्तोऽहं

सुरेशैकं त्वां पृच्छामि तु तत्त्वतः ३ स्वामिन् त्वयि ममाभिन्ना भक्तिर्जाता त्वनेकधा । कथं च ते प्रियो जातः कारणं मे वद प्रभो ४
नृसिंह उवाच । कथयामि महाप्राज्ञ शृणुष्वैकाग्रमानसः । भक्तेर्यत्कारण वत्स प्रियत्वस्य च कारणम् ५ पुरा काले समुद्विग्नः किंचि
त्त्व नाप्यधीतवान् । नाम्ना त्वं वासुदेवो हि वेश्यासंसक्तमानसः ६ तस्मिञ्जातु न चैव त्व चकर्थ सुव्रतं कियत् । कृतवान्मद्व्रतं चैक
वेश्यासंगतिलालसः ७ मद्व्रतस्य प्रभावेण भक्तिर्जाता तवानघ ॥ प्रह्लाद उवाच ॥ श्रीनृसिंहोच्यतां तावत्कस्य पुत्रस्य किं व्रतम् ८
वेश्यायां वर्तमानेन कथं तद्व कृत मया । येन त्वत्प्रीतिमापन्नो वक्तुमर्हसि सांप्रतम् ९ नृसिंह उवाच । पुराऽवन्तीपुरे ह्यासीद्ब्राह्मणो वेद
पारगः । तस्य नाम सुशर्मेति बहुलोकेषु विश्रुतः १० नित्यहोमक्रियां चैव विदधाति द्विजोत्तमः । ब्रह्मक्रियासु नियतः सर्वासु कि
ल तत्परः ११ अग्निष्टोमादिभिर्यज्ञैरिष्टाः सर्वे सुरोत्तमाः । तस्य भार्या सुशीलाऽभूद्विख्याता भुवनत्रये १२ पतिव्रता सदाचारा प
तिभक्तिपरायणा । जज्ञिरेऽस्यां सुताः पंच तस्माद्द्विजवरात्तथा १३ सदाचारेषु विद्वांसः पितृभक्तिपरायणा । तेषां मध्ये कनिष्ठस्त्वं वे
श्यासंगतितत्परः १४ तथापि विद्यमानेन सुरापान सुपातकम् । सौवर्णं चाप्यपहृत चौरैः सार्धं त्वया बहु १५ विलासिन्या समं चैव त्वया ची
र्णमघ बहु । एकदा तद्गृहे चासीन्महान्कलिस्त्वया सह १६ तेन कलहभावेन व्रतमेतत्त्वया कृतम् । अज्ञानान्मद्व्रत जातं व्रतानामुत्तमं
हि तव १७ तस्यां विहारयोगेन रात्रौ जागरण कृतम् । वेश्याया वल्लभ किंचित्प्रजात न त्वया सह १८ रात्रौ जागरण चीर्णं त्यक्त
भोग्यमनेकधा । व्रतेनानेन चीर्णेन मोदंति दिवि देवताः १९ सृष्ट्यर्थे च पुरा ब्रह्मा चक्रे चैतदनुत्तमम् । मद्व्रतस्य प्रभावेण निर्मितं स
चराचरम् २० ईश्वरेण पुरा चीर्णं वधार्थं त्रिपुरस्य च । महाप्राज्ञेन विहितं व्रतमेतन्महाफलम् २१ एतद्व्रतप्रभावेण सर्वे सिद्धिमुपाग

ताः । वेश्यापि मत्प्रिया जाता त्रैलोक्ये सुखचारिणि २२ ईदृशं मद्व्रतं वत्स त्रैलोक्येषु सुविश्रुतम् । कलहेन विलासिन्या व्रतमेतदुप-
स्थितम् २३ प्रह्लाद तेन ते भक्तिर्मयि जाता ह्यनुत्तमा । धूर्तया च विलासिन्या ज्ञात्वा व्रतमिदं महत् २४ कलहश्च कृतो येन मद्व्रतं
यत्कृतं भवेत् । सा वेश्या तु वरा जाता भुक्त्वा भोज्याननेकशः २५ मुक्ता कर्मविलीना तु त्वं प्रह्लाद विशस्व माम् । कार्यार्थं च भ-
वानास्ते मच्छरीरे पृथक्तया २६ विधाय सर्वकार्याणि शीघ्रं चैव गमिष्यसि । य इदं व्रतमावश्यं प्रकरिष्यंति मानवाः २७ न तेषां
पुनरावृत्तिर्मत्तः कल्पशतैरपि । अपुत्रो लभते पुत्रं धनकामो धनं तथा २८ ज्ञानी च मम भक्तश्च दिव्यं सौख्यं लभेन्नरः । स्त्रियो वा
पुरुषाश्चापि कुर्वंति व्रतमुत्तमम् २९ तेभ्यो ददाम्यहं सौख्यं भुक्तिमुक्तिसमन्वितम् । बहुनोक्तेन किं वत्स व्रतस्य फलमुत्तमम् ३०
प्रह्लाद उवाच । व्रतस्यास्य फलं साधु त्वयि मे भक्तिकारणम् । स्वामिञ्ज्ञातं विशेषेण त्वत्तः पापनिकृंतनम् ३१ अधुना श्रोतुमि-
च्छामि व्रतस्यास्य विधिं परम् । कस्मिन्मासे भवेदेतत्कस्मिन्वा तिथिवासरे ३२। एतद्विस्तरतो देव वक्तुमर्हसि सांप्रतम् । विधिना येन
वै स्वामिन्समग्रफलभुग्भवेत् ३३ ममोपरि कृपां कृत्वा ब्रूहि त्वं सकलं प्रभो । नृसिंह उवाच । साधु साधु महाभाग व्रतस्यास्य विधिं
परम् ३४ सर्वं कथयतो मेऽद्य त्वमेकाग्रमनाः शृणु । वैशाखशुक्लपक्षे तु चतुर्दश्यां समाचरेत् ३५ मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशन-
म् । वर्षे वर्षे तु कर्तव्यं मम संतुष्टिकारकम् ३६ महापुण्यमिदं श्रेष्ठं मानुषैर्भवभीरुभिः । तेनैव क्रियमाणेन सहस्रद्वादशीफलम् ३७
जायते मद्व्रताद्वच्मि मानुषाणां महात्मनाम् । स्वातीनक्षत्रयोगे च शनिवासरसंयुते ३८ सिद्धियोगस्य योगे च वणिजे करणे तथा । पु-
ण्यसौभाग्ययोगेन लभ्यते दैवयोगतः ३९ सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम् । केवलेपि च कर्तव्यं मद्दिने व्रतमुत्तमम् ४० अन्य-

या नरकं याति यावच्चन्द्रदिवाकरौ । यथायथा प्रवृत्ति स्यात्पातकस्य कलौ युगे ४१ तथातथा प्रणश्यति सर्वे धर्मा न संशयः । एतद्व
तप्रभावेण मद्भक्ति स्यात्पुरात्मनाम् ४२ विचार्येत्थं प्रकर्तव्यं माधवे मासि तद्व्रतम् । निश्चयश्च प्रकर्तव्यो दंतधावनपूर्वकम् ४३ श्रीनृसिंह
कृपां कृत्वा महाविष्णो ममोपरि । अद्याहं ते विधास्यामि व्रतं निर्विघ्नतां नय ४४ इति नियममन्त्रः ॥ व्रतस्थेन न कर्तव्या संगतिः
पापिभिः सह । मिथ्यालापो न कर्तव्यः समग्रफलकांक्षिभिः ४५ स्त्रीभिर्दुष्टैश्च आलापान्व्रतस्थो नैव कारयेत् । स्मर्तव्यं च महारूपं
मद्दिने सकले शुभे ४६ ततो मध्याह्नवेलायां नद्यादौ विमले जले । वैदिकेन च मन्त्रेण स्नानं कुर्याद्विचक्षणः ४७ मृत्तिकागोमयेनैव त-
था धात्रीफलेन च । तिलैश्च सर्वपापघ्नैः स्नानं कार्यं महात्मभिः ४८ परिधाय शुचिर्वासो नित्यकर्म समाचरेत् । ततो गृहं समागत्य
स्मर मां भक्तियोगतः ४९ गोमयेन प्रलिप्याथ कुर्यादष्टदलं शुभम् । कलशं तत्र संस्थाप्य ताम्रं रत्नसमन्वितम् ५० तस्योपरि न्यसेत्पात्रं
वंशजं व्रीहिपूरितम् । हैमी तत्र च मन्मूर्तिः स्थाप्या लक्ष्म्यास्तथैव च ५१ पलेन वा तदर्धेन तदर्धार्धेन वा पुनः । यथाशक्त्याऽथवा का
र्या वित्तशाठ्यविवर्जितैः ५२ पञ्चामृतेन संस्नाप्य पूजनं तु समाचरेत् । ततो ब्राह्मणमाहूय तमाचार्यमलोलुपम् ५३ सदाचारसमायुक्तं
शांतं दांतं जितेंद्रियम् । तेनैव कारयेत्पूजां हृष्टः शास्त्रानुसारतः ५४ आचार्यवचनाद्धीमान्पूजां कुर्याद्यथाविधि । मण्डपं कारयेत्तत्र पु
ष्पस्तवकशोभितम् ५५ ऋतुकालोद्भवैः पुष्पैः पूजयेत्स्वस्थमानसः । उपचारैः षोडशभिर्मन्त्रैर्वेदोक्तैस्तथा ५६ ततः पौराणिकैर्मन्त्रैः पूज-
नीयो यथाविधि । चंदनं शीतलं दिव्यं कस्तूरी कुंकुमं तथा ५७ ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर ५८ चंदनम् । कालोद्भवानि
पुष्पाणि तुलस्यादीनि वै प्रभो । संगृहाण देवेश लक्ष्म्या सह नमोस्तु ते ५९ पुष्पाणि । कृष्णागरुमयं धूपं श्रीनृसिंह जग

त्पते । तव तुष्ट्यै प्रदास्यामि सर्वदेव नमोऽस्तु ते ६० धूपम् । सर्वतेजोद्भवं तेजस्तस्माद्दीपं ददामि ते । श्रीनृसिंह महाबाहो तिमिरं मे विनाशय ६१ दीपम् । नैवेद्यं गृह्यतां देव भक्ष्यभोज्यसमन्वितम् । ददामि ते रमाकांत सर्वपापक्षयं कुरु ६२ नैवेद्यम् । पीतांबर महाबाहो प्रह्लादभयनाशन । तथाभूतेनार्चनेन यथोक्तफलदो भव ६३ इति प्रार्थना । रात्रौ जागरणं कुर्याद्गीतवादित्रनिस्वनैः । पुराणश्रवणाद्यैश्च श्रोतव्याश्च कथाः शुभाः ६४ ततः प्रभातसमये स्नानं कृत्वा जितेंद्रियः । पूर्वोक्तेन विधानेन पूजयेन्मां प्रयत्नतः ६५ वैष्णवान्मन्त्रजपेन्मंत्रान्मदग्रे स्वस्थमानसः । ततो दानानि देयानि वक्ष्यमाणानि चानघ ६६ पात्रेभ्यस्तु द्विजेभ्यो हि लोकदर्पजिगीषया । सिंहः स्वर्णमयो देवो मम संतोषकारकः ६७ गोभूतिलहिरण्यानि देयानि च फलेप्सुभिः । शय्या सतूलिका देया सप्तधान्यसमन्विता ६८ अन्यानि च यथाशक्त्या देयानि मम तुष्टये । वित्तशाठ्यं न कुर्वीत यथोक्तफलकांक्षया ६९ ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् । निर्धनेनापि कर्तव्यं देयं शक्त्यनुसारतः ७० सर्वेषामेव वर्णानामधिकारोऽस्ति मद्व्रते । मद्भक्तैस्तु विशेषेण कर्तव्यं मत्परायणैः ७१ तद्वंशे न भवेदुःखं न दोषो मत्प्रसादतः । मां समुद्धर देवेश दुस्तराद्भवसागरात् ७२ पातकार्णवमग्नस्य व्याधिदुःखांबुवासिभिः । जीवैस्तु परिभूतस्य मोहदुःखगतस्य मे ७३ करावलंबनं देहि शेषशायिन्जगत्पते । श्रीनृसिंह रमाकांत भक्तानां भय नाशन ७४ क्षीरांबुनिधिवासिंस्त्वं चक्रपाणे जनार्दन । व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ७५ एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि । उपहारादिकं सर्वमाचार्याय निवेदयेत् ७६ दक्षिणाभिस्तु संतोष्य ब्राह्मणांस्तु विसर्जयेत् । मध्याह्ने तु सुसंयत्तो भुंजीत सह बंधुभिः ७७ य इदं शृणुयाद्भक्त्या व्रतं पापप्रणाशनम् । यस्य स्मरणमात्रेण ब्रह्महत्या व्यपोहति ७८ पवित्रं परमं गुह्यं कीर्तयेद्यस्तु मानवः । सर्वान्कामान-

वाप्नोति व्रतस्य च फलं लभेत् ७९ इति हेमाद्रौ ब्रह्मपुराणे० नृसिंहचतुर्दशीव्रतकथा समाप्ता ॥ ॥ अथ अनंतचतुर्दशीव्रतम् ॥ सा परा कार्या पूजनकालव्यापित्वात् । तथा च । अनंतं पूजयेद्यस्तु प्रातः काले समाहितः । अनंतां लभते सिद्धिं चक्रपाणेः प्रसादतः इति ब्रह्मपुराणात् । तदभावे पूर्वा उभयदिने सूर्योदयव्यापित्वे पूर्णापुत्रत्वेन परैव ग्राह्या । भाद्रे सिते चतुर्दश्यामनंतं पूजयेत्सुधीः । प्रातरेव हि पूजनम् । शुक्ला भाद्रपदस्यापि अनंताख्या चतुर्दशी । उदयव्यापिनी ग्राह्या घटिकैकापि या भवेत् । इति हेमाद्रिः । तस्मात्परैवेति सर्वसंमतम् ॥ ॥ अथानंतपूजाविधिः ॥ प्रातर्नद्यादिके स्नात्वा नित्यकर्म समाप्य च । अनंतं हृदये कृत्वा शुचिस्तत्र समाहितः । अव्रणं कलशं चैव वस्त्रयुग्मेन वेष्टितम् । मुष्टिमात्रेण दर्भैस्तु फणिराजं च कारयेत् । स्थापयेत्कलशस्याग्रे जगदाधारमव्ययम् । आराधयेदनंतं च तस्मिन्कुंभे विशेषतः । गोचर्ममात्रमालिप्य गोमयेन विचक्षणः । तन्मध्ये स्थंडिलं कृत्वा पद्ममष्टदलं लिखेत् । तस्योपरि न्यसेत्कुंभं चूतपल्लवसंयुतम् । प्राणायामं ततः कृत्वा तिथ्यादि परिकल्पयेत् । मम सकुटुंबस्य क्षेमस्थैर्यायुरारोग्यचतुर्विधपुरुषार्थसिद्ध्यर्थं मया आचरितस्य आचीर्यमाणस्य च व्रतस्य संपूर्णफलप्राप्त्यर्थं श्रीमदनंतपूजनमहं करिष्ये । तथा चासनादिकलशाराधनं करिष्ये । कलशस्य० सर्वेसमुद्राः० सितासिते० कलशेवरुणं संपूज्य । ततः शंखं घंटां च पूजयेत् । अपवित्रः पवित्रो वा० पूजाद्रव्याणि आत्मानं च प्रोक्ष्य यमुनां पूजयेत् ॥ श्रीमदनंतव्रतांगत्वेन श्रीयमुनापूजनं करिष्ये ॥ तद्यथा । लोकपालस्तुतां देवीमिंद्रनीलसमुद्भवाम् । यमुने त्वामहं ध्याये सर्वकामार्थसिद्धये । ध्यानम् ॥ सरस्वति नमस्तुभ्यं

१ पूर्णिमापुत्रत्वेन ।

सर्वकामप्रदायिनि । आगच्छ देवि यमुने व्रतसंपूर्ति हेतवे । इमंमेगंगे इत्यावाह्य ॥ सिंहासनसमारूढे देवशक्तिसमन्विते ॥ सर्वलक्षणसंपूर्णे यमुनायै नमोस्तु ते । आसनम् ॥ रुद्रपादे नमस्तुभ्यं सर्वलोकहितप्रिये । सर्वपापप्रशमनि तरंगिण्यै नमोस्तु ते । पाद्यम् ॥ गरुडपादे नमस्तुभ्यं शंकरप्रियभामिनि । सर्वकामप्रदे देवि यमुने ते नमो नमः । अर्घ्यं ॥ विष्णुपादोद्भवे देवि सर्वाभरणभूषिते । कृष्णमूर्ते महादेवि कृष्णावेण्यै नमोनमः । आचमनं ॥ सर्वपापहरे देवि विश्वस्य प्रियदर्शिनि । सौभाग्यं यमुने देहि यमुनायै नमोस्तु ते । मधुपर्कं ॥ नंदिपादे महादेवि शंकरार्द्धशरीरिणि । सर्वलोकहिते देवि भीमरथ्यै नमोस्तु ते । पंचामृतस्नानं ॥ सिंहपादोत्तमे देवि नारसिंहसमप्रभे । सर्वलक्षणसंपूर्णे भवानाशिनि ते नमः । शुद्धोदकस्नानं ॥ विष्णुपादाब्जसंभूते गंगे त्रिपथगामिनि । सर्वपापहरे देवि भागीरथ्यै नमोस्तु ते । श्वेतवस्त्रं ॥ त्र्यंबकस्य जटोद्भूते गौतमस्याघनाशिनि । सप्तधा सागरं यांति गोदावरि नमोस्तु ते । कंचुकीम् ॥ माणिक्यमुक्तावलिकौस्तुभांश्च गोमेदवैडूर्यसुपुष्परागैः । वज्रैश्च नीलैश्च सुशोभितानि गृहाण सर्वाभरणानि देवि । आभरणानि ॥ चंदनागरुकस्तूरीरोचनं कुंकुमं तथा । कर्पूरेण समायुक्तं गंधं दद्मि च भक्तितः । गंधम् ॥ श्वेतांश्च चंद्रवर्णाभान् हरिद्रारागरंजितान् । अक्षतांश्च सुरश्रेष्ठे ददामि यमुने शुभे । अक्षतान् ॥ मंदारमालतीजातीकेतकीपाटलैः शुभैः । पूजयामि च देवेशि यमुने भक्तवत्सले । पुष्पाणि ॥ अथांगपूजा ॥ चंचलायै० पादौपू० चपलायै० जानुनीपू० । भक्तवत्सलायै० कटीपू० । हरायै० नाभिंपू० । मन्मथवासिन्यै० गुह्यंपू० । अज्ञानवासिन्यै हृदयंपू० । भद्रायै० स्तनौपू० । अघहंत्र्यै० । भुजौपू० । रक्तकंठ्यै० कंठंपू० । भवहर्त्र्यै० मुखंपू० गौर्यै० नेत्रेपू० । भागीरथ्यै० ललाटंपू० । यमुनायै० शिरःपू० । सरस्वत्यै० सर्वांगंपू० ॥ अथ नामपूजा ॥ यमुनायै० सितायै० कमलायै० उत्पलायै० अभीष्टप्रदायै०

धात्र्यै० हरिहररूपिण्यै० गंगायै० नर्मदायै० गौर्यै० भागीरथ्यै० तुंगायै० भद्रायै० कृष्णावेण्यै० भवनाशिन्यै० सरस्वत्यै० कावेर्यै० सिंधवे० गौतम्यै० गोमत्यै० मायायै० मरुद्वायै० गिरिजायै० चन्द्रचूडायै० सर्वैश्वर्यै० महालक्ष्म्यै नमः ॥ सर्वपापहरे देवि सर्वोपद्रवनाशिनि । सर्वसंपत्प्रदे देवि यमुनायै नमोस्तु । इति नामपूजा ॥ दशांगो गुग्गुलोपेतः सुगंधिः सुमनोहरः । कपिलाघृतसंयुक्तो धूपोयं प्रतिगृह्यताम् । धूप ॥ घृतवर्तिसमायुक्तं वन्हिना योजितं मया । गृहाण दीपकं देवि सर्वैश्वर्यप्रदायिनि । दीपम् ॥ शर्करामधुसंयुक्तं दधि क्षीरघृतं सर्पिषा । पक्कान्नं मया दत्तं नैवेद्यं प्रतिगृह्यताम् । नैवेद्यम् ॥ पानीयं पावनं श्रेष्ठं गंगादिसरिदुद्भवम् । हस्तप्रक्षालनं देवि गृहाण मुखशोधनम् । हस्तप्रक्षालनम् ॥ मुखप्रक्षालनम् । कर्पूरेण समायुक्तं यमुने चारु चंदनम् । समर्पितं मया तुभ्यं करोद्वर्तनकं कुरु करोद्वर्तनार्थे चंदनम् ॥ इदं फलमिति फलं ॥ पूगीफलमिति तांबूलं ॥ हिरण्यगर्भेति दक्षिणाम् ॥ त्रैलोक्यपावने गंगे अंधकारविनाशिनि । पंचार्तिक्यं गृहाणेदं विष्णुप्रीत्यै नमोस्तु ते । आर्तिक्यं ॥ केतकीजातिकुसुमैर्मल्लिकामालतीभवैः । पुष्पांजलिर्मया दत्तस्तव प्रीत्यै नमोस्तु ते । पुष्पांजलिं ॥ यानि कानि चेति प्रदक्षिणां ॥ अन्यथा शरणं नास्तीति नमस्कारं ॥ सुरासुरेंद्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपंकजम् । परावरं पातु वरं सुमंगलं नमामि भक्त्या तव कामसिद्धये ॥ भवानि च महालक्ष्मि सर्वकामप्रदायिनि । व्रतं संपूर्णतां यातु यमुनायै नमोस्तु ते । इति प्रार्थना ॥ इति यमुनापूजा समाप्ता ॥ अथानंतपूजा ॥ ततस्तु मूलमंत्रेण नमस्कृत्य जनार्दनम् । नवाम्रपल्लवाभासं पिंगभ्रूश्मश्रुलोचनम् । पीतांबरधरं देवं शंखचक्रगदाधरं । अलंकृतं समुद्रस्थं विश्वरूपं विचिंतये । ध्यायामि ॥ आगच्छानंत देवेश तेजोराशे जगत्पते । इमां मया कृतां पूजां गृहाण पुरुषोत्तम । सहस्रशीर्षेत्यावाहनम् ॥ विष्टरं देहि गोविंद गोवर्द्धनधर प्रभो । अनं-

त दीयते यन्मे रत्नसिंहासने विश । पुरुषएवेदमित्यासनं ॥ यथा त्वं सर्वदेवानामिंद्रादीनां च रक्षसि । तथा मां पालयानंतत्वदंघ्रिशरणागतं । एतावानस्येति पाद्यम् । अनंतानंत देवेश अनंतफलदायक । अनंतानंतरूपोसि गृहाणार्घ्यं नमोऽस्तु ते । त्रिपादूर्ध्व इत्यर्घ्यं ॥ गंगोदकं समानीतं हेमकुंभेन योजितम् । आचम्यतां हृषीकेश प्रसीद पुरुषोत्तम । तस्माद्विराळेत्याचमनीयं ॥ अनंतगुणरूपाय विश्वरूपधराय च । नमो महात्म्यदेवाय अनंताय नमो नमः । यत्पुरुषेणेति स्नानं ॥ ततः पंचामृतस्नानं । सुरभेस्तु समुत्पन्नं देवानामपि दुर्लभम् । पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम् । आप्यायस्वेति पयःस्नानम् ॥ चंद्रमंडलसंकाशं सर्वदेवप्रियं हि यत् । ददामि दधि देवेश स्नानार्थं प्रतिगृह्यताम् । दधिक्राव्णो अकारिषमिति दधिस्नानं ॥ आज्यं सुराणामाहार आज्यं यज्ञे प्रतिष्ठितम् । आज्यं पवित्रं परमं स्ना० घृतंमिमिक्ष इति घृतस्नानं ॥ सर्वौषधिसमुत्पन्नं पीयूषसदृशं मधु । स्नानाय ते मया दत्तं गृहाण परमेश्वर । मधुवातेति मधुस्नानम् ॥ इक्षुदंडात्समुद्भूतां शर्करां मधुरां शुभाम् । स्नानाय ते मया दत्तां गृहाण परमेश्वर । स्वादुः पवस्वेति शर्करास्नानं ॥ शुद्धोदकस्नानम् । नाममंत्रैः पूजयेत् ॥ पुरुषसूक्तेन अभिषेकः ॥ तप्तकांचनवर्णाभं कौशेयं च सुनिर्मितम् । वस्त्रं गृहाण देवेश लक्ष्मीयुक्त नमोऽस्तु ते । तंयज्ञमिति वस्त्रं ॥ वस्त्रानंतरं आचमनीयं ॥ दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम । यज्ञोपवीतंपरमं० तस्माद्यज्ञादित्युपवीतं । उपवीतानंतरं आचमनीयं ॥ श्रीखंडंचंदनंदि० । तस्माद्यज्ञात्सर्वहु० । चंदनं ॥ अक्षताश्चसु० । अक्षतान् ॥ माल्यादीनि० तस्मादश्वेतिपुष्पं ॥ अथग्रंथिपूजा । श्रियैनमः । मोहिन्यै० । पद्मिन्यै० । महाबलायै० । अजायै० । मंगलायै० । वरदायै० । शुभायै० । जयायै० । विजयायै० । जयंत्यै० । पापनाशिन्यै० । विश्वरूपायै० । सर्वमंगलायैन० १४ इतिग्रंथिपूजा ॥ अथांगपूजा । मत्स्यायनमः । पादौपू० । कूर्माय०

गुल्फौपू० । वराहाय० जानुनीपू० । नारसिंहाय० ऊरूपू० । वामनाय० कटीपू० । रामाय० उदरंपू० । श्रीरामाय० हृदयंपू० । कृष्णाय० मुखंपू० । सहस्रशिरसेनमः शिरःपू० । श्रीमदनंताय० सर्वांगपू० ॥ अथावरणपूजा । अनंतस्य दक्षिणपार्श्वे रमायै० । वामपार्श्वे भूम्यैन० । इतिप्रथमावरणं॥आवरणदेवतामावाह्य हस्तं प्रक्षाल्य गंधपुष्प तर्जनीमध्यमांगुष्ठैर्धृत्वा मध्ये शंखोदकं गृहीत्वा भूमौ निक्षिप्य पुष्पं देवोपरि निक्षिपेत् । दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् । इति मंत्रमुच्चार्य जलं त्यक्त्वा पुष्पं देवोपरि न्यसेत् । इतिपूर्वादिक्रमेण ॥ वृद्धोल्काय० महोल्काय० शतोल्काय० सहस्रोल्काय० ॥ दयाब्धेत्राहि० द्वितीयावरणं २ । तथैव वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० दयाब्धेत्राहि० तृतीयावरणं० ३ । प्राच्यां केशवाय० नारायणाय० माधवाय० गोविंदाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० दयाब्धेत्राहि० चतुर्थावरणं ४ । पूर्वादिक्रमेण–मत्स्याय० कूर्माय० वराहाय० नारसिंहाय० वामनाय० रामाय० श्रीरामाय० कृष्णाय० बौद्धाय० कल्किने० अनंताय० विश्वरूपिणे० । दयाब्धेत्राहि० पंचमावरणं० ५ । पूर्वादिक्रमेण अनंताय० दक्षिणायां० ब्रह्मणेन० । पश्चिमायां० वायवे० उत्तरायां० ईशानाय० । आग्नेय्यां० वारुण्यै० । नैर्ऋत्यां० गायत्र्यै० । वायव्यां० भारत्यै० । ईशान्यां० गिरिजायै० । अग्रे गरुडाय० । वामे सुपुण्याय० । दक्षिणे । दयाब्धे० त्राहि० षष्ठावरणं ६ । पूर्वादिक्रमेण इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० । दयाब्धेत्रा० सप्तमावरणं० ७ । आग्नेय्यां शेषाय० नैर्ऋत्यां विष्णवे० वायव्यां विघ्नये० ईशान्यां प्रजापतये० । दयाब्धे त्राहि० अष्टमावरणं ८ । आग्नेय्यां गणपतये० नैर्ऋत्यां सप्तमातृभ्यो० वायव्यां दुर्गायै० ईशान्यां क्षेत्राधिपतये० ॥ दयाब्धेत्राहि० नव-

मावरणम् ९ । मध्ये ब्रह्मणेन० भास्कराय० शेषाय० सर्वव्यापिने० ईश्वराय० विश्वरूपा० महाकामाय० सृष्टिकर्त्रे० कृष्णाय० हरये० शिवाय० स्थितिकारकाय० अंतकाय० । दयाब्धेत्राहि० दशमावरणं १० । शौरये० वैकुंठाय० महाबलाय० पुरुषोत्तमाय० अजाय० पद्मनाभाय० मंगलाय० हृषीकेशाय० अनंताय० कपिलाय० शेषाय० संकर्षणाय० हलायुधाय० तारकाय० सीरपाणये० बलभद्राय० । दयाब्धेत्राहि० एकादशावरणं ११ । माधवाय० मधुसूदनाय० अच्युताय० अनंताय० गोविंदाय० विजयाय० अपराजिताय० कृष्णाय० । दयाब्धेत्राहि० द्वादशावरणं १२ । क्षीराब्धिशायिने० अच्युताय० भूम्याधाराय० लोकनाथाय० फणामणिविभूषणाय० सहस्रमूर्ध्नेन० सहस्रार्चिषे० । दयाब्धेत्राहि० त्रयोदशावरणं १३ केशवादिचतुर्विंशतिनामभिः । दयाब्धेत्राहि० इतिचतुर्दशावरणं १४ ॥ अथ पत्रपूजा । कृष्णाय० पलाशप० १ विष्णवे० औदुंबरपत्रं० २ हरये० अश्वत्थप० ३ शंभवे० भृंगिराजप० ४ ब्रह्मणे० जटाधारप० ५ भास्कराय० अशोकप० ६ शेषाय० कपित्थप० ७ सर्वव्यापिने० वटपत्रं० ८ ईश्वराय० आम्रप० ९ विश्वरूपिणे० कदलीप० १० महाकायाय० अपामार्गप० ११ सृष्टिकर्त्रेन० करवीरप० १२ स्थितिकर्त्रे० पुन्नागप० १३ अनंताय० नागवल्लीप० १४ ॥ अथ पुष्पपूजा ॥ ॐ अनंताय० पद्मपु० १ विष्णवे० जातीपु० २ केशवाय० चंपकपु० ३ अव्यक्ताय० कल्हारपु० ४ सहस्रजितेन० केतकीपु० ५ अनंतरूपिणे० बकुलपु० ६ इष्टाय० शतपु० ७ विशिष्टाय० पुन्नागपुष्पं० ८ शिष्टेष्टाय० करवीरपु० ९ शिखंडिने० धत्तूरपु० १७ नहुषाय० कुंदपु० ११ विश्वबाहवे० मल्लिकापु० १२ महीधराय० मालतीपु० १३ अच्युताय० गिरिकर्णिकापु० १४ ॥ अथाष्टोत्तरशतनामभिः पूजयेत् ॥ अनंताय० अच्युताय० अद्भुतकर्मणेन० अमितविक्रमाय० अपराजिताय० अखंडाय० अग्निनेत्राय० अग्निवपुषे०

अदृश्याय॰ अत्रिपुत्राय॰ १॰ अनुकूलाय॰ अनाशिने॰ अनघाय॰ अप्सुनिलयाय॰ अहरडाय॰ अष्टमूर्तये॰ अनिरुद्धाय॰ अनिर्विष्टाय॰ अचपलाय॰ अब्जादिकाय॰ २॰ अचलरूपाय॰ अखिलधराय॰ अव्ययाय॰ अनुरूपाय॰ अभयकराय॰ अक्षताय॰ अवपुषे॰ अयोनिजाय॰ अरविंदाक्षाय॰ अशनवर्जिताय॰ ३॰ अधोक्षजाय॰ अदितिपुत्राय॰ अंबिकापतिपूर्वजाय॰ अपस्मारनाशिने॰ अव्ययाय॰ अनादिने॰ अप्रमेयाय॰ अघशत्रवे॰ अमरारिघ्नाय॰ अनीश्वराय॰ ४॰ अजाय॰ अघोराय॰ अनादिनिधनाय॰ अमरप्रभवे॰ अग्राह्याय॰ अक्रूराय॰ अनुत्तमाय॰ अरूपाय॰ अर्केण॰ अमोघाधिपतये॰ ५॰ अजाय॰ अक्षमाय॰ अमृताय॰ अघोरवीर्याय॰ अभ्यगाय॰ अविघ्नाय॰ अतींद्रियाय॰ अमिततेजसे॰ अमितये॰ अष्टमूर्तये॰ ६॰ अनिलाय॰ अवशाय॰ अणोरणीयसे॰ असंख्याय॰ अरविंदाय॰ अधिष्ठाय॰ अमितनयनाय॰ अरण्यवासिने॰ अप्रमत्ताय॰ अनंतरूपाय॰ ७॰ अनकाय॰ अनिमिषाय॰ अव्यक्ताय॰ अग्रगण्याय॰ अममिताय॰ अंतकाय॰ अचिंत्याय॰ अपांनिधये॰ अतिसुंदराय॰ अमरप्रियाय॰ ८॰ अष्टसिद्धिप्रदाय॰ अरविंदप्रियाय॰ अरविंदोद्भवाय॰ अनयाय॰ अर्थाय॰ अक्षोभ्याय॰ अर्चिष्मते॰ अनेकमूर्तये॰ अनंतब्रह्मांडपतये॰ अनंतशयनाय॰ ९॰ अमराधिपतये॰ अनाधाराय॰ अनतनाम्ने॰ अनंतश्रिये॰ अक्षराय॰ अमाय॰ आश्रमस्थाय॰ आश्रमातीताय॰ अनादाय॰ आत्मयोनये॰ १०० अवनीपतये॰ अवनीधराय॰ अनादिने॰ आदित्याय॰ अमृताय॰ अपवर्गप्रदाय॰ अनंताय॰ १०८ इत्यष्टोत्तरशतनामपूजा। दशांग गुग्गुलोद्भूतं चंदनागरुसंयुतम्। सर्वेषामुत्तमं धूपं गृहाण सुरपूजित। यत्पुरुषंव्यदधुरितिधूप॥ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया। दीपं गृहाण देवेश त्रैलोक्यतिमिरापह। ब्राह्मणोस्येतिदीपम्॥ अन्नं चतुर्विधं स्वादु पयो दधि घृतं तथा। नानाव्यंजनशोभाढ्यं नैवेद्यं प्रति-

गृ० । चंद्रमामन० नैवेद्यम् । नैवेद्यमध्येपानीयं० उत्तरापोशनार्थं ते दद्मि तोयं सुवासितं । गृहाण सुमुखो भूत्वा अनंताय नमो नमः ॥ उत्तरापोशनं० मुखप्र० हस्तप्र० करोद्वर्तनकं देव मया दत्तं हि भक्तितः । चारु चंद्रप्रभं दिव्यं गृहाण जगदीश्वर । करोद्वर्तनं ॥ इदं फलमिति फलं । पूगीफलं महद्दिव्यं० तांबूलं ॥ हिरण्यगर्भेति दक्षिणां० । यानिकानीति० नाभ्याआसी० प्रद० । नमस्ते भगवन्भूयो नमस्ते धरणीधर । नमस्ते सर्वनागेंद्र नमस्ते मधुसूदन ॥ सप्तास्येति नमस्कारं ॥ नमस्ते देवदेवेश नमस्ते गरुडध्वज । नमस्ते कमलाकांत अनंताय नमोनमः । यज्ञेनयज्ञमिति मंत्रपुष्पं ॥ अथदोरकप्रार्थना ॥ अनंताय नमस्तुभ्यं सहस्रशिरसे नमः । नमोस्तु पद्मनाभाय नागानां पतये नमः ॥ अनंतः कामदः श्रीमाननंतो मे प्रयच्छतु । अनंतदोररूपेण पुत्रपौत्रान्प्रवर्द्धतु ॥ इतिदोरकम् ॥ अथदोरकबंधनमंत्रः । अनंतसंसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव । अनंतरूपे विनियोजयस्व ह्यनंतसूत्राय नमो नमस्ते ॥ इतिबध्वा ॥ अथजीर्णदोरकविसर्जनमंत्रः । नमःसर्वहितार्थाय जगदानंदकारक । जीर्णदोरमसुं देव विसृजेहं त्वदाज्ञया । इतिविसृजेत् ॥ अथवायनमंत्रः । गृहाणेदं द्विजश्रेष्ठ वायनं दक्षिणायुतं । त्वत्प्रसादादहं देव मुच्येयं कर्मबंधनात् ॥ प्रतिगृह्ण द्विजश्रेष्ठ अनंतफलदायक । पक्कान्नफलसंयुक्तं दक्षिणाघृतसंयुतम् ॥ अथजीर्णदोरकदानमंत्रः ॥ अनंतःप्रतिगृह्णाति अनंतो वै ददाति च । अनंतस्तारकोभाभ्यां अनंताय नमो नमः ॥ इतिदद्यात् ॥ ततः यथाशक्ति ब्राह्मणान् भोजयेत् । अनेन कृतपूजनेन श्रीमदनंतः प्रीयताम् ॥ इतिपूजाविधिः ॥ ॥ अथकथा ॥ सूतउवाच । पुरा तु जाह्नवीतीरे धर्मो धर्मपराक्रमः । जरासंधवधार्थाय राजसूयमुपाक्रमत् १ कृष्णेन सह धर्मोऽसौ भीमार्जुनसमन्वितः । यज्ञशालां प्रकुर्वीत महेंद्रालयसन्निभाम् २ यज्ञार्थं भूपतीन्सर्वान्समानीय प्रयत्नतः । गांधारीतनयो राजा एकदा नृपनंदनः ३ दुर्योधन इति

स्यात् समागत्य मसाछ्यम् । दृष्ट्वा दुर्योधनेनात्र प्रांगणं जलसन्निभम् ४ ऊर्ध्वं कृत्वा तु वस्त्राणि तत्र गच्छञ्छनैः शनैः । स्मितवक्त्राश्च
ताः सर्वा द्रौपद्यादिवरांगना ५ दुर्योधनस्ततो गच्छञ्जलमध्ये पपात ह । पुनः सर्वे नृपाश्चैव ऋषयश्च तपोधनाः ६ उपहासं च चक्रु-
स्ता द्रौपद्यादिसुलोचनाः । महाराजाधिराजो ऽसौ महाक्रोधपरायणः ७ विनिर्गत स्वकं राष्ट्रं मातुलेनावृतो नृपः । तस्मिन्काले तु श-
कुनिः प्रोवाच मधुरं वचः ८ मुंच राजन्महारोषं पुरतः कार्यगौरवात् । गंतुमुत्तिष्ठ राजेंद्र सत्रस्य सदनं प्रति ९ तथेत्युक्त्वा महाराज स
मागच्छन्मखालयात् । विनिर्गच्छन्नृपाः सर्वे त्यक्त्वा यज्ञं स्वराष्ट्रकम् १० दुर्योधन राजभिः स समागत्य गजाह्वयम् । आनीय पांडुपुत्रा
णां धर्मभीमार्जुनान्वरान् ११ द्यूतारंभं चाकुरुत स्वराज्य प्राप्नुयात्तत । द्यूतेनैव जिताः सर्वे पांडवा वीतकल्मषा १२ ततोऽरण्यांतरे
गत्वा वर्तिते वनचारिणः । ततो वृत्तांतमापन्नो भ्रातृभिः सह पांडवः १३ ॥ सूत उवाच ॥ अरण्ये वर्तमानास्ते पांडवा दुःखकर्शिता । कृष्णं
दृष्ट्वा महात्मानं प्रणिपत्य यथाक्रमम् १४ ॥ युधिष्ठिर उवाच ॥ अहं तु सीद सजातो भ्रातृभिः परिवारित । कथ मुक्तिर्भवेदास्माकमनं
ताद्दुःखसागरात् १५ क देवं पूजयिष्यामि राज्यं प्राप्स्याम्यनुत्तमम् । अथवा किं व्रतं कृत्वा त्वत्प्रसादान्निवेदितम् १६ श्रीकृष्ण उवाच ॥
अनंतव्रतमस्त्येकं तिथावस्यामनुत्तमम् । सर्वपापहरं नृणां स्त्रीणां चैव युधिष्ठिर १७ शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत् । तस्यानु
ष्ठानमात्रेण सर्वपाप व्यपोहति १८ ॥ युधिष्ठिर उवाच ॥ कृष्ण कोयमनंतेति प्रोच्यते यस्त्वया विभो । किं शेषनाग आहोस्विदनंतस्त
क्षक स्मृत १९ परमात्मा ऽथवाऽनंत उताहो ब्रह्म गीयते । क एषोऽनंतसंज्ञो वै तथ्य मे ब्रूहि केशव २० ॥ कृष्ण उवाच ॥ अनंत

१ क देवं पूजयित्वाहं प्राप्स्यामो राज्यमुत्तममिति वा पाठ ।

इत्यहं पार्थ मम रूपं निबोध तत् । आदित्यादिग्रहात्माऽसौ यः काल इति पठ्यते २१ कलाकाष्ठामुहूर्तादिदिवारात्रिशरीरवान् । पक्षमा-
सर्तुऋक्षाणि युगकालव्यवस्थया २२ योऽयं कालो मयाऽऽख्यातः सोऽनंत इति कीर्त्यते । सोऽहं कृष्णोऽवतीर्णोऽत्र भूभारोत्तारणाय च
२३ दानवानां वधार्थाय वसुदेवकुलोद्भवम् । मां विद्धि सततं पार्थ साधूनां पालनाय च २४ अनादिमध्यनिधनं कृष्णं विष्णुं हरिं शिवम् ।
वैकुंठं भास्करं सोमं सर्वव्यापिनमीश्वरं २५ विश्वरूपं महाकालं सृष्टिसंहारकारकम् । प्रत्ययार्थं मया रूपं फाल्गुनाय प्रदर्शितम् २६ पूर्वमेव महा-
बाहो योगिध्येयमनुत्तमम् । विश्वरूपमनंतं च यस्मिन्निंद्राश्चतुर्दश २७ वसवो द्वादशादित्या रुद्रा एकादश स्मृताः । सप्तर्षयः समुद्राश्च पर्वताः
सरितो द्रुमाः २८ नक्षत्राणि दिशो भूमिः पातालं भूर्भुवादिकं । माकुरुष्वात्र संदेहं सोऽहं पार्थ न संशयः २९ ॥ युधिष्ठिर उवाच ॥ अनंतव्रतमाहा-
त्म्यं विधिं वद विदांवर । किं पुण्यं किं फलं चास्य अनुष्ठानवतां नृणाम् ३० केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् । एवं सविस्तरं सर्वं ब्रूह्य-
नंतव्रतं मम ३१ ॥ कृष्ण उवाच ॥ आसीत्पुरा कृतयुगे सुमंतुर्नाम वै द्विजः । वसिष्ठगोत्रसंभूतः सुरूपां च भृगोः सुताम् ३२ दीक्षानाम्नीं चोपयेमे
वेदोक्तविधिना नृप । तस्याः कालेन संजाता दुहिता ऽनंतलक्षणा ३३ शीला नाम्नी सुशीला सा वर्द्धते पितृवेश्मनि । माता च तस्याः कालेन
ज्वरदाहेन पीडिता ३४ विनष्टा सा नदीतोये ययौ स्वर्गं पतिव्रता । सुमंतुस्तु ततोऽन्यां वै धर्मपुंसः सुतां पुनः ३५ उपयेमे विधानेन दुःशीलां ना-
म नामतः । दुःशीलां कर्कशां चंडीं नित्यं कलहकारिणीं ३६ साऽपि शीला पितुर्गेहे गृहार्चनपरा बभा । कुड्यस्तंभबहिर्द्वारदेहलीतोरणादिषु
३७ वर्णकैश्चित्रमकरोन्नीलपीतसितासितैः । स्वस्तिकैः शंखपद्मैश्च अर्चयंती पुनःपुनः ३८ ततः काले बहुगते कौमारवशवर्तिनी । एवं सा वर्द्धते

१ कालोऽवतीर्ण इत्यपि पाठः । २ अनंतं विद्धि मामिति वा पाठः । ३ विननाश नदीतीरे इतिपाठः । ४ नीलादिवर्णैः ।

शीला पितृवेश्मनि मंगला ३९ पित्रा दृष्टा तदा तेन स्त्रीचिन्हा यौवने स्थिता । तां दृष्ट्वा चिंतयामास वरानगुणान्भुवि४०कस्मै देया मया कन्या विचार्येति सुदुःखितः । एतस्मिन्नेव काले तु मुनिर्वेदविदां वरः ४१ कन्यार्थी चागतः धीमान् कौंडिन्यो मुनिसत्तमः । उवाच रूपसं पन्नां त्वदीयां तनयां वृणे ४२ पिता ददौ द्विजेंद्राय कौंडिन्याय शुभे दिने । गृह्योक्तविधिना पार्थ विवाहमकरोत्तदा ४३ मंगळाचारनि र्घोषं तत्र कुर्वंति योषितः । ब्राह्मणाः स्वस्तिवचनं जयघोषं च वंदिनः ४४ निर्वर्त्योद्वाहिकं सर्वं प्रोक्तवान् कर्कशां द्विजः ॥ सुमंतुरुवाच । किंचिद्दायादिकं देयं जामातुः पारितोषकम् ४५ तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्सार्य गृहमंडनम् । पेटके सुस्थिरं बध्वा स्वगृहं गम्यतामिति ४६ उवाच वित्तं नैवास्ति गृहे पश्य यदि स्थितम् । तच्छ्रुत्वा विमनाः पार्थ सयतात्मा मुनिस्तदा ४७ भोज्यावशिष्टचूर्णेन पाथेयं च चकार सा । कौंडिन्योपि विवाहेनां पथि गच्छञ्छनैःशनैः ४८ शीलां सुमतोरादाय नवोढां गोरथेन हि । ददर्श यमुनां पुण्यां तासु तीर्य तटे रथं ४९ संस्थाप्याऽवश्यकं कर्तुं गतः शिष्याभियुक्तो वै । मध्यान्हे भोज्यवेळायां समुत्तीर्य सरित्तटे ५० ददर्श शीला सा स्त्रीणां समूहं रक्तवाससां । चतुर्दश्यामर्चयंतं भक्त्या देवं जनार्दनं ५१ उपगम्य शनैः शीला पप्रच्छ स्त्रीकदंबकं । आर्याः किमेतन्मे ब्रूत किं नाम व्रतमीदृशं ५२ ता ऊचुर्योषितस्तां तु शीलां शीलविभूषणां । अनंतव्रतमेतद्धि व्रतेऽनंतस्तु पूज्यते ५३ साऽब्रवीदहमप्येतत्क रिष्ये व्रतमुत्तमम् । विधानं कीदृशं तत्र किं दानं कोऽत्र पूज्यते ५४ ॥ स्त्रिय ऊचु ॥ शीले सद्धान्यप्रस्थस्य पुन्नाम्ना संस्कृतस्य च । अर्धं वि प्राय दातव्यमर्धमात्मनि भोजनम् ५५ शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः । कर्तव्यं यत्सरित्तीरे कथां श्रुत्वा हरेरिमाम् ५६

१ किंचिद्धनेन यामिनि इति पाठोऽप्यस्ति ।

शेषं कुशमयं कृत्वा वंशपात्रे निधाय च । स्नात्वाऽनंतं समभ्यर्च्य मंडले दीपगंधकैः । पुष्पैर्धूपैश्च नैवेद्यैर्नानापक्वान्नसंयुतैः ५७ तस्याग्रतो दृढं सूत्रं कुंकुमाक्तं सुदोरकं । चतुर्दशग्रंथियुतं वामे करतले न्यसेत् ५८ अनंतसंसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव । अनंतरूपे विनियोजयस्व ह्यनंतसूत्राय नमो नमस्ते ५९ अनेन दोरकं बध्वा भोक्तव्यं स्वस्थमानसैः । ध्यात्वा नारायणं देवमनंतं विश्वरूपिणं ६० भुक्त्वा चांते व्रजेद्वेश्म भद्रे प्रोक्तं व्रतं तव ॥ कृष्ण उवाच ॥ एवमाकर्ण्य राजेंद्र प्रहृष्टेनांतरात्मना ६१ साऽपि चक्रे व्रतं शीला करे बध्वा सुदोरकम् । ( चतुर्दशग्रंथियुतं वामे बाहौ यथोदितम् )। पाथेयमर्धं विप्राय दत्त्वा भुक्त्वा स्वयं ततः ६२ पुनर्जगाम सा हृष्टा गोरथेन स्वकं गृहम् । भर्त्रा सहैव शनकैः प्रत्ययस्तत्क्षणादभूत् ६३ तेनाऽनंतव्रतेनाऽस्य बभौ गोधनसंकुलम् । गृहाश्रमं श्रिया जुष्टं धनधान्यसमन्वितं । आकुलं व्याकुलं रम्यं सर्वदाऽतिथिपूजनैः ६४ सापि माणिक्यकांचीभिर्मुक्ताहारैर्विभूषिता । देवांगनेव संपन्ना[1] सावित्रीप्रतिमाऽभवत् ६५ विचचार गृहे भर्तुः समीपे सुखरूपिणी । कदाचिदुपविष्टाया दृष्टो बद्धः सुदोरकः ६६ शीलाया हस्तमूले तु भर्त्रा तस्या द्विजन्मना । किमिदं दोरकं शीले मम वश्याय कल्पितं ६७ धृतं सुदोरकं त्वेतत्किमर्थं ब्रूहि तत्त्वतः ॥ शीलोवाच ॥ यस्य प्रसादात्सकला धनधान्यादिसंपदः ६८ लभ्यंते मानवैश्चापि सोऽनंतोऽयं मया धृतः । शीलायास्तद्वचः श्रुत्वा भर्त्रा तेन द्विजन्मना ६९ श्रीमदांधेन कौरव्य साक्षेपं त्रोटितस्तदा । कोऽनंत इति मूढेन जल्पता पापकारिणा ७० क्षिप्तो ज्वालाकुले वह्नौ हाहा कृत्वा प्रधावती । शीला गृहीत्वा तत्सूत्रं क्षीरमध्ये समाक्षिपत् ७१ तेन कर्मविपाकेन सा श्रीस्तस्य क्षयं गता । गोधनं तस्करैर्नीतं गृहं दग्धं धनं

१ देवांगवस्त्रसछन्नेति वा पाठः ।

गतम् ७२ यद्यथैवागतं गेहे तत्तथैव पुनर्गतम् । स्वजनैः कलहो नित्यं बंधुभिस्ताडनं तथा[1] ७३ अनंताक्षेपदोषेण दारिद्र्यं पतितं गृहे ।
न कश्चिद्वदते लोकस्तेन सार्द्धं युधिष्ठिर ७४ शरीरेणातिसंतप्तो मनसाप्यतिदुःखितः । निर्वेदं परमं प्राप्त कौंडिन्यः प्राह तां प्रियाम् ७५
कौंडिन्य उवाच । शीले ममेदमुत्पन्नं सहसा शोककारणम् । येनास्तिदु समस्माकं जातः सर्वधनक्षयः ७६ स्वजनैः कलहो गेहे न क-
श्चिन्मां प्रभाषते । शरीरे नित्यसंतापः खेदश्चेतसि दारुणः ७७ जानासि दुर्नयः कोऽत्र किं कृत्वा सुकृतं भवेत् ॥ शील्योवाच ॥ प्रत्युवा-
चाथ तं शीला सुशीला शीलमंडना ७८ प्रायो नतकृताक्षेपपापसंभवजं फलम् । भविष्यति महाभाग तदर्थं यत्नमाचर ७९ एवमुक्तः
स विप्रर्षिर्जगाम मनसा हरिम् । निर्वेदान्निर्जगामाऽथ कौंडिन्यः प्रयतो वनम् ८० तपसे कृतसंकल्पो वायुभक्षो द्विजोत्तमः । मनसा
ध्यायमानस्तं क्व द्रक्ष्यामि च तं विभुम् ८१ यस्य प्रसादात्संजातमाक्षेपान्निधनं गतम् । धनादिकं ममातीव सुखदुःखप्रदायकम् ८२
एवं संचिंतयन्सोऽथ बभ्राम गहने वने । तत्राऽपश्यन्महाचूतं पुष्पितं फलितं द्रुमम् ८३ वर्जितं पक्षिसंघातैः कीटकोटिसमावृतम् ।
तमपृच्छद्द्विजोऽनंतं कश्चिद्दृष्टो महाद्रुम ८४ ब्रूहि सौम्य ममातीव दुःखं चेतसि वर्तते । सोऽब्रवीद्द्रुम नाऽनंतः कश्चिद्दृष्टो मया द्विज ८५
एवं निराकृतस्तेन स जगामाऽथ दुःखितः । क्व द्रक्ष्यामीति गच्छन्स गां ददर्श सवत्सकाम् ८६ वनमध्ये प्रधावतीमितश्चेतश्च पांडव ।
सोऽब्रवीद्धेनुके ब्रूहि यद्यनंतस्त्वयेक्षित ८७ गौरुवाचाऽथ कौंडिन्यं नाऽनंतं वेद्म्यहं द्विज । ततो व्रजन्ददर्शाऽग्रे वृषभं शाद्वले स्थित-
म् ८८ दृष्ट्वा पप्रच्छ गोस्वामिन्ननंतो वीक्षितस्त्वया । वृषभस्तमुवाचेदं नाऽनंतो वीक्षितो मया ८९ ततो व्रजन्ददर्शाग्रे रम्यं पुष्करि-

१ पाऽनंतमिति पाठः । २ भगुर्व विशालमामसम् ।

णीद्वयम् । अन्योन्यजलकल्लोलैर्वीचिपर्यंतसंगतम् ९० छन्नं कमलकल्हारैः कुमुदोत्पलमंडितम् । सेवितं भ्रमरैर्हंसैश्चक्रकारंडवैर्ब-
कैः ९१ ते ह्यपृच्छद्द्विजोऽनंतो युवाभ्यां नोपलक्षितः । ऊचतुस्ते पुष्करिण्यौ नाऽनंतो वीक्षितो द्विज ९२ ततो व्रजन्ददर्शाग्रे गर्दभं कुं-
जरं तथा । तावप्युक्तौ द्विजेनेत्थं नेति ताभ्यां निवेदितम् ९३ एवं स पृच्छन्नष्टाशस्तत्रैव निषसाद ह । कौंडिन्यो विह्वलीभूतो निराशो
जीविते नृप ९४ दीर्घमुष्णं च निश्वस्य पपात भुवि भारत । प्राप्य संज्ञामनंतेति जल्पन्नुत्थाय स द्विजः ९५ नूनं त्यक्ष्याम्यहं प्रा-
णानिति संकल्प्य चेतसि । यावदुद्बंधनं वृक्षे चक्रे तावद्युधिष्ठिर ९६ कृपयाऽनंतदेवोपि प्रत्यक्षं समजायत । वृद्धब्राह्मणरूपेण इत ए-
हीत्युवाच तम् ९७ प्रगृह्य दक्षिणे पाणौ गुहायां प्रविवेश तम् । स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युताम् ९८ यस्यां निविष्टमात्मानं
दिव्यसिंहासने शुभे । पार्श्वस्थशंखचक्राब्जगदागरुडशोभितम् ९९ दर्शयामास विप्राय विश्वरूपमनंतकम् । विभूतिभेदैश्चानंतैराजंत-
ममितौजसम् १०० कौस्तुभेन विराजंतं वनमालाविभूषितम् । तं दृष्ट्वा तादृशं रूपमनंतमपराजितम् १ वंद्यमानो जगादोच्चैर्जयशब्द-
पुरःसरम् । पापोहं पापकर्माहं पापात्मा पापसंभवः २ त्राहि मां पुंडरीकाक्ष सर्वपापहरो भव । तच्छ्रुत्वा ऽनंतदेवेशः प्राह सुस्निग्ध-
या गिरा ३ माभैस्त्वं ब्रूहि विप्रेंद्र यत्ते मनसि वर्तते ॥ कौंडिन्य उवाच ॥ मया भूत्यवलिप्तेन त्रोटितो ऽनंतदोरकः ४ तेन पापवि-
पाकेन भूतिर्मे प्रलयं गता । स्वजनैः कलहो गेहे न कश्चिन्मां प्रभाषते ५ निर्वेदाद्भ्रमतोऽरण्ये तव दर्शनकांक्षया । कृपया देवदेवेश त्व-
या ऽऽत्मा संप्रदर्शितः ६ तस्य पापस्य मे शांतिं कारुण्याद्वक्तुमर्हसि ॥ श्रीकृष्ण उवाच ॥ तच्छ्रुत्वा ऽनंतदेवेश उवाच द्विजसत्तमम् ७

१ स्वीयं रूपमित्यपि पाठः ।

भक्त्या सतोषितो देवः किं न दद्यायुधिष्ठिर ॥ अनत उवाच । स्वगृहे गच्छ कौंडिन्य मा विलब कुरु द्विज ८ चराऽनंतव्रत भक्त्या
नव वर्षाणि पच च । सर्वपापविशुद्धात्मा प्राप्स्यसे सिद्धिमुत्तमाम् ९ पुत्रपौत्रान्समुत्पाद्य भुक्त्वा भोगान्यथेप्सितान् । अंते मत्स्मरण
प्राप्य मामुपेष्यस्यसशयम् ११० अन्य च ते वर दद्मि सर्वलोकोपकारकम् । इदमाख्यानकवर शीलानतव्रतादिकम् ११ करिष्यति नरो
यस्तु कुर्वं व्रतमिद शुभम् । सोऽचिरात्पापनिर्मुक्तः प्राप्नोति परमां गतिम् १२ गच्छ विप्र गृहं शीघ्र यथा येनागतो ह्यसि ॥ कौंडिन्य उ
वाच । स्वामिन्पृच्छामि ते ब्रूहि किंचित्कौतूहल मया १३ अरण्ये भ्रमता दृष्ट तद्वदस्व जगद्गुरो । यश्चूतवृक्षः कस्तत्र का गौः को वृष
भस्तथा १४ कमलोत्पलकह्लारैः शोभित सुमनोहरम् । मया दृष्ट महारण्ये किं तत्पुष्करिणीद्वयम् १५ कः खर कुंजरः कोऽसौ कोऽसौ
वृद्धो द्विजोत्तमः ॥ अनत उवाच ॥ स चूतवृक्षो विप्रोऽसौ विद्यावेदविशारदः १६ विद्या न दत्ता शिष्येभ्यस्तेनाऽसौ तरुतां गतः । या गौ-
र्वसुंधरा दृष्टा पूर्वं सा बीजहारिणी १७ वृषो धर्मस्त्वया दृष्टः शाद्वल सत्यमास्थितः । धर्माधर्मव्यवस्थान तच्च पुष्करिणीद्वयम् १८ ब्राह्म-
ण्यौ केचिदप्यास्तां भगिन्यौ ते परस्परम् । धर्माधर्मादि यत्किंचित्ते निवेदयतो मिथः १९ विप्राय वेदविदुषे न दत्तं दुर्बलाय वै । भिक्षा
दत्ता न चार्थिभ्यस्तेन पापेन कर्मणा १२० वीचीकल्लोलमालाभिर्गच्छतस्ते परस्परम् । खरः क्रोधस्तया दृष्टः कुंजरो मद उच्यते २१
ब्राह्मणोऽस्म्यनतोऽह गुहा ससारगह्वरम् । इत्युक्त्वा देवदेवेशस्तत्रैवांतरधीयत २२ स्वप्नप्राय ततो दृष्ट्वा ततः स्वगृहमागत । कृत्वाऽनतव्रतं
सम्यक्नव वर्षाणि पच च २३ भुक्त्वा सर्वमनतेन यथोक्तं पांडुनदन । अंते च स्मरण प्राप्य मतोऽनंतपुरे द्विजः २४ तथा त्वमपि रा-
जेंद्र कथां शृण्वन् व्रत कुरु । प्राप्स्यसे चिंतित सर्वमनतस्य वचो यथा १२५ पञ्चचतुर्दशे वर्षे फल प्राप्त द्विजन्मना । वर्षेकेन सदाप्नोति

कृत्वोपाख्यानकव्रतम् २६ एतत्ते कथितं भूप व्रतानामुत्तमं व्रतम् । यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः २७ येऽपि शृण्वंति सततं पठ्यमानं पठंति ये । तेपि पापविनिर्मुक्ताः प्राप्स्यंति च हरेः पदम् २८संसारगह्वरगुहासु सुखं विहर्तुं वांछंति ये कुरुकुलोद्भव शुद्धसत्वाःसंपूज्य च त्रिभुवनेशमनंतदेवं बध्नंति दक्षिणकरे वरदोरकं ते २९ ॥ इति अनंतव्रतकथा समाप्ता ॥ अथाऽनंतव्रतोद्यापनम् ॥ युधिष्ठिर उवाच ॥ त्वत्प्रसादाच्छ्रुतं कृष्ण मयानंतव्रतं शुभम् ॥ इदानीं ब्रूहि मेऽनंतव्रतोद्यापनमुत्तमम् १ ॥ कृष्ण उवाच ॥ शृणु पांडव वक्ष्यामि व्रतोद्यापनमुत्तमम् । कृतेन सफलं पार्थ व्रतं भवति निश्चितम् २ आदौ मध्ये तथा चांते व्रतस्योद्यापनं चरेत् । यदा वित्तस्य चित्तस्य संपत्तिः शुभकालता ३ तदा चोद्यापनं कुर्याच्छुभलग्ने शुभे दिने । चतुर्दशे तु वर्षेतु मुख्यमुद्यापनव्रतम् ४ कायशुद्धिस्त्रयोदश्यां ब्रह्मचारी व्रती ततः । एकभुक्तेन नियमं कृत्वा भक्तिसमन्वितः ५ ततः प्रातश्चतुर्दश्यां स्नात्वा तीर्थे शुभे शुचिः । संकल्पयेद्रमाकांतं देशकालावनुस्मरन् ६ ततो नद्यां देवखाते तीर्थे प्रस्रवणे तथा । सर्वौषधैः सर्वगंधैस्तिलकल्कैरथामलैः ७ वेदोक्तविधिना स्नायात्संतर्प्य पितृदेवताः । ततो गृहं समागत्य वेदीं कृत्वा सुशोभनाम् ८ तन्मध्य उपविश्याऽथ देशकालौ स्मरेत्ततः । गणेशं पूजयित्वाऽथ पुण्याहं वाचयेद्द्विजैः ९ आचार्यं च सपत्नीकं वरयेद्वेदपारगम् । ब्राह्मणं च सदस्यं च ऋत्विजश्च चतुर्दश १० सर्वान्वस्त्रैरलंकारैर्जलपात्रादिनाऽर्चयेत् । तत्राऽऽलिखेन्मंडलकं पंचवर्णैः सुशोभनैः ११ विरच्य सर्वतोभद्रं मंडपांतस्तु मध्यगम् । ब्रह्मादिदेवतास्तस्मिन्नावाह्यापि च पूजयेत् १२ तन्मध्ये पंकजे धान्यं यथाशक्ति क्षिपेत्ततः । सौवर्णं राजतं वापि ताम्रजं वापि मृण्मयम् १३ तस्योपरि न्यसेत्कुंभमव्रणं सुनवं दृढम् । तस्मिञ्जलं गंधपुष्पफलपल्लवमृत्ति-

१ उद्यापनेनेत्यर्थः ।

काः १४ क्षिप्त्वा रत्नं हिरण्यं च वस्त्रयुग्मेन वेष्टयेत् । सौवर्णं राजतं ताम्रं मृण्मयं वर्शंव तथा १५ पात्रं तदुपरि न्यस्य पट्टकूलादिकं शुभम् । लिखेदष्टदले तत्र चंदनेन सुगंधिना १६ पद्मं विरच्य तन्मध्ये ऽनंतमूर्तिं विधाय च । पलेन वा तदर्द्धेन मापकेणापि वा कृ ताम् १७ सौवर्णीं रमया युक्तां शंखचक्रगदाब्जकाम् । आवाहनाद्युपचारैः पूजयेत्सुसमाहितः १८ पंचामृतेन स्नपयेत्ततश्च वसनद्वयम् । पट्टकूलादिकं पीतमर्पयित्वाऽर्चयेद्व्रती १९ पुष्पधूपैस्तथा दीपैर्नैवेद्यैश्च प्रपूजयेत् । पुनः पुष्पाणि संगृह्य पूजयेन्नामभिः क्रमात् २० अनं ताय नमः पादौ गुल्फौ संकर्षणाय च । कालात्मने जानुनी च जघने विश्वरूपिणे २१ कटी वै विश्वरूपाय मेढ्रं वै विश्वसाक्षिणे । ना भिं तु पद्मनाभाय हृदयं परमात्मने २२ कंठं श्रीकंठनाथाय पादु[1] सर्वास्त्रधारिणे । मुखं तु वाचस्पतये चक्षुषी कपिलाय च २३ ल लाटे केशवायेति शिरः सर्वात्मने तथा । नमः पादौ पूजयामीत्येवमादि प्रपूजयेत् २४ एवं संपूज्य विधिना रात्रौ जागरणं चरेत् । गीत वादित्रनृत्यादि पुराणश्रवणान्वितम् २५ प्रतियामं प्रकुर्वीत पूजां गंधादिना हरेः । नानाफलानि भक्ष्याणि खाद्यानि च निवेदयेत् २६ ततः प्रभातसमये स्नात्वा ऽऽचार्यादिभिः सह । अनंतं पूजयेत्प्राग्वत् जुहुयात्पश्चिमे ततः २७ कुंडे वा स्थंडिले कुर्यादग्निस्थापनपूर्व कम् । आज्यभागांतमाधार्य स्वगृह्योक्तविधानतः २८ ततोऽश्वत्थसमिद्भिश्च तदभावेऽन्याभिरेव च । दुग्धमध्वाज्यदधिभिस्तिलैर्वा पायसेन च २९ आज्येन च प्रतिद्रव्यमष्टोत्तरसहस्रकम् । अष्टोत्तरशतं वाऽष्टाविंशतिं जुहुयात्क्रमात् ३० अतोदेवेति मंत्रेण स्त्रीणां वै नाममंत्र- तः । प्रणवादिचतुर्थ्यंतं नमोंतानंतनामतः ३१ नाममंत्रैश्च जुहुयाच्चतुर्दशभिरादरात् । पुरुषसूक्तेन जुहुयादतोदेवेति वा पुनः ३२ शत

१ वेदतायाः पश्चिमेदेशे स्पर्शः ।

मष्टोत्तरं यावत्प्रत्येकं जुहुयाच्चरुम् । चरुहोमस्तथा कार्यो मंत्रैरेतैर्विचक्षणः ३३ एतैर्वक्ष्यमाणमंत्रैः । ॐ अनंताय स्वा० ॐ कालाय० ॐ अहोरात्राय० ॐ अर्धमासाय० ॐ मासाय० ॐ ऋतुभ्य० ॐ संवत्सराय० ॐ परिवत्सराय० ॐ कपिलाय० ॐ शेषाय० ॐ कालात्मने० ॐ उषसे० ॐ कलायै ॐ काष्ठायै० ॐ मुहूर्ताय० ॐ भूरग्नये च पृथिव्यै च महते च स्वा० ॐ भुवो वायवे चांतरिक्षाय च महते च स्वा० ॐ सुवरादित्याय च दिवे च महते च स्वा० ॐ भूर्भुवः सुवश्चंद्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वा० । समिदादिभिरेवं च प्रत्येकं जुहुयात्क्रमात् । एवं स्विष्टकृदादीनि पूर्णपात्रांतमाचरेत् ३४ जपेत्पुरुषसूक्तं तु स्मृत्वाऽनंतं सुरोत्तमम् । पूर्णाहुतिं च जुहुयाद्धोमांते विश्वमित्यृचा ३५ होमशेषं समाप्याऽथ कृत्वा त्र्यायुषमेव च । [ ततो वै लोकपालांश्च ग्रहान्पूज्य यथाक्रमम् । गीतवादित्रनिनदैर्दत्त्वा पूर्णाहुतिं प्रति ] केचिन्मतेरात्रौहोमः ॥ पूजयित्वा हरिं देवमाचार्यं पूजयेत्ततः ३६ [ परिपूज्य सपत्नीकं वस्त्रालंकारभूषणैः । ] वस्त्रालंकारभूषाद्यैस्ततो धेनुं समर्चयेत् । पयस्विनीं सुशीलां च वस्त्रालंकारभूषिताम् ३७ स्वर्णशृंगीं रौप्यखुरीं ताम्रपृष्ठीं सुशोभनाम् । कांस्यदोहां रत्नपुच्छाम् निष्ककंठीं सवत्सकाम् ३८ सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता । ग्रासं गृह्ण मया दत्तं गोमातस्त्रातुमर्हसि । ३९ गवामंगेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्तस्माच्छुभं मे स्यादिह लोके परत्र च ४० गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः । गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ४१ मंत्रेणानेन संपूज्य आचार्याय निवेदयेत् । गोदानस्य विधानार्थं दद्यात्स्वर्णं यथाविधि ४२ अनंतं परिवारं च ब्राह्मणाय निवेदयेत् । ऋत्विजः पूजयित्वाऽथ तेभ्यो दद्याच्च दक्षिणाम् ४३ चतुर्दशैव कुंभांश्च पक्वान्नपरिपूरितान् । वस्त्रोपवीते दद्याच्च अनंतः प्रीयतामिति ४४ आचार्यादीन्भोजयित्वा पूर्णतां वाचयेत्ततः । अथाऽनंतं विसृज्यापि गृह्णीयादा-

शिपस्ततः ४५ भक्तियुक्तो नमस्कृत्य ब्राह्मणाश्च क्षमापयेत् । ततो हृष्टो बंधुयुतो भुंजीयात्सुसमाहितः । एवं कृतेऽनंतफलं दाताऽनंतो भ
वेन्नृणाम् ४६ इति श्रीभ० अनंतव्रतोद्यापन सं० ॥ ॥ अथनष्टदोरकविधिः ॥ युधिष्ठिर उवाच ॥ अनंतव्रतमाहात्म्यं कृत्स्नं कृष्ण त्वयोदि
तम् । भगवन्दोररूपेण भाग्यदोसि महात्मनाम् । दोरे प्रमादतो नष्टे यदि स्याद्विदितं जनैः । तदा किं करणीयं स्याद्ब्रूहि त्रैलोक्यपावन
म् ॥ कृष्ण उवाच । साधु पृष्टं त्वया राजन् वक्ष्यामि व्रतनिष्कृतिम् । फल लोकस्य सर्वस्य रक्षार्थं शृणु तत्क्रमात् । दोरे नष्टे महान्दो-
षः प्रभवेद्व्रतिनामिह । तस्मात्तद्दोषनाशार्थं प्रायश्चित्तं विधीयते । गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः । विज्ञाप्य दोरनाशं च कृत्वा
दोरं व्रती ततः । हव्यवाहं प्रतिष्ठाप्य तस्मिन्ध्यात्वा हरिं परम् । आज्यभागावधिं इत्य दद्यात्क्विप्राय चासनम् । अष्टोत्तरशतं हुत्वा मूल
मंत्रेण वैष्णवम् । नाममंत्रेण तत्कृत्वा द्वादशाक्षरसंयुतम् । केशवादि सकृद्धुत्वा प्रायश्चित्तं तु शक्तितः । पूर्णाहुतिं ततो हुत्वा होमशेषं
समापयेत् । व्रतच्छिद्रं जपच्छिद्रं यच्छिद्रं व्रतकर्मणि । वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत् । मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे । आचार्यपूजनं कार्यं दक्षिणाद्यैर्नृपोत्तम । एवं शांतिविधिं कृत्वा पूर्ववद्व्रतमाचरेत् । तस्मात्सर्व-
प्रयत्नेन प्रायश्चित्तं चरेत्सुधीः ॥ इति भ० नष्टदोरकविधिः ॥ ॥ अथ भाद्रपदशुक्लचतुर्दश्यां कार्तिक्यां वा माघ्यां वा वैशाख्यां वा कदली
व्रतं हेमाद्रौ भविष्योत्तरे । सा पूर्वाह्णव्यापिनी ग्राह्या ॥ अथ रंभारोपणविधिः ॥ रंभावृक्षं रोपयित्वा स्वहस्तेन च तं पुनः । वर्षमेकं तु संपूज्य
उदकुंभेन सिंचयेत् । यावत्प्रसवपर्यंतं पूजयेच्च यथाविधि । पूर्वस्यां प्रसवः सम्यगुत्तरस्यां तथैव च । दक्षिणे पश्चिमे हानी रंभाप्रसवल
क्षणम् ॥ अथ कदलीव्रतविधिः ॥ यदा वित्तस्य चित्तस्य संपत्तिः शुभकांक्षया । तदा चोद्यापनं कुर्याच्छुभकाले शुभे दिने । कायस्थविस्तयो

दश्या ब्रह्मचारी व्रती कृती । एकभुक्तेन नियमं कृत्वा भक्तिसमन्वितः । ततः प्रातश्चतुर्दश्यां स्नात्वा तीर्थे शुभे शुचिः । उपवासं तु संकल्प्य देशकालावनुस्मरन् । ततो गृहं समागत्य वेदीं कृत्वा सुशोभनाम् । तन्मध्ये उपविश्याथ देशकालौ स्मरेत्ततः । गणेशं पूजयित्वा ऽथ पुण्याहं वाचयेद्द्विजः । आचार्यं च सपत्नीकं वरयेद्वेदपारगम् । गोचर्ममात्रं संलिप्य सर्वतोमंडलं शुभम् । लिखेत्सम्यक् तथा वर्णैर्नीलपीतैः सितासितैः। विरच्य लिंगतोभद्रं मंडपस्य तु मध्यगम् । ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूजयेत् । अथवा स्वस्तिकं कुर्यात्पद्ममष्टदलं तु वा । ततः साग्रां सुपर्णां तु सम्यग्वृत्तां सुशोभनाम् । समूलां कदलीं स्थाप्य पूजयेत्तां यथाविधि । उत्तमोदकमानीय सेचयेत्तां समाहितः।यथा रंभे विवृद्धिस्ते शाखादीनां सदा भवेत् । तथा वर्द्धय मां देवि सेंचये पार्वतीप्रिये ॥इति सेचनमंत्रः ॥ तन्मध्ये पंचकं धान्यं यथाशक्ति क्षिपेत्ततः । सौवर्णं राजतं वापि ताम्रजं वाऽपि मृण्मयम् । कुंभं न्यसेत्तदुपरि अव्रणं सुनवं दृढम् । तस्मिञ्जलं गंधपुष्पफलपल्लवमृत्तिकाः । क्षिप्त्वा रत्नं हिरण्यं च वस्त्रयुग्मेन वेष्टयेत् । सौवर्णं राजतं ताम्रं मृण्मयं वंशजं तथा । पात्रं तदुपरि न्यस्य पट्टकूलादिकं शुभम् । लिखेदष्टदलं तत्र चंदनेन सुगंधिना । पलेन वा तदर्द्धेन माषकेणापि वा तथा । उमामहेश्वरौ कृत्वा मूलमंत्रेण पूजयेत् ॥ इति कदलीव्रतविधिः । अथ उमामहेश्वरसहितकदलीपूजनम् ॥ मासपक्षाद्युल्लिख्य मम पापनिर्मुक्त्युत्तमसिद्धिपुत्रपौत्रावैधव्येप्सितभोगधनधान्यप्राप्तये उमामहेश्वरसहितकदलीपूजनमहं करिष्ये । तथा कलशार्चनं च करिष्ये । कदल्यागच्छ हे देवि सौभाग्यफलदायिनि । रूपं देहि जयं देहि यशो देहि सुनिश्चितम् । आगच्छ वरदे देवि शंकरेण महेश्वरि । करिष्यमाणां पूजां मे गृहाणानुग्रहं कुरु । आवाहनम् । कार्तस्वर-

१ त्वामितिशेषः ।

मयं दिव्य नानामणिगणान्वितम् । अधितिष्ठ महादेवि शिवेन सह पार्वति । आसनम् । दूर्वाक्षतादिभिर्युक्तं स्वर्णपात्रे स्थित जलम् । पाद्यार्थं कल्पितं भक्त्या गृहाण परमेश्वरि । पाद्यम् । अर्घ्यपात्रे स्थितं तोयं फलपुष्पसमन्वितम् । अर्घ्यं गृहाण मे देवि भक्त्या दत्त शिवप्रिये । अर्घ्यं । कर्पूरोशीरसुरभि शीतलं विमलं जलम् । गंगायास्तु समानीतं गृहाणाचमनीयकम् । आचमनीयं । गंगादि सर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम् । स्नानार्थं तु मया देवि गृहाणेदं सुरेश्वरि । स्नानम् । यथा रंभे विहृद्धिस्ते शाखादीनां सदा भवेत् । तथा वर्द्धय मां देवि सेचनात्पार्वतीप्रिये । सेचनं । वस्त्रं शुभमयं दिव्यं कुंकुमाक्तं सुशोभनम् । गृहाणाऽऽच्छादनं देवि तथाऽऽच्छादय मां सदा । वस्त्रं । उपवीतं । कंचुकीमुपवस्त्रं च नानारत्नैः समन्वितम् । गृहाण त्वं मया दत्त पार्वत्यै च नमोस्तु ते । कंचुकीं । उपवस्त्रं । गंगादिसर्वतीर्थेभ्यो मयानीतं सुनिर्मलम् । तोयमेतत्सुखस्पर्शं गृहाणाचमनीयकम् । आचमनीयं । श्रीखंडं चंदनं दिव्यं गंधाढ्यं सुमनोहरम् । विलेपनं गृहाणेदं रुद्राणि शिववल्लभे । चंदन । अक्षताश्चसुर० । अक्षता० । हरिद्राकुंकुम । सौभाग्यद्रव्याणि । मालतीचंपकादीनि शतपत्रादिकानि च । सुगंधीनि गृहाण त्वं पूजार्थं सुमनांसि च । पुष्पाणि । अगुरु गुग्गुलं धूपं दशांगं सुमनोहरम् । गृहाणेमं तृप्तिकरं घ्राणस्य दयितं परम् । धूप । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि । दीप । नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितम् । नैवेद्यं विविधं भक्त्या कल्पितं त्वं गृहाण मे । नैवेद्य । कर्पूरैलालवंगादिनागवल्लीदलान्वितम् । पूगीफलसमायुक्तं तांबूलं प्रतिगृह्यताम् । तांबूलं । इदंफलमितिफलं । हिरण्यगर्भेति दक्षिणां । नीराजयामि देवेशि भक्तानां भयनाशिनि । देहि मे सर्वसौभाग्य शिवेन सहितेऽनघे । नीराजनं । यानिकानिचेतिप्रदक्षिणां । प्रार्थये

देवपत्नीनां पूजिते च श्रिया स्वयम् । सौभाग्यारोग्यमायुश्च देहि रंभे नमोस्तु ते । नमस्कारं । त्वमिंद्राण्याः प्रिया नित्यं शंकरस्याति-
वल्लभा । सतीनां कामदा पूज्या कामान्मे परिपूरय । प्रार्थनां ॥ इति पूजनं ॥ ॥ अथकथा ॥ युधिष्ठिर उवाच । कृष्ण कृष्ण महाबाहो सर्व-
विद्याविशारद । अनाथनाथ विश्वात्मन् दीनदैन्यनिकृंतन १ त्वमस्माकं परो बंधुस्त्वमस्माकं परं सखा । त्वयाऽभिरक्षिता नित्यं विच
रामोऽत्र निर्भयाः २ किंचित्पृच्छामि देवेश कृपां कुरु वदस्व मे । यद्दुर्लभं सर्वधर्मेषु कृते यस्मिन्महत्फलम् ३ सौभाग्यारोग्यदं पुण्यं धन-
धान्यविवर्द्धनम् । अन्नाच्छादनपुत्रादिवर्द्धनं श्रीनिकेतनम् ४ तन्ममाचक्ष्व भगवन् लोकानामुपकारकम् ॥ श्रीकृष्ण उवाच ॥ शृणु राज-
न्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् ५ यत्कृत्वा सर्वदुःखेभ्यो नारी मुच्येत संकटात् । वस्त्रान्नपानविच्छित्तिर्न भवेत्तु कदाचन ६ पुरा मामेत्य
वै कांता रुक्मिणी प्राणवल्लभा । प्रणिपत्याऽब्रवीद्दीना सर्वकामाप्तये शुभा ७ सौभाग्यं मे कथं देव भवेज्जन्मनि जन्मनि । सपत्नीनां
श्रियं वीक्ष्य स्पृहा मे जायते प्रभो ८ इति प्रियाया वचनं श्रुत्वाऽहं तां समब्रुवम् । रंभाव्रतं कुरुष्वाशु सौभाग्यावाप्तये शुभम् ९ कृते
यस्मिन्व्रते देवि परं सौभाग्यमाप्स्यसि । इति श्रुत्वा वचो देवी रुक्मिणी मामभाषत १० रंभाव्रते भवेत्किं भो को विधिः कस्य पूजनम् ।
केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् ११ रुक्मिण्या भाषणं श्रुत्वा पुनरेवाऽहमब्रूवम् । रंभाव्रतविधिं वक्ष्ये शृणु देवि यथोदित-
म् १२ गोचर्ममात्रं संलिप्य सर्वतोलिंगभद्रकम् । लिखेत्सम्यक् पंचवर्णैर्नीलपीतैः सितासितैः १३ ब्रह्माद्या देवताः सर्वाः स्थापयित्वा प्रपूज-
येत् । कलशोपरि संस्थाप्य वैणवे पटले शुभे १४ उमामहेश्वरौ तत्र मूलमंत्रेण पूजयेत् । अथवा स्वस्तिकं कृत्वा पद्ममष्टदलं तु वै १५
ततः साग्रां सपर्णां च सम्यग्वृत्तां सुशोभनाम् । समूलां कदलीं स्थाप्य पूजयेत्तां यथाविधि १६ उत्तमोदकपानीय सेचयेत्तां समाहि

स॰ । यथा रंभे विटपिस्ते शाखादीनां सदा भवेत् १७ तथा वर्द्धय मां देवि सेचनात्पार्वतीप्रिये । सदा यथा ते प्रसवो वर्द्धते क
दलीशुभे १८ तथा मनोरथानां मे प्रभवो भवतु स्वयम् । एवं संपूज्य विधिवद्भक्तियुक्तेन चेतसा १९ रात्रौ जागरणं कुर्याद्गीतवा-
दित्रनिस्वनैः । एवं या कुरुते नारी व्रतानामुत्तमं व्रतम् २० भुक्त्वा तु विविधान् भोगान् सौभाग्यं विंदते ध्रुवम् । तस्मात्कुरु
विधानेन यथोक्तफलमाप्स्यसि २१ इति श्रुत्वा विधानेन चकार व्रतमुत्तमम् । अवाप सकलं कामं मनसा यदभीप्सितम् २२ अन्य
च शृणु राजेंद्र व्रतस्य फलमुत्तमम् । अत्याश्चर्यकरं पुंसां शृणुष्वावहितो भवान् २३ द्यूते यदा जिता पूर्वं कृष्णा नीता सभां प्रति । दुःशा
सनेन दुष्टेन द्रौपदी मुक्तमूर्द्धजा २४ आकृष्यमाणे वस्त्रे तु चित्ते मामस्मरत्तदा । तूर्णं तत्र गतो राजन् द्रौपद्यास्त्राणनाय वै २५ अह-
श्चोऽहं तु कृष्णायै व्रतं समुपदिष्टवान् । तदा कर्तुमशक्ये तु व्रतेऽस्मिन्राजसत्तम २६ रुक्मिण्याचरितं पूर्वं यदेतद्व्रतमुत्तमम् । तस्य
पुण्यफलं दत्तं कृष्णायै राजसत्तम २७ तत्कालमेव वस्त्राणां समृद्धिरभवत्पुरा । दुःशासनेन दुष्टेन आक्षिप्तेष्वंशुकेषु च २८ प्रादुर्भूतानि
वस्त्राणि नानावर्णानि भारत । खिन्नो दुःशासनः पापो विररामांऽशुकग्रहात् २९ तावद्बभूवुर्वस्त्राणि कदलीगर्भवन्नृप । इत्थं व्रतप्रभावो
ऽयं गुह्योपि कथितो मया । कारयस्व विधानेन पूर्णकामो भविष्यसि ३० इतिकदलीव्रतकथासमा॰ ॥ अथोद्यापनं ॥ युधिष्ठिर उ-
वाच ॥ कस्मिन्मासे तिथौ कस्यामाचरेद्व्रतमुत्तमम् । कदल्यभावे किं कार्यं तन्ममाचक्ष्व केशव १ श्रीकृष्ण उवाच ॥ शुक्लपक्षे चतु-
र्दश्यां मासि भाद्रपदे नृप । कार्तिके माघमासे वा वैशाखे चोत्तरे तथा २ पुण्ये मासि प्रकुर्वीत पौर्णमास्यां शुभे दिने । तिथिक्षय
वर्जयीत शुभायां सुसमाहितः ३ यस्मिन्देशे न लभ्येत कदली राजसत्तम । सुवर्णस्य शुभां तत्र कृत्वा पूजां समाचरेत् ४ यदि

लभ्येत कदली मारोप्यादौ प्रपूजयेत् । यावत्तस्यां फलं तावत्सिंचेन्नीरेण भूपते ५ फलेषु पक्वजातेषु पश्चाद्विप्रान् समाह्वयेत् । प्रभाते विमले स्नात्वा नद्यादौ विमले जले ६ अहते वाससी गृह्य कृत्वा संध्यादिकर्म च । अरत्निमात्रं कृत्वा तु स्थंडिलं वाग्यतः शुचिः ७ अग्निं संस्थाप्य विधिवत्तत्र होमं समाचरेत् । शतमष्टोत्तरं विद्वांस्तिलाज्याहुतिभिस्तथा ८ एकाग्रचित्तः संहृष्टः कृती व्याहृतिभिः पृथक् । ब्रह्मादिदेवताभ्यश्च नाममंत्रैः पृथक् पृथक् ९ उमामहेश्वरावापि मूलमंत्रेण दापयेत् । आचार्यं च सपत्नीकं वस्त्राद्यैः पूजयेत्ततः १० धेनुं पयस्विनीं वत्सवस्त्रालंकारभूषिताम् । स्वर्णशृंगीं रौप्यखुरीं ताम्रपृष्ठीं सुवाससम् ११ कांस्यदोग्ध्रीं रत्नपुच्छां निष्ककंठीं सघंटिकाम् । अभ्यर्च्य वेदविदुषे आचार्याय निवेदयेत् १२ पादुकोपानहौ छत्रमलंकाराननेकशः । यथाशक्ति प्रदेयानि व्रतस्य परिपूर्तये १३ चतुर्विंशत्षोडश वा युग्मान्याहूय संयतः । वस्त्रालंकारगंधाद्यैः पूजयित्वा तु भोजयेत् १४ वायनानि च देयानि वंशपात्रैस्तु शक्तितः । दद्याच्च दक्षिणां सम्यग्यथाविभवसारतः १५ अन्येभ्योपि यथाशक्ति दद्यादन्नं सुसंस्कृतम् । क्षमापयित्वा तां देवीं व्रतस्य परिपूर्तये १६ कदल्यै कामदायिन्यै मेधायै ते नमो नमः । रंभायै भूतिसारायै सर्वसौख्यप्रदे नमः १७ यथा यथा ते प्रसवो वर्धते कदलि ध्रुवम् । तथा मनोरथानां मे प्रभवो वर्धतु स्वयम् १८ इतिकदलीदानमंत्रः ॥ एवं नारी नरो वापि यः कुर्यात्कदलीव्रतम् । सर्वान्कामानवाप्नोति स्वर्गलोके महीयते १९ इति श्रीभविष्योत्तरे कदलीव्रतोद्यापनं सं० ॥ ॥ अथ पूर्णिमांतमासेन कार्तिककृष्णचतुर्दशी नरकचतुर्दशी ॥ तस्यां तिलतैलेन स्नानमुक्तं भविष्ये । कार्तिकस्यासिते पक्षे चतुर्दश्यां विधूदये । अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः । दिनद्वये विधूदये चतुर्दशीसत्त्वे । पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे । पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः । इतिनिर्णयदीपिकोक्तेः ।

परदिन एवेत्य ये । दिनद्वये चतुर्दश्यभावे तु चतुर्दश्या चतुर्थयामे स्नानमिति दिवोदासनिबंधे । स्मृतिदर्पणेऽपि—चतुर्दशी याऽश्वयुजस्य कृष्णा स्वात्यर्कसंयुक्ता हि भवेत् प्रभाते । स्नानं समभ्यज्य नरैस्तु कार्यं सुगंधतैलेन च विभयुक्तैः । तैले लक्ष्मीर्जले गंगा दीपावल्याश्चतुर्दशीम् । प्राप्येति शेषः । आश्विनस्यासिते पक्षे भूतायां नोदितो रविः । यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते । मूर्मोकोदयवेलायां त्रयोदश्यां यदा भवेत् । दर्शे वा मगल स्नानं दुःखशोकभयप्रदम् । कालादर्शे त्रयोदशी निषेधश्च । त्रयोदशी यदा प्राप्ता क्षय चेति चतुर्दशी । रात्रिशेषे त्वमावास्या तदाऽभ्यंगे त्रयोदशी । चतुर्थयामे स्नानमुक्तं ज्योतिर्निबंधे नारदोपि । इषासिते चतुर्दश्यामिंदुक्षयतिथावपि । ऊर्जादौ स्वातिसंयुक्ते सदा दीपावली भवेत् । तैले लक्ष्मीर्जले गंगा दीपावल्याश्चतुर्दशीम् । प्रातः स्नानं तु यः कुर्याद्यमलोकं न पश्यति । अपामार्गमथो तुंबीं भ्रामयेच्छिरसोपरि । अपामार्गस्य पत्राणि नरकस्य क्षयाय वै । ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः । अमावास्याचतुर्दश्योः प्रदोषे दीपदानतः । यममार्गांधकारेभ्यो मुच्यते कार्तिके नरः ॥ अथकथा ॥ वालखिल्या ऊचुः । पूर्वविद्धचतुर्दश्यामाश्विनस्य सितेतरे । पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः १ अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः । तस्याब्दिकभवो धर्मो नश्यत्येव न संशयः २ तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदये सुराः । यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते ३ यदा चतुर्दशी न स्याद्विदिने चेद्विधूदये । दिनद्वये भवेच्चापि तदा पूर्वैव गृह्यते ४ बलात्काराद्धटाद्वापि शिष्टत्वान्न करोति चेत् । तैलाभ्यंग चतुर्दश्यां रौरवं नरकं व्रजेत् ५ तैले लक्ष्मीर्जले गंगादीपावल्याश्चतुर्दशीम् ६ अपामार्गमथो तुंबीं प्रपुन्नाटमथापरम् । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ७ दिनत्रयं त्रिवारं च पठित्वा मंत्रमुत्तमम् । सीतालोष्टसमायुक्त सकंटकदलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनःपुनः ॥ इष्टबंधुजनैः सार्धमेवं स्नानं समाच

रेत्। ततो मंगलवासांसि परिधायात्मभूषणम् ९ कृत्वा च तिलकं दत्त्वा कार्तिकस्नानमाचरेत्। स्नानांगतर्पणं कृत्वा यमं संतर्पयेत्ततः १० यमाय धर्मराजाय मृत्यवे चांतकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ११ औदुंबराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय ते नमः १२ चतुर्दशैते मंत्राः स्युः प्रत्येकं च नमोन्विताः । एकैकेन तिलैर्मिश्रान् दद्यात्त्रीनुदकांजलीन् १३ यज्ञोपवीतिना कार्यं प्राचीनावीतिनाऽथवा । देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता १४ जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः । नरकाय प्रदातव्यो दीपः संपूज्य देवताः १५ अत्रैव लक्ष्मीकामस्य विधिः स्नाने मयोच्यते । इषे भूते च दर्शे च कार्तिकप्रथमे दिने १६ यदा स्नाति तदा ऽभ्यंगस्नानं कुर्याद्विधूदये । ऊर्जशुक्लद्वितीयायां यदि स्वाती भवेत्तदा १७ मानवो मंगलस्नायी नैव लक्ष्म्या वियुज्यते १८ दीपैर्नीराजनादत्र सैषा दीपावलिः स्मृता १९ इंदुक्षयेऽपि संक्रांतौ रवौ पाते दिनक्षये । अत्राभ्यंगो न दोषाय प्रातः पापापनुत्तये २० माषपत्रस्य शाकेन भुक्त्वा तस्मिन्दिने नरः । प्रेताख्यायां चतुर्दश्यां सर्वपापैः प्रमुच्यते २१ इषासितचतुर्दश्यामिंदुक्षयतिथावपि । उर्जादौ स्वातिसंयुक्ते तदा दीपावलिर्भवेत् २२ कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयम् । आश्विनस्यासिते पक्षे त्रयोदश्यादिषु त्रिषु २३ क्रमात्पादैस्त्रिभिर्विष्णुरग्रहीद्भुवनत्रयम् । महाराजो बलिः प्रोक्तस्तुष्टेन हरिणा ततः २४ वरं याचस्व भद्रं ते यद्यन्मनसि वर्तते । इति विष्णुवचः श्रुत्वा बलिर्वचनमब्रवीत् २५ आत्मार्थे न च याचेऽहं सर्वं दत्तं मया तव । लोकार्थे याचयिष्यामि शक्तश्चेद्देहि मे प्रभो २६ मया या ते धरा दत्ता वामनच्छद्मरूपिणे । त्रिभिः पादैस्त्रिदिवसैः सा चाक्रांता यतस्त्वया २७ तस्मादेतद्बले राज्यमस्तु घस्रत्रयं हरे । म

१ किं याचनीयमिति वा पाठः । २ तच्चमेइतिपाठः ।

परदिन एवेत्यन्ये । दिनद्वये चतुर्दश्यभावे तु चतुर्दश्या चतुर्थयामे स्नानमिति दिवोदासनिबंधे । स्मृतिदर्पणेऽपि—चतुर्दशी याऽऽश्वयुजस्य कृष्णा स्वात्यर्क्षयुक्ता हि भवेत् प्रभाते । स्नानं समभ्यज्य नरैस्तु कार्यं सुगंधतैलेन च विप्रमुक्तैः । तैले लक्ष्मीर्जले गंगा दीपावल्याश्चतुर्दशीम् । प्राप्येति शेषः । आश्विनस्यासिते पक्षे भूतायां नोदितो रविः । यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते । मृगांकोदयवेलायां त्रयोदश्यां यदा भवेत् । दर्शे वा मंगलं स्नानं दुःखशोकभयप्रदम् । कालादर्शे त्रयोदशी निषेधश्च । त्रयोदशी यदा मात्रा क्षयं चेति चतुर्दशी । रात्रिशेषे त्वमावास्या तदाऽभ्यंगे त्रयोदशी । चतुर्थयामे स्नानमुक्तं ज्योतिर्निबंधे नारदोपि । इषासिते चतुर्दश्यामिंदुक्षयतिथावपि । ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत् । तैले लक्ष्मीर्जले गंगा दीपावल्याश्चतुर्दशीम् । प्रातः स्नानं तु यः कुर्याद्यमलोकं न पश्यति । अपामार्गमथो तुंबीं भ्रामयेच्छिरसोपरि । अपामार्गस्य पत्राणि नरकस्य क्षयाय वै । ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः । अमावास्याचतुर्दश्योः प्रदोषे दीपदानतः । यममार्गांधकारेभ्यो मुच्यते कार्तिके नरः ॥ अथकथा ॥ वालखिल्याऊचुः । पूर्वविद्धचतुर्दश्यामाश्विनस्य सितेतरे । पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः १ अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः । तस्याब्दिकभवो धर्मो नश्यत्येव न संशयः २ तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदये सुराः । यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते ३ यदा चतुर्दशी न स्याद्विदिने चेद्विधूदये । दिनद्वये भवेच्चापि तदा पूर्वैव गृह्यते ४ बलात्काराद्धटाद्वापि शिष्टस्नानं करोति चेत् । तैलाभ्यंग चतुर्दश्यां रौरवं नरकं व्रजेत् ५ तैले लक्ष्मीर्जले गंगादीपावल्याश्चतुर्दशीम् ६ अपामार्गमथो तुंबीं प्रपुन्नाटमथापरम् । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ७ दिनत्रयं त्रिवारं च पठित्वा मंत्रमुत्तमम् । सीतालोष्टसमायुक्त सकंटकदलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ८ इष्टबंधुजनैः सार्धमेवं स्नानं समाप्य

इति विशेषांतरं लैंगे । ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् । शैवान्विप्रांस्त्वथ परान् शिवलोके महीयते ४६ दानं दत्त्वा तु तेभ्यश्च यमलोकं न गच्छति । नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिवतुष्टये ४७ ततःक्रतुशतेनापि नाप्यते पुण्यमीदृशम् । शिवरात्रौ तथा तस्यां लिंगस्यापि प्रपूजया । अक्षय्याँल्लभते भोगान् शिवसायुज्यमाप्नुयात् ४८ ॥ इति नरकचतुर्दशीदीपदानंस० ॥ अथ कार्तिकशुक्लचतुर्दश्यां वैकुंठचतुर्दशीव्रतम् । तदुक्तं सनत्कुमारसंहितायाम् । वर्षे वै हेमलंबाख्ये मासि श्रीपतिकार्तिके । शुक्लपक्षे चतुर्दश्यामरुणोदयसंभवे । महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके । स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत् । संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाऽकरोत् । स्वयमेव तदात्मानं चरन्पाशुपतव्रतम् । ततःप्रभाते विमले कृत्वा पूजां महाद्भुताम् । दंडपाणेर्महानाम्नि वनेऽस्मिन्कृतपारणः । श्रीमद्भवानीसदनं प्रविश्येदमनुत्तमम् । इति सनत्कुमारसंहितोक्तेः ॥ अथ कथा ॥ वालखिल्या ऊचुः ॥ कार्तिकस्य सिते पक्षे चतुर्दश्यां समागमत् । वैकुंठेशस्तु वैकुंठाद्वाराणस्यां कृते युगे १ रात्र्यां तुर्यांशशेषायां स्नात्वाऽसौ मणिकर्णिके । गृहीत्वा हेमपद्मानां सहस्रं वै ततो ऽव्रजत् २ अतिभक्त्या पूजयितुं शिवया सहितं विभुम् । विधाय पूजां वैश्वेशीं ततः पद्मैरपूजयत् ३ सहस्रसंख्यां कृत्वाऽऽदावेकनाम्ना ततः परम् । आरब्धं पूजनं तेन शिवस्तद्भक्तिमैक्षत ४ एकपद्मं पद्ममध्यान्निलीयात्तद्धरेण तु । ततःपूजितवान्विष्णुरेकोनं कमलं त्वभूत् ५ इतस्ततस्तेन दृष्टं पद्मं तिष्ठति न क्वचित् । कमलेषु भ्रमो जातोऽथवा नामसु मे भ्रमः ६ क्षणं विचार्य स हरिर्न मे नामभ्रमो ऽभवत् । पद्मेष्वेव भ्रमो जातो विचार्यैवं पुनःपुनः ७ सहस्रपद्मसंकल्पः पूजार्थे तु कृतो मया । अर्चयेः कथं महादेव एकोनकमलैर्मया ८ यद्यानेतुं गमिष्यामि भंगः स्यादासनस्य तु । किं विधेयमतः शंभोः पूजनेऽचिंतयद्धरिः ९ एकः प्रकार उत्पन्नो हृदयेऽस्य मु-

राज्ये दीपदानं ये भुवि कुर्वंति मानवाः २८ तेषां गृहे तव स्त्रीयं सदा तिष्ठतु सुस्थिरा । मम राज्ये गृहे येषामंधकारः पतिष्यति २९
अलक्ष्मीसहितस्तेषामंधकारोऽस्तु सर्वदा। चतुर्दश्यां तु ये दीपान्नरकाय ददाति च ३० तेषां पितृगणैः सर्वो नरकात्स्वर्गमाप्नुयात् । ब
लिराज्यं समासाद्य यैर्न दीपावलिः कृता ३१ तेषां गृहे कथं दीपाः प्रज्वलिष्यंति केशव। बलिराज्ये तु ये लोकाः शोकदुःखानुकारिणः
३२ तेषां गृहे सदा शोकः पतेदिति न संशयः । चतुर्दशीत्रये राज्यं बलेरस्त्विति याचयेत् ३३ पुरा वामनरूपेण प्रार्थयित्वा धरामिमा
म् । ददावतिथिर्भिक्षाय बलिं पातालवासिनम् ३४ कृत्वा दैत्यपतेर्दत्तं हरिणा तद्दिनत्रयम् । तस्मान्महोत्सवं चात्र सर्वथैव हि कारयेत्
३५ महारात्रिः समुत्पन्ना चतुर्दश्यां मुनीश्वराः । अतस्तदुत्सवः कार्यः शक्तिपूजापरायणैः ३६ बलिराज्यं समासाद्य यक्षगंधर्वकिन्नराः ।
ओषध्यश्च पिशाचाश्च मंत्राश्च मणयस्तथा ३७ सर्वे एव प्रहृष्यंति नृत्यंति च निशासु ते । तथा मंत्राश्च सिद्ध्यंति बलिराज्ये न संशयः
३८ बलिराज्यं समासाद्य यथा लोकाः सुहर्षिताः । तथा तद्दिनमध्येऽपि जनाः स्युर्हर्षिता भृशम् ३९ तुलासंस्थे सहस्रांशौ प्रदोषे भूत
दर्शयोः । उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ४० नरकस्थाश्च ये प्रेतास्ते मार्गं तु व्रतात्सदा । पश्यंत्येव न संदेहः
कार्योऽत्र मुनिपुंगवैः ४१ आश्विनस्याऽसिते पक्षे भूतादितिथयस्त्रयः । दीपदानादिकार्येषु ग्राह्या मध्याह्नकालिकाः ४२ यदि स्युः
संगवादर्वागेतेषु तिथयस्त्रयः । दीपदानादि कार्येषु कर्तव्याः पूर्वसंयुताः ४३ ततः प्रदोषसमये दीपान्दद्यान्मनोरमान् । ब्रह्मवि
ष्णुशिवादीनां मठेषु भवनेषु च ४४ प्राकारोद्यानवापीषु प्रतोलीनिकटेषु च । मंदुरासु विविक्तासु हस्तिशालासु चैव हि ४५

१ लक्ष्मीसंवासभवनं सदा भवतु वरप्रदे इत्यपि पाठो दृश्यते । २ यथा स्वर्गे नरके न वसंति चेति वा पाठोपलब्धिः । ३ [illegible]रसात्[illegible]रिपवधि पाठोऽप्यस्ति ।

श्रुता ये ये धर्माः प्रोक्ता महर्षिभिः । सर्वेषां फलमाप्नोति नात्र कार्या विचारणा २९ आदौ स्नात्वा वह्नितीर्थे यजेन्नारायणं ततः । रेतो-
दके ततः स्नात्वा केदारेशं समर्चयेत् ३० इहैवचार्थवान्मर्त्यो भवेन्नास्त्यत्र संशयः । स्थलपद्मैस्त्वत्र पूजा कर्तव्या जलजक्षयात् ३१
आदौ स्नात्वा सूर्यपुत्र्यां वेणीमाधवमर्चयेत् । जाह्नव्यां च ततः स्नात्वा संगमेशं प्रपूजयेत् ३२ रक्तपद्मैः श्वेतपद्मैर्हरिं रुद्रं क्रमेणतु । सर्वाः श्रिय-
स्तस्य वश्याः सत्यं विष्णो मयोदितम् ३३ मोक्षार्थे काशिकामध्ये तिष्ठतः शुभदायकौ । बिंदुमाधवविश्वेशौ जगदानंददायकौ ३४ न
लभेत्पूजयित्वा किं मोक्षं विश्वेश्वरं हरिम् । विना यो हरिपूजां तु कुर्याद्रुद्रस्य चार्चनम् ३५ वृथा तस्य भवेत्पूजा सत्यमेतद्वचो
मम । एवं तस्मै वरं दत्त्वा तत्रैवांतरधीयत ३६ तस्मात्सर्वप्रयत्नेन पूज्यौ हरिहरावुभौ । प्राप्ते कलियुगे घोरे शौचाचारविवर्जिते ३७
तत्वसंख्यैर्वर्षशतैर्गतैर्देवो महेश्वरः । वाराणसीस्थलिंगानि पाताले स निर्युंक्ष्यति ३८ ततो द्विगुणवर्षैस्तु गंगा वाराणसी तथा । भवि-
ष्यति च साऽदृश्या ततो वै सुमुनीश्वराः ३९ अंतर्हिता यदा काशी भविष्यति तदा मुने । नाशस्तु लिंगचिह्नानां निष्प्रभाः सकलाज-
नाः ४० चतुर्दशाब्दं दुर्भिक्षं महामारी समुद्भवः । गोवधश्चापि सर्वत्र मृत्तिका भस्मसन्निभा ४१ गंगोत्तर्यां तु या धारा पतेद्भ-
गीरथाश्रमे । हरिद्वाराच्च वायव्ये तस्या लोपो भविष्यति ४२ भागीरथ्यां गतायां तु मर्कटीतंतुसन्निभाः । भविष्यंति जले कीटा-
स्तोयं नीलीनिभं तथा ४३ चतुर्वर्षसहस्रैस्तु शैलस्थाः सर्वदेवताः । सत्वं त्यक्त्वा गमिष्यंति मानसं च सरोवरम् ४४ गतेषु शैलदेवेषु
राजानो धैर्यविच्युताः । पापिष्ठाश्च दुराचारा नानादुःखेन दुःखिताः ४५ कलेरयुतवर्षाणि भविष्यंति यदा खग । श्रौतमार्गस्य लो-

१ वार्थवतामर्थो इति वा पाठः । २ यमुनायाम् । ३ संपत्तयः । अत्रस्थिय इत्यपि पाठांतरम् । ४ नयिष्यतीति वा पाठांतरम् ।

नीश्वराः । पुंडरीकाक्ष इत्येवं मां वदंति मुनीश्वराः १० नेत्रं मे पद्मसदृशं पद्मार्थे त्वर्पयाम्यहम् । इति निश्चित्य मनसि दत्त्वा सर्जनिक
स तु ११ तया मच्यात्तदुत्पाद्य महादेवस्तु पूजितः । ततो महेश्वरस्तुष्टो वाक्यमेतदुवाच ह । १२ महादेव उवाच । त्वत्समो नास्ति म-
द्भक्तस्त्रैलोक्ये सचराचरे । राज्यं देव त्रिलोक्यास्ते भव त्वं लोकपालक १३ अन्यद्वरय भद्रं ते वरं यन्मनसेप्सितम् । अवश्यमेव दा
स्यामि नात्र कार्या विचारणा १४ मद्भक्तिं तु समालंब्य ये द्विषंति जनार्दनम् । ते मद्द्वेष्या नरा विष्णो व्रजेयुर्नरकं ध्रुवम् १५ । विष्णु
रुवाच । त्रैलोक्यरक्षाकरणं ममाऽदिष्टं महेश्वर । दुर्मदाश्च महासत्वा दैत्या मार्याः कथं मया १६ ॥ शिव उवाच ॥ एतत्सुदर्शनं चक्रं स-
र्वदैत्यनिकृंतनम् । गृहाण भगवन्विष्णो मया तुभ्यं निवेदितम् १७ अनेन सर्वदैत्यानां भगवन्कदनं कुरु । एवं चक्रं हरेर्दत्त्वा ततो वच
नमब्रवीत् १८ शिव उवाच । वर्षे च हेमलंबाख्ये मासि श्रीपतिकार्तिके । शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति १९ महादेवतिथौ ब्रा
ह्ममुहूर्ते मणिकर्णिके । स्नात्वा वैश्वेश्वरं लिंगं वैकुंठादेत्य पूजितम् २० सहस्रकमलैस्तस्माद्भविष्यति मम प्रिया । विख्याता सर्वलोकेषु वै
कुंठाख्या चतुर्दशी २१ अन्यं वरं प्रदास्यामि शृणु विष्णो वचो मम । पूर्वरात्रौ तु ते पूजा कर्तव्या सर्वजातिभिः २२ उपवासं दिवा कुर्या
त्सायंकाले तवार्चनम् । पश्चान्ममार्चनं कार्यमन्यथा निष्फलं भवेत् २३ आद्या तु हरिपूजायां रात्रिव्यापा चतुर्दशी । अरुणोदयवे-
लायां शिवपूजां समाचरेत् २४ सहस्रकमलैर्विष्णुरादौ यैः पूजितो नरैः । पश्चादीशः पूजितश्चेज्जीवन्मुक्तास्त एव हि २५ सायं स्नात्वा पं
चनदे बिंदुमाधवमर्चयेत् । सहस्रनामभिर्विष्णोः कमलैः सुमनोहरैः २६ मणिकर्ण्यां ततः स्नात्वा विश्वेश्वरमथार्चयेत् । सहस्रनामभिः पुष्पै
र्जीवन्मुक्तः स एव हि २७ स्नात्वा यो विष्णुकांच्यां वाऽनंतेशं यः समर्चयेत् । स्वकांच्यां ततः स्नात्वा प्रणवेशं समर्चयेत् २८ पृथिव्यां च

श्रुता ये ये धर्माः प्रोक्ता महर्षिभिः । सर्वेषां फलमाप्नोति नात्र कार्या विचारणा २९ आदौ स्नात्वा वह्नितीर्थे यजेन्नारायणं ततः । रेतो-
दके ततः स्नात्वा केदारेशं समर्चयेत् ३० इहैवचार्थवान्मर्त्यो भवेन्नास्त्यत्र संशयः । स्थलपद्मैस्त्वत्र पूजा कर्तव्या जलजक्षयात् ३१
आदौ स्नात्वा सूर्यपुत्र्यां वेणीमाधवमर्चयेत् । जाह्नव्यां च ततः स्नात्वा संगमेशं प्रपूजयेत् ३२रक्तपद्मैः श्वेतपद्मैर्हरिं रुद्रं क्रमेणतु । सर्वाः श्रिय-
स्तस्य वश्याः सत्यं विष्णो मयोदितम् ३३ मोक्षार्थं काशिकामध्ये तिष्ठतः शुभदायकौ । बिंदुमाधवविश्वेशौ जगदानंददायकौ ३४ न
लभेत्पूजयित्वा किं मोक्षं विश्वेश्वरं हरिम् । विना यो हरिपूजां तु कुर्याद्रुद्रस्य चार्चनम् ३५ वृथा तस्य भवेत्पूजा सत्यमेतद्वचो
मम । एवं तस्मै वरं दत्त्वा तत्रैवांतरधीयत ३६ तस्मात्सर्वप्रयत्नेन पूज्यौ हरिहरावुभौ । प्राप्ते कलियुगे घोरे शौचाचारविवर्जिते ३७
तत्वसंख्यैर्वर्षशतैर्गतैर्देवो महेश्वरः । वाराणसीस्थलिंगानि पाताले स निंयुक्ष्यति ३८ ततो द्विगुणवर्षैस्तु गंगा वाराणसी तथा । भवि-
ष्यति च साऽदृश्या ततो वै सुमुनीश्वराः ३९ अंतर्हिता यदा काशी भविष्यति तदा मुने । नाशस्तु लिंगचिह्नानां निष्प्रभाः सकलाज-
नाः ४० चतुर्दशाब्दं दुर्भिक्षं महामारी समुद्भवः । गोवधश्चापि सर्वत्र मृत्तिका भस्मसन्निभा ४१ गंगोत्तर्यां तु या धारा पतेद्भ-
गीरथाश्रमे । हरिद्वाराच्च वायव्ये तस्या लोपो भविष्यति ४२ भागीरथ्यां गतायां तु मर्कटीतंतुसन्निभाः । भविष्यंति जले कीटा-
स्तोयं नीलीनिभं तथा ४३ चतुर्वर्षसहस्रैस्तु शैलस्थाः सर्वदेवताः । सत्वं त्यक्त्वा गमिष्यंति मानसं च सरोवरम् ४४ गतेषु शैलदेवेषु
राजानो धैर्यविच्युताः । पापिष्ठाश्च दुराचारा नानादुःखेन दुःखिताः ४५ कलेरयुतवर्षाणि भविष्यंति यदा खग । श्रौतमार्गस्य लो-

१ वार्थवतामर्थो इति वा पाठः । २ यमुनायाम् । ३ संपत्तयः । अत्रश्रिय इत्यपि पाठांतरम् । ४ नयिष्यतीति वा पाठांतरम् ।

पो हि भविष्यति न संशयः ४६ तदा लोका भविष्यंति मद्यपानपरायणाः । स्वल्पायुषः स्वल्पभाग्या नानारोगैश्च पीडिताः ४७ द्विशास्तु दक्षिणे देशे वेदज्ञाः संभवंति च । आनीय ताञ्छाककर्ता धर्मं संस्थापयिष्यति ४८ इति सनत्कुमारसंहितायां वैकुंठचतुर्दशीकथा ॥ ॥ अथशिवरात्रिव्रतम् ॥ अमांतमासेनेह माघकृष्णचतुर्दश्यां शिवरात्रिव्रतम् । तच्चार्धरात्रव्यापिन्यां कार्यम् । तदुक्तं नारदसंहितायाम् । अर्धरात्रयुता यत्र माघकृष्णचतुर्दशी । शिवरात्रिव्रतं तस्य सोऽश्वमेधफलं लभेत् । ईशानसंहितायामपि—माघकृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिंगमभूत्तत्र कोटिसूर्यसमप्रभम् । तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । माघकृष्णत्वं चात्रामांतमासपरत्वेन । अत एव । चतुर्दश्यां तु कृष्णायां फाल्गुने शिवपूजनम् । तामुपोष्य प्रयत्नेन विषयान्परिवर्जयेत् । इति । स्मृतवचने पौर्णिमांतमासोप्युक्तः । महानिशा च । महानिशा द्वे घटिके रात्रेर्मध्यमयामयोरिति देवलोक्तेर्निशीथरूपैव । एव चार्द्धरात्रशब्दोपि तत्पर एव । दिनद्वये निशीथव्याप्तावव्याप्तौ वा परैव, प्रदोषव्यापिनीत्वाभावात् । दिनद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा । आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी । प्रदोषव्यापिनी ग्राह्या शिवरात्रेश्चतुर्दशी । रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् । अहोरात्रव्रतं यच्च एकमेकतिथौ गतम् । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रतीति कामिकाशिवरात्रिः शिवरहस्ये । स्मृत्यन्तरादिवचनाच्च । न च पूर्वदिनेऽधिकव्याप्तिवशात् पूर्वैवेति शक्यम् । एतस्य भूयसा स्यात् सधर्मत्वमिति न्यायमात्रत्वेन वचनबाधकत्वायोगात् । प्रत्युत निरुक्तवचनैरेव तद्बाधाच्च । पूर्वदिने निशीथे परदिने प्रदोषे सदा पूर्वैव । अर्धरात्रात्परस्ताच्चेज्जयायोगो यदा भवेत् । पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रिया । इति पाद्मे जयायोगस्य विहितत्वात् । महतामपि पा-

पानां द्दष्टा वै निष्कृतिः पुरा । न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं शिवाम्– इति स्कांदे दर्शयोगस्य निंदितत्वाच्च । यत्तु कालतत्त्वविवेचने नव्यैर्दिनद्वये निशीथव्याप्तावेव पूर्वविद्धाविधायकान्युत्तरविद्धानिषेधकानि वचनानि सावकाशानीत्युक्त्वा पूर्वैव ग्राह्येत्युक्तम् । तत्र समंजसम् । निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभेति माधवाद्युदाहृतकामिकवचनविरोधात् । न च पूर्वविद्धाविधायकानां उत्तरविद्धानिषेधकानां विषयालाभ इति शंक्यम् । प्रदोषनिशीथयोर्विरोधे निशीथग्राह्यताया उपोद्घातबलत्वेन विषयलाभस्यानुपदमेवोक्तत्वात् । प्रदोषव्याप्तिभावाच्च । यदा दिनद्वये निशीथव्याप्तिस्तदा परैव । मघासिते भूतदिनं हि राजन्नुपैति योगं यदि पंचदश्याः । जयाप्रयुक्तां न तु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य । इति हेमाद्रिमाधवेप्युदाहृतपुराणवचनादिति परैव । अस्मिन्व्रते उपवासजागरणपूजानां फलसंबंधात् त्रयमपि प्रधानम् । तथाच नागरखंडे– उपवासप्रभावेण बलादपि च जागरात् । शिवरात्रेस्तथा तस्यां लिंगस्यापि प्रपूजया । अक्षय्यॉंल्लभते कामाञ्छिवसायुज्यमाप्नुयात् । इदं च व्रतं संयोगपृथक्त्वन्यायेन नित्यं काम्यं च ॥ परात्परतरं नास्ति शिवरात्रिः परात्परा । न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् । जंतुर्जन्मसहस्रेषु युज्यते नात्र संशयः– इति स्कांदे । पारणं चैतद्व्रते स्कांदे तिथिमध्ये तदंते चोक्तम् । उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम् । कृतैः सुकृतलक्षैश्च लभ्यते यदि वा न वा । ब्रह्मांडोदरमध्ये तु यानि तीर्थानि संति वै । संस्थितानि भवंतीह भूतायां पारणे कृते । तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीम् । तथा–कृष्णाष्टमीं स्कंदषष्ठीं शिवरात्रिस्तथैव च । एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेत् । अनयोर्विरुद्धवचनयोर्व्यवस्थैवं माधवेनोक्ता । यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणमिति वचनाद्यामत्रयमध्ये चतुर्दशीसमाप्तौ तिथ्यंते तदुत्तरगामित्वे तु प्रातस्तिथिमध्य एवेति । तिथिमध्य-

पो हि भविष्यति न संशयः ४६ तदा लोका भविष्यंति मद्यपानपरायणाः । स्वल्पायुषः स्वल्पभाग्या नानारोगैश्च पीडिताः ४७ द्वि
शास्तु दक्षिणे देशे वेदज्ञाः संभवंति च । आनीय शाल्छाककर्ता धर्मं संस्थापयिष्यति ४८ इति सनत्कुमारसंहितायां वैकुंठचतुर्द
शीकथा ॥ ॥ अथशिवरात्रिव्रतम् ॥ अमांतमासेनेह माघकृष्णचतुर्दश्यां शिवरात्रिव्रतम् । तच्चार्धरात्रव्यापिन्यां कार्यम् । तदुक्तं नारदसंहि
तायाम् । अर्धरात्रयुता यत्र माघकृष्णचतुर्दशी । शिवरात्रिव्रतं तस्य सोऽश्वमेधफलं लभेत् । ईशानसंहितायामपि–माघकृष्णचतुर्द
श्यामादिदेवो महानिशि । शिवलिंगममूत्तत्र कोटिसूर्यसमप्रभम् । तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । माघकृष्णत्वं
चात्रामांतमासपरत्वेन । अत एव । चतुर्दश्यां तु कृष्णायां फाल्गुने शिवपूजनम् । तामुपोष्य प्रयत्नेन विषयान्परिवर्जयेत् ।
इति । सुमंतुवचने पौर्णिमांतमासोप्युक्तः । महानिशा च । महानिशा द्वे घटिके रात्रेर्मध्यमयामयोरिति देवलोक्तेर्निशीथरूपैव । एव
चार्धरात्रशब्दोपि तत्पर एव । दिनद्वये निशीथव्याप्तावव्याप्तौ वा परैव, प्रदोषव्यापिनीलाभात् । दिनद्वये चतुर्दश्यां पूर्वा त्या
ज्या परा शुभा । आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी । प्रदोषव्यापिनी ग्राह्या शिवरात्रेश्चतुर्दशी । रात्रौ जागरणं यस्मा
त्तस्मात्तां समुपोषयेत् । अहोरात्रव्रतं यत्र एकमेकतिथौ गतम् । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रतीति कामिकाशिवरात्रि शि
वरहस्ये । स्मृत्यतरादिवचनाच्च । न च पूर्वदिनेऽधिकव्याप्तिवशाच्च पूर्वैवेति शक्यम् । एतस्य भूयसा स्यात् सधर्मं त्वमिति
न्यायमात्रत्वेन वचनबाधकत्वायोगात् । प्रत्युत निरुक्तवचनैरेव तद्बाधाच्च । पूर्वदिने निशीथे परदिने प्रदोषे तदा पूर्वैव । अर्ध
रात्रात्परस्ताच्चेज्जयायोगो यदा भवेत् । पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रिया । इति पाद्मे जयायोगस्य विहितत्वात् । प्रदोषमपि पा-

रण्यगर्भेति दक्षिणाम् । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वर । नीराजनम् ॥ फलेन फलितं० फलम् । यानि कानि च पापानि ब्रह्महत्यासमानि च । तानि तानि विनश्यंति प्रदक्षिणपदे पदे । नाभ्या आसीदिति प्रदक्षिणाम् । मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । सप्तास्यासन्निति नमस्कारम् । सद्योजातमिति वामदेवायेति वा । यज्ञेनयज्ञमिति मंत्रपुष्पांजलिम् । श्रूयतां धर्मसर्वस्वं शिवरात्रौ शिवार्चनम् । व्रतयज्ञविधानेन स्वर्गपुण्येन कर्मणा । कृत्वा स्नानं शुचिर्भूत्वा धौतवस्त्रसमन्वितः । स्थापयेद्देवदेवेशं मंत्रैर्वेदसमुद्भवैः । ततः पूजा प्रकर्तव्या पूर्वोक्तविधिनाततः । नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर । पूजां गृहाण महतां महेश प्रथमां पदे । प्रथमप्रहरपूजा ॥ पूर्वे नंदीमहाकालौ शृंगी भृंगी च दक्षिणे । वृषस्कंदौ पश्चिमे च देशकालो तथोत्तरे । गंगा च यमुना चैव पार्श्वे चैव व्यवस्थिते । नमो व्यक्ताय सूक्ष्माय नमस्ते त्रिपुरांतक । पूजां गृहाण देवेश यथाशक्त्योपपादिताम् । द्वितीयप्रहरे ॥ बद्धोहं विविधैः पाशैः संसारभयबंधने । पतितं मोहजाले मां त्वं समुद्धर शंकर । तृतीये ॥ चतुर्थे प्रहरे आद्यवत् ॥ नमःशिवाय शांताय सर्वपापहराय च । शिवरात्रौ मया दत्तं गृहाणार्घ्यं प्रसीद मे । द्वितीये ॥ दुःखदारिद्र्यभावैश्च दग्धोहं पार्वतीपते । मां वै त्राहि महादेव गृहाणार्घ्यं नमोस्तु ते । तृतीये ॥ किं न जानासि देवेश तावद्भक्तिं प्रयच्छ मे । स्वपादाग्रतले देव दास्यं देहि जगत्पते । चतुर्थे ॥ यस्यस्मृत्या० । प्रार्थना । इतिशिवपूजासमाप्ता ॥ ॥ अथकथा ॥ सूतउवाच ॥ सकारणमशेषस्य जगतः सर्वदा शिवः । गोब्राह्मणनृपाणां च शिवं भवतु मे सदा १ कैलासशिखरासीनं देवदेवं जगद्गुरुम् । पंचवक्त्रं दशभुजं त्रिनेत्रं शूलपाणिनम् २ पिनाकशोभितकरं खड्गखेटकधारिणम् । कपालखट्वांगधरं नीलकंठसुशोभितम् ३ भस्मांगव्यालशोभा-

काळो मुख्यस्तदतकाळो गौणः । उत्तरभावित्वादित्याहुः । केचित्तु–शक्तस्तिथ्यंते अशक्तस्तिथिमध्ये एवेत्यूचुः । शिवरात्रिग्रहणं तु पूर्वविद्धाविधानार्थमिति । वस्तुतस्तु सा त्वस्तमयपर्यंतव्यापिनी चेत्परेद्यवि । दिवैव पारणं कुर्यात्पारणे नैव दोषभाक् । शिवरात्रिप्रकरणपठितकालादर्शादिलिखितवचनाद्दिवा तिथिसमाप्तौ तिथ्यंते ऽन्यथा तन्मध्य एवेति ॥ इतिनिर्णयः ॥ अथव्रतविधिः ॥ मासपक्षाद्युल्लिख्य मम पापक्षयार्थमक्षय्यमोक्षभोगप्राप्त्यर्थं शिवरात्रिव्रतं करिष्ये । इति संकल्प्य । षोडशोपचारैः शिवपूजां कुर्यात् । तत्र पूजा । आगच्छ देवदेवेश मर्त्यलोकहितेच्छया । पूजयामि विधानेन प्रसन्नः सुमुखो भव । सहस्रशीर्षेत्यावाहनम् ॥ पादासनं कुरु प्राज्ञ निर्मलं स्वर्णनिर्मितम् । भूषितं विविधै रत्नैः कुरु त्वं पादुकासनम् । पुरुषएवेदमित्यासनम् ॥ गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् । एतावानस्येतिपाद्यम् ॥ गंधोदकेन पुष्पेण चंदनेन सुगंधिना । अर्घ्यं गृहाण देवेश भक्तिं मे ह्यचलां कुरु । त्रिपादूर्ध्वेत्यर्घ्यम् ॥ कर्पूरोशीरसुरभि शीतलं विमलं जलम् । गंगायास्तु समानीतं गृहाणाचमनीयकम् । तस्माद्विराळेत्याचमनीयम् ॥ मंदाकिन्याः समानीतं हेमांभोरुहवासितम् । स्नानाय ते मया भक्त्या नीरं स्वीक्रियतां विभो । यत्पुरुषेणेति स्नानम् ॥ वस्त्रं सूक्ष्मं दुकूलं च देवानामपि दुर्लभम् । गृहाण त्वमुमाकांत प्रसन्नो भव सर्वदा । तंयज्ञमिति वस्त्रम् ॥ यज्ञोपवीतं सहजं ब्रह्मणा निर्मितं पुरा । आयुष्यं बलवर्चस्वमुपवीतं गृहाण मे । तस्माद्यज्ञात्सर्वहुत उपवीतम् ॥ श्रीखंडं चंदनं दिव्यं० तस्माद्यज्ञात्सर्वहुतऋच० गंधम् । माल्यादीनि० तस्मादश्वेतिपुष्पम् । वनस्पतिरसोद्भूतो० यत्पुरुषं० धूपम् ॥ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह । ब्राह्मणोस्येति दीपम् ॥ नैवेद्यंगृह्यतां० । चंद्रमामनस इति नैवद्यम् ॥ पूगीफलमिति तांबूलम् । हि

रण्यगर्भेति दक्षिणाम् । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वर । नीराजनम् ॥ फलेन फलितं० फलम् । यानि कानि च पापानि ब्रह्महत्यासमानि च । तानि तानि विनश्यंति प्रदक्षिणपदे पदे । नाभ्या आसीदिति प्रदक्षिणाम् । मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । सप्तास्यासन्निति नमस्कारम् । सद्योजातमिति वामदेवायेति वा । यज्ञेनयज्ञमिति मंत्रपुष्पांजलिम् । श्रूयतां धर्मसर्वस्वं शिवरात्रौ शिवार्चनम् । व्रतयज्ञविधानेन स्वर्गपुण्येन कर्मणा । कृत्वा स्नानं शुचिर्भूत्वा धौतवस्त्रसमन्वितः । स्थापयेद्देवदेवेशं मंत्रैर्वेदसमुद्भवैः । ततः पूजा प्रकर्तव्या पूर्वोक्तविधिनाततः । नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर । पूजां गृहाण मद्दत्तां महेश प्रथमां पदे । प्रथमप्रहरपूजा ॥ पूर्वे नंदीमहाकालौ शृंगी भृंगी च दक्षिणे । वृषस्कंदौ पश्चिमे च देशकालौ तथोत्तरे । गंगा च यमुना चैव पार्श्वे चैव व्यवस्थिते । नमो व्यक्ताय सूक्ष्माय नमस्ते त्रिपुरांतक । पूजां गृहाण देवेश यथाशक्त्योपपादिताम् । द्वितीयप्रहरे ॥ बद्धोहं विविधैः पाशैः संसारभयबंधने । पतितं मोहजाले मां त्वं समुद्धर शंकर । तृतीये ॥ चतुर्थे प्रहरे आद्यवत् ॥ नमःशिवाय शांताय सर्वपापहराय च । शिवरात्रौ मया दत्तं गृहाणार्घ्यं प्रसीद मे । द्वितीये ॥ दुःखदारिद्र्यभावैश्च दग्धोहं पार्वतीपते । मां वै त्राहि महादेव गृहाणार्घ्यं नमोस्तु ते । तृतीये ॥ किं न जानासि देवेश तावद्भक्तिं प्रयच्छ मे । स्वपादाग्रतले देव दास्यं देहि जगत्पते । चतुर्थे ॥ यस्यस्मृत्या० । प्रार्थना । इतिशिवपूजासमाप्ता ॥ ॥ अथकथा ॥ सूतउवाच ॥ सकारणमशेषस्य जगतः सर्वदा शिवः । गोब्राह्मणनृपाणां च शिवं भवतु मे सदा १ कैलासशिखरासीनं देवदेवं जगद्गुरुम् । पंचवक्त्रं दशभुजं त्रिनेत्रं शूलपाणिनम् २ पिनाकशोभितकरं खड्गखेटकधारिणम् । कपालखट्वांगधरं नीलकंठसुशोभितम् ३ भस्मांगव्यालशोभा-

व्यमस्थिमालाविभूषितम् । नीलजीमूतसंकाशं सूर्यकोटिसमप्रभम् ४ कीर्तंतं च शिवं तत्र गणैश्च परिवारितम् । विसृज्य देवताः सर्वास्तिष्ठंतं परमेश्वरम् ५ तं दृष्ट्वा देवदेवेश प्रहस्योत्फुल्ललोचनम् । पार्वती परिपप्रच्छ विनयावनता स्थिता ६ ( गौरी प्रोवाच भर्तारं विस्मयोत्फुल्ललोचना ) ॥ पार्वत्युवाच ॥ कथयस्व प्रसादेन यत्रोप्य व्रतमुत्तमम् ७ श्रुतास्त्वयोक्ता देवेश व्रतानां निर्णयाः शुभाः । तथा वै दानधर्माश्च तीर्थधर्मास्त्वयोदिताः ८ नास्ति मे निश्चयो देव भ्रांताऽहं च पुनःपुनः । तस्माद्वदस्व मे देव ह्येकं निःसंशय प्रभो ९ व्रतानामुत्तमं देव भुक्तिमुक्तिप्रदायकम् । तदहं श्रोतुमिच्छामि कथयस्व मम प्रभो १० ईश्वर उवाच । शृणु देवि प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । यन्न कस्य चिदाख्यातं रहस्यं मुक्तिदायकम् । ११ येनैव कथ्यमानेन यमो विलयतां व्रजेत् । तदहं कथयिष्यामि शृणुष्वैकमनाः प्रिये १२ माघमासे कृष्णपक्षे क्षमायुक्ता चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा १३ दानैर्यज्ञैस्तपोभिश्च व्रतैश्च विविधैरपि । न तीर्थैस्तद्भवेत्पुण्यं शिवरात्रिव्रतोद्भवम् १४ शिवरात्रिसमं नास्ति व्रतानामुत्तमं व्रतम् । ज्ञानतोऽज्ञानतो वापि कृत्वा मोक्षमवाप्नुयात् १५ मृता ये निरय त्यक्त्वा गतास्ते शिवसन्निधौ । सर्वमंगलशीला च सर्वामंगलनाशिनी १६ मुक्तिमुक्तिप्रदा चैषा सत्यं सत्यं वरानने ॥ देव्युवाच । कथं यमपुरं त्यक्त्वा शिवलोके व्रजेन्नरः १७ एतन्मे महादाश्चर्यं प्रत्यक्षं कुरु शंकर । शंकर उवाच । शृणु देवि यथाह्यसौ कथां पौराणिकीं शुभाम् १८ यमशासनहर्त्रीं च शिवस्थानप्रदायिनीम् । [१]कश्चिदासीत्पुरा देवि निषादो जीवघातकः १९ प्रत्यंतदेशवासी च गृध्रराजध्वजकेतनः । सीमांते स सदा तिष्ठन् कुटुंबपरिपालकः २० शूरो नित्यं धनुर्धारी

१ भाविभविय इत्यपि पाठः २ अत्र 'सन्वापीतो' एवमपि पाठः ।

श्यामांगः कृष्णकंचुकः । बद्धगोधांगुलित्राणः सदैव मृगयारतः २१ एवं विधो निषादोऽसौ चतुर्दश्या दिने शुभे । व्यावहारिकैश्च द्रव्यार्थे देवागारे परोधितः २२ तेनापि देवता दृष्टा जेनानां वचनं श्रुतम् । उपवासव्रतीनां च शिवः शिव शिवेति च २३ दिनांते तैस्तदा मुक्तः प्रातर्द्रव्यं प्रदीयताम् । ततोऽसौ धनुरादाय दक्षिणेन गतः स्वयम् २४ आगच्छन्स वनोद्देशे जनहासं चकार सः । शिवःशिवः किमेतद्धि कुर्वंति नगरे जनाः २५ वनेचरान्निरीक्षंस्तु चक्षुर्दिक्षु इतस्ततः । पदं च मृगमार्गं च अन्वेष्यन्सूकरान्मृगान् २६ इतश्चेतश्च धावन्वै आमिषे लुब्धमानसः । वनं च पर्वतान्सर्वान्भ्रमित्वा गिरिकंदराः २७ संप्राप्तं तेन नो किंचिन्मृगसूकरचित्तलम् । निराशो लुब्धको जातस्तदा ह्यस्तंगतो रविः २८ चिंतयित्वा जलोपांते जागरं जीवघातनम् । संविधास्याम्यहं रात्रौ निश्चितं मम जीवनम् २९ गतोऽसौ जलसामीप्यं तीरस्थो जालिमध्यतः । आश्रमं कर्तुमारेभे आत्मनो गुप्तिकारणात् ३० जालिमध्ये महालिंगं स्थितं स्वायंभुवं शुभम् । बिल्ववृक्षो महान् दिव्यो जालिमध्ये च संस्थितः ३१ गृहीत्वा तस्य पर्णानि मार्गशुद्ध्यर्थमक्षिपत् । क्षिप्तानि दक्षिणे भागे निपेतुर्लिंगमूर्द्धनि ३२ न दिवा भोजनं तस्य आमिषे लुब्धचेतसः । ततश्चिंतयमानस्य न निद्रा समजायत ३३ तस्य गंधं समासाद्य लुब्धकस्य वरानने । न तिष्ठंति मृगाः सर्वे शरघातभयात्तदा ३४ मृगान्निरीक्षतस्तस्य निद्रानाशोऽप्यजायत । बिल्वमध्ये गतस्याऽस्य प्रथमः प्रहरो गतः ३५ ततो जलार्थमायाता हरिणी गर्भसंयुता । यौवनस्था सुरूपा च स्तनपीना सुशोभना ३६ निरीक्षंती दिशः सर्वा भृशमुत्फुल्ललोचना । लुब्धकेनापि सा दृष्टा बाणगोचरमागता ३७ बाणश्च संधितस्तेन एकदृष्टेन चेतसा । त्रोटयित्वाऽथ पत्राणि प्रक्षि-

१ उपवासव्रतीनां जनाना शिवः शिवशिवेति वचन श्रुतमित्यन्वयः । २ मार्गेणेत्यर्थः ।

ब्यमस्थिमालाविभूपितम् । नीलजीमूतसकाशं सूर्यकोटिसमप्रभम् ४ कीर्डंतं च शिवं तत्र गणैश्च परिवारितम् । विस्मृण्य देवताः
सर्वास्तिर्यंतं परमेश्वरम् ५ तं दृष्ट्वा देवदेवेश प्रहस्योत्फुल्ललोचनम् । पार्वती परिपप्रच्छ विनयावनता स्थिता ६ ( गौरी प्रोवाच
भर्तारं विस्मयोत्फुल्ललोचना ) ॥ पार्वत्युवाच ॥ कथयस्व प्रसादेन यज्ञोप्य व्रतमुत्तमम् ७ श्रुतास्त्वयोक्ता देवेश व्रतानां निर्णया शु
भाः । तथा वै दानधर्माश्च तीर्थधर्मास्त्वयोदिताः ८ नास्ति मे निश्चयो देव भ्रांताऽहं च पुनःपुनः । तस्माद्वदस्व मे देव ह्येकं निः
संशय प्रभो ९ व्रतानामुत्तमं देव भुक्तिमुक्तिप्रदायकम् । तदहं श्रोतुमिच्छामि कथयस्व मम प्रभो १० ईश्वर उवाच । शृणु देवि प्रवक्ष्या
मि व्रतानामुत्तमं व्रतम् । यन्न कस्य चिदाख्यातं रहस्यं मुक्तिदायकम् । ११ येनैव कथ्यमानेन यमो विलयतां व्रजेत् । तदहं कथयि-
ष्यामि शृणुष्वैकमनाः प्रिये १२ माघमासे कृष्णपक्षे ह्यमायुक्ता चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा १३ दानैर्यज्ञैस्त
पोभिश्च व्रतैश्च विविधैरपि । न तीर्थैस्तत्प्रवेत्पुण्यं शिवरात्रिव्रतोद्भवम् १४ शिवरात्रिसमं नास्ति व्रतानामुत्तमं व्रतम् । ज्ञानतोऽज्ञानतो
वापि कृत्वा मोक्षमवाप्नुयात् १५ मृता ये निरयं त्यक्त्वा गतास्ते शिवसन्निधौ । सर्वमंगलशीला च सर्वामंगलनाशिनी १६ भुक्तिमु-
क्तिप्रदा चैषा सत्यं सत्यं वरानने ॥ देव्युवाच । कथं यमपुरं त्यक्त्वा शिवलोके व्रजेन्नरः १७ एतन्मे महदाश्चर्यं प्रत्यक्ष कुरु शंकर ।
शंकर उवाच । शृणु देवि यथावृत्तां कथां पौराणिकीं शुभाम् १८ यमशासनहर्त्रीं च शिवस्थानप्रदायिनीम् । [१]कश्चिदासीत्पुरा देवि
निषादो जीवघातकः १९ प्रत्यंतदेशवासी च भूधरासन्नकेतनः । सीमति स सदा तिष्ठन् कुटुंबपरिपालकः २० शूरो नित्यं धनुर्धारी

१ मामिपभिप इत्यपि पाठः २ अत्र 'तन्मापीनो' एतदपि पाठः ।

कामातुरो नित्यं हिरण्याक्षो भविष्यति । त्वं मृगी तस्य भार्या वै भविष्यसि न संशयः ५७ त्यक्त्वा स्वर्गं तथा देवान् दानवं भोक्तुमि-
च्छसि । द्वादशाब्दानि भो भद्रे भविता शाप एव ते ५८ परस्परस्य शोकेन शापांतोपि भविष्यति । अनुग्रहः पुनस्त्वेष शंकरेण कृतः
स्वयम् ५९ कदाचिद्धि व्याधवरो मम सान्निध्यमाश्रितः । वधार्थं तव संप्राप्ता पूर्वजन्म स्मरिष्यसि ६० तत ऊर्ध्वं तदा रुद्रं दृष्ट्वा मोक्षम-
वाप्स्यसि । शंकरो न मया दृष्टो वसंत्याऽस्मिन्महावने ६१ ततो दुःखमनुप्राप्ता मांसमेदोविवर्जिता । गर्भाक्रांता विशेषेण न वध्या चेति
निश्चितम् ६२ त्वत्कुटुंबस्य ते नूनं भोजनं न भविष्यति । आयास्यति मृगी त्वन्या मार्गेणानेन लुब्धक ६३ पीना यौवनसंपन्ना बहु-
मांसा मदोद्धता । भोजनं सकुटुंबस्य तव सद्यो भविष्यति ६४ अथवाऽन्यो मृगो व्याध पानार्थं तु जलाशये । आगमिष्यति प्रत्यूषे
क्षुधार्तस्य न संशयः ६५ गर्भं त्यक्त्वा पुनः प्रातर्बालान्संदिश्य बंधुषु । शपथैरागमिष्यामि संदिश्य च सखीजनम् ६६ तस्यास्तद्वचनं
श्रुत्वा व्याधो विस्मयमागतः । क्षणमेकं तथा स्थित्वा व्याधो वचनमब्रवीत् ६७ नागमिष्यति चेदन्यो जीवस्त्वमपि गच्छसि । क्षुधया
पीडितोऽहं वै कुटुंबं च विशेषतः ६८ प्रातस्त्वया मम गृहमागंतव्यं यथायथम् । शपथैश्च व्रजं त्वं हि यथा मे प्रत्ययो भवेत् ६९ पृ-
थिवी वायुरादित्यः सत्ये तिष्ठंति देवताः । तस्मात्सत्येन गंतव्यं भवत्या स्वगृहं प्रति ७० तस्य तद्वचनं श्रुत्वा गर्भार्ता सा मृगी तदा ।
चक्रे सत्यप्रतिज्ञां वै व्याधस्याग्रे पुनःपुनः ७१ मृग्युवाच । द्विजो भूत्वा तु यो व्याध वेदभ्रष्टो ऽभिजायते । स्वाध्यायसंध्यारहितः स-
त्यशौचविवर्जितः ७२ अविक्रयाणां विक्रेता अयाज्यानां च याजकः । तस्य पापेन लिप्यामि यद्यहं नागमे पुनः ७३ दुष्टबुद्धौ तु य-
त्पापं धूर्ते वा ग्रामकंटके । नास्तिके च विशीले च परदाररते तथा ७४ वेदविक्रयिणे चैव शवसूतकभोजने । तेन पापेन लिप्यामि

तानि शिवोपरि ३८ शिवं देवं सदा ध्यायन् शीतेन परिपीडितः । एतस्मिन्नंतरे दृष्टो हरिण्या लुब्धकस्तदा ३९ लुब्धकस्तु स्वरूपेण
कृतांत इव दृश्यते । दृष्ट्वा तु तस्य संधान यमदंष्ट्रासमप्रभम् ४० मृगी सा दिव्यया वाचा लुब्धक वाक्यमब्रवीत् । मृग्युवा-
च । स्थिरो भव महाव्याध सर्वजीवनिकृंतन ४१ कथयस्व महाबाहो किमर्थं मां हनिष्यसि ॥ लुब्धक उवाच । कुटुंबं पीडितं मेऽद्य
क्षुधया च मया सह ४२ पोष्याम्यहं सदैवापि ह्यामिषाहारभोजनैः । धन वै मद्गृहे नास्ति तेन त्वां हन्मि शोभने ४३ सूत उवाच । यामपू
र्वे परमं दृष्ट्वा किंचिद्धर्मसमन्वितः ४५ लुब्धक उवाच । मया हि घातिता जीवा उत्तमाधममध्यमाः । न श्रुता ईदृशी वाणी श्वापदानां
जागरोपोषणेन च । चतुर्थांशेन पापानां विमुक्तो लुब्धकस्तदा ४४ लुब्धकस्तु ततो दृष्ट्वा मृगीं मानुषभाषिणीम् । आश्च
कथंचन ४६ कस्मिन्देशे त्वमुत्पन्ना कस्माद् स्थानादिहागता । कथयस्व प्रयत्नेन परं कौतूहलं हि मे ४७ मृग्युवाच । शृणु त्वं लुब्ध
कश्रेष्ठ कथयामि तवाऽखिलम् । आसं पूर्वं महारम्या स्वर्गे शक्रस्य चाप्सरा ४८ अनंतरूपलावण्या सौभाग्येन च गर्विता । सौभाग्यमद
पुष्टांगो दानवो बलगर्वितः ४९ ममैव सद्भूतो भर्ता हिरण्याक्षो महासुरः । तेन सार्द्धं मया भुक्तं चिरकालं यथेप्सितम् ५० एवं काले
गतो व्याध क्रीडया मेऽसुरेण च । एकदा प्रेक्षितुं नृत्यं शंकरस्य गता तदा ५१ यावन्नृत्याम्यहं तत्र तावन्मां शंकरोऽब्रवीत् । क गता
त्वं वरारोहे केन वा संगता शुभे ५२ किंवा सौभाग्यगर्वेण नाऽऽयाता मम मंदिरम् । सत्यं कथय शीघ्रं त्वं नो वा शापं ददामि ते ५३
शापभीत्या मया तत्र इत्युक्तं शंकराग्रतः । शृणु देव प्रवक्ष्यामि शापानुग्रहकारक ५४ ममास्ति भर्ता विश्वेश दानवेंद्रो महाबलः । ते
न सार्द्धं मया देव क्रीडितं निजमंदिरे ५५ तेनाहं नागता शीघ्रं सृष्टिसंहारकारक । श्रुत्वा तद्वचनं श्रुत्वा सकोपो वाक्यमब्रवीत् ५६ मृगः

कामातुरो नित्यं हिरण्याक्षो भविष्यति । त्वं मृगी तस्य भार्या वै भविष्यसि न संशयः ५७ त्यक्त्वा स्वर्गं तथा देवान् दानवं भोक्तुमि-
च्छसि । द्वादशाब्दानि भो भद्रे भविता शाप एव ते ५८ परस्परस्य शोकेन शापांतोपि भविष्यति । अनुग्रहः पुनस्त्वेष शंकरेण कृतः
स्वयम् ५९ कदाचिद्धि व्याधवरो मम सान्निध्यमाश्रितः । वधार्थं तव संप्राप्ता पूर्वजन्म स्मरिष्यसि ६० तत ऊर्ध्वं तदा रुद्रं दृष्ट्वा मोक्षम-
वाप्स्यसि । शंकरो न मया दृष्टो वसंत्याऽस्मिन्महावने ६१ ततो दुःखमनुप्राप्ता मांसमेदोविवर्जिता । गर्भाक्रांता विशेषेण न वध्या चेति
निश्चितम् ६२ त्वत्कुटुंबस्य ते नूनं भोजनं न भविष्यति । आयास्यति मृगी त्वन्या मार्गेणानेन लुब्धक ६३ पीना यौवनसंपन्ना बहु-
मांसा मदोद्धता । भोजनं सकुटुंबस्य तव सद्यो भविष्यति ६४ अथवाऽन्यो मृगो व्याध पानार्थं तु जलाशये । आगमिष्यति प्रत्यूषे
क्षुधार्तस्य न संशयः ६५ गर्भं त्यक्त्वा पुनः प्रातर्बालान्संदिश्य बंधुषु । शपथैरागमिष्यामि संदिश्य च सखीजनम् ६६ तस्यास्तद्वचनं
श्रुत्वा व्याधो विस्मयमागतः । क्षणमेकं तथा स्थित्वा व्याधो वचनमब्रवीत् ६७ नागमिष्यति चेदन्यो जीवस्त्वमपि गच्छसि । क्षुधया
पीडितोऽहं वै कुटुंबं च विशेषतः ६८ प्रातस्त्वया मम गृहमागंतव्यं यथायथम् । शपथैश्च व्रजं त्वं हि यथा मे प्रत्ययो भवेत् ६९ पृ-
थिवी वायुरादित्यः सत्ये तिष्ठंति देवताः । तस्मात्सत्येन गंतव्यं भवत्या स्वगृहं प्रति ७० तस्य तद्वचनं श्रुत्वा गर्भार्ता सा मृगी तदा ।
चक्रे सत्यप्रतिज्ञां वै व्याधस्याग्रे पुनःपुनः ७१ मृग्युवाच । द्विजो भूत्वा तु यो व्याध वेदभ्रष्टो ऽभिजायते । स्वाध्यायसंध्यारहितः स-
त्यशौचविवर्जितः ७२ अविक्रयाणां विक्रेता अयाज्यानां च याजकः । तस्य पापेन लिप्यामि यद्यहं नागमे पुनः ७३ दुष्टबुद्धौ तु य-
त्पापं धूर्ते वा ग्रामकंटके । नास्तिके च विशीले च परदाररते तथा ७४ वेदविक्रयिणे चैव शवसूतकभोजने । तेन पापेन लिप्यामि

पद्यह नागमे पुनः ७५ सुतसम्ध्यामतिग्राहे मातापित्रोरपालके । तेन पापेन लिप्यामि यदि नायामि तेऽतिकम् ७६ दान दातु मदत्तस्य
योऽन्तरायकरो नरः । तेन पापेन लिप्यामि यदि नायामि ते गृहम् ७७ देवद्रव्य गुरुद्रव्य ब्रह्मद्रव्यं हरेत्तु यः । तेन पापेन लिप्यामि यदि
नायामि ते गृहम् ७८ दीर्पं दीपेन यःकुर्यात्पाद पादेन धावयेत् । तेन पापेन लिप्यामि यदि नायामि ते गृहम् ७९ भर्तार स्वामिन
मित्रमात्मान बालमेव च । गां विम च गुरुं नारीं यो मारयति दुर्मतिः ८० तेन पापेन लिप्यामि यदि नायामि ते गृहम् । अवैष्णवे च
यत्पाप यत्पापं दांभिके जने ८१ अजितेंद्रियेषु यत्पाप परदोषानुकीर्तने । कृतघ्ने च कदर्ये च परदाररते तथा ८२ सदाचारविहीने च
परपीडामदायके । परपैशून्ययुक्ते च कन्याविक्रयकारके ८३ परापवादसंतुष्टे सर्वधर्मविवर्जिते । वृषलीपतौ वार्धुषिके पित्रोरत्तरदायके ८४
हैतुके चक्रस्थे च कूटसाक्ष्यप्रदे तथा । एतेषां पातक मह्यं यदि नायामि ते गृहम् ८५ यत्पाप ब्रह्महत्यायां पितृमातृवधे तथा । तेन
पापेन लिप्यामि यदि नायामि ते गृहम् ८६ यत्पाप लुब्धकानां च यत्पाप गरदायिनाम् । तेन पापेन लिप्यामि यदि नायामि ते गृ
हम् ८७ द्विभार्यः पुरुषो यस्तु समदृष्ट्या न पश्यति । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ८८ सकृद्दत्त्वा तु यः कन्यां द्वि-
तीयाय प्रयच्छति । तेन पापेन लिप्यामि यदि नायामि ते गृहम् ८९ कथायां कथ्यमानायामतर कुरुते नरः । तस्य पापेन लिप्यामि
यदि नायामि ते गृहम् ९० पतिनिंदापरो नित्यं वेदनिंदापरो हि यः । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ९१ यस्य सगृह-
णी भार्या ब्राह्मणी च विशेषतः । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ९२ प्रेतश्राद्धे तु यो भुंक्ते पतिते यद्दुयाचके । अस

१ स्वामिनिंदापर इत्यर्थः ।

च्छास्त्रार्थनिपुणे पुराणार्थविवर्जिते ९३ मूर्खे पाखंडनिरते क्रयविक्रयके द्विजे । एतेषां पातकं मह्यं यदि नायामि ते गृहम् ९४ एकाकी
मिष्टमश्नाति भार्यापुत्रविवर्जितः । आत्मजां गुणसंपन्नां समानसदृशे वरे ९५ न प्रयच्छति यः कन्यां नरो वै ज्ञानदुर्बलः । तेन पापेन
लिप्यामि यदि नायामि ते गृहम् ९६ मृगीवाक्यं ततः श्रुत्वा लुब्धको हृष्टमानसः । संहृत्य बाणं संधानान्मुमोच हरिणीं तदा ९७ तस्या
मुक्तिप्रभावेण लिंगस्यापि प्रपूजनात् । मुक्तोऽसौ पातकैः सर्वैस्तत्क्षणान्नात्र संशयः ९८ द्वितीये प्रहरे प्राप्ते मध्यरात्रे महानिशि । तस्मिन्नेव
क्षणे प्राप्ते परा प्राप्ता मृगी तदा ९९ संत्रस्ता भयसंविग्ना पतिमन्वेष्यती मुहुः । जालिमध्ये स्थितेनाऽथ दृष्टा सा लुब्धकेन तु १०० पु-
नर्वृक्षस्य पत्राणि त्रोटयित्वा करेण तु । क्षिप्तानि दक्षिणे भागे लिंगोपरि दिदृक्षया १ तस्या वधार्थं तेनाऽथो बाणो धनुषि संधितः । ति-
ष्ठंस्तत्रैकचित्तेन कुटुंबार्थं जिघांसया २ निरीक्ष्य लुब्धको यावद्बाणं तस्यां विमुंचति । तावन्मृग्या स संदृष्टो दृष्ट्वा तं विह्वलाऽभवत् ३ अ-
द्यैव भगिनी मे हि लुब्धकेन विनाशिता । मम किं जीवितव्येन तस्या दुःखेन पीडिता ४ वरो मृत्युर्न शोको वै दृष्ट्वा व्याधं विशेषतः ।
एवं संचिंत्य हरिणी लुब्धकं वाक्यमब्रवीत ५ हरिण्युवाच । धनुर्धरवर व्याध सर्वजीवनिकृंतन । देहि मे वचनं चैकं पश्चात्त्वं मां नि-
पातय ६ अयाता हरिणी चैका मार्गेणानेन लुब्धक । समायाताऽथवा नैव सत्यं कथय सुव्रत ७ तच्छ्रुत्वा लुब्धकस्तत्र विस्मितो क्ष-
णमैक्षत । तस्यास्तु यादृशी वाणी अस्याश्चैव तु तादृशी ८ सा चैषा चागता नूनं प्रतिज्ञापालनाय च । अथवाऽन्या समायाता या तया
कथिता पुरा ९ लुब्धक उवाच । अहोरात्रं कृतं कष्टं कुटुंबार्थे मया मृगि । अधुना त्वां हनिष्यामि देवानां स्मरणं कुरु ११० व्याधो-
क्तवचनं श्रुत्वा हरिणी दुःखिता भृशम् । व्याधं प्राह रुदित्वा वै भो मां व्याध निपातय ११ तेजो बलं तथा सर्वं निर्दग्धं विरहाग्निना ।

अहं प्राणान्विमोक्ष्यामि मोचनं ते न जायते ११ मत्तश्चान्य महातेजा मेदोमांससमन्वित । अन्यश्च पीनगौरांगो मृगो ह्यत्रागमिष्यति १२ अहं च दुर्बला नूनं मेदोमांसविवर्जिता । केवलं पापभाक्त्वं हि मम प्राणविमोचकः १४ मार्गेणानेन भो व्याध मृग आयास्यति स्फुटम् । तं हत्वा ते कुटुंबस्य तृप्तिर्नूनं भविष्यति १५ तयोक्तं लुब्धकः श्रुत्वा किं करोमीत्यचिंतयत् । मृग्योक्तो हि स युक्तार्थ एष मे निश्चयो हृदि १६ संचित्य लुब्धकः प्राह मृगीं शोकातुरां कृशाम् । सत्य वद महाभागे प्रत्ययो मे यथा भवेत् १७ तस्य तद्वचनं श्रुत्वा हरिणी दुःखकर्शिता । चक्रे सत्यप्रतिज्ञां तु व्याधस्याग्रे पुनः पुनः १८ मृग्युवाच । क्षत्रियस्तु रणं श्रुत्वा संग्रामं यो न गच्छति । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् १९ भेदयंति तडागानि वापीश्चाथ गवामपि । मार्गे स्थाने च ये व्रति सर्वसत्त्वमय कराः १२० तेषां वै पातकं मह्यं यदि नायामि ते गृहम् । एतच्छ्रुत्वा तु व्याधेन साऽपि मुक्ता मृगी तदा २१ जलं पीत्वा तु बहुशो गता सद्यो यथागतम् । जालिमध्ये स्थितस्याऽस्य द्वितीयः प्रहरो गतः २२ त्रोटित्वा बिल्वपत्राणि पुनर्देवे नियोजयत् । पीडितोऽतीव शीतेन क्षुधया गृहचिंतया २३ शिवः शिवेति जल्पन्वै न निशामुपलब्धवान् । कृत सुरार्चनं तेन प्रहरे प्रहरे गते २४ वीक्षन्नेव दिशः सर्वाः सत्वमार्गान्निरीक्षयत् । लुब्धकेनाथ दृष्टोऽसौ हरिणश्चपलेक्षणः २५ विलोकयन्दिशः सर्वा मार्गमाणो मृगीपदम् । सौभाग्यबलदर्पाढ्यो मदनोन्मत्तपीवरः २६ तं दृष्ट्वा बाणमाकृष्य ह्याकर्णं तुष्टमानसः । बाणं मुंचति यावद्वै तावद्दृष्टो मृगेण तु २७ कालरूपं तु तं दृष्ट्वा मृगश्चिंतितवान्स्फुटम् । निश्चितं भविता मृत्युर्गोचरस्य संस्थो यतः २८ भार्याप्राणसमा मेऽद्य व्याधेनेह निपातिता । तया विरहितस्याऽद्य न्यूनं मृत्युर्भविष्य

१ ममागत इति पाठः साधुः ।

ति २९ हाहा कालकृतं पापं यद्भार्यादुःखमागतम् । भार्यया न समं सौख्यं गृहेपि च वनेपि च ३० तया विना न धर्मोऽस्ति नार्थकामौ वि-
शेषतः । वृक्षमूलेपि दयिता यत्र तिष्ठति तद्गृहम् ३१ प्रासादोपि तया हीनः कांतारादतिरिच्यते । धर्मकामार्थकार्येषु भार्या पुंसः सहायि-
नी ३२ विदेशे च गतस्यापि सैव विश्वासकारिणी । नास्ति भार्यासमो बंधुर्नास्ति भार्यासमं सुखम् ३३ नास्ति भार्यासमं लोके नरस्या-
र्तस्य भेषजम् । यस्य भार्या गृहे नास्ति सापि चेत्प्रियवादिनी ३४ अरण्यं तेन गंतव्यं यथाऽरण्यं तथा गृहम् । एका प्राणसमा मेऽभू-
द्द्वितीया प्राणदा मम ३५ इत्येवं चिंतयित्वा तु लुब्धकं वाक्यमब्रवीत् ॥ मृग उवाच । शृणु व्याध नरश्रेष्ठ ह्यामिषाहारभोजन ३६
यत्ते पृच्छाम्यहं वीर तद्व्यक्तं वद मे प्रभो । आगतं हरिणीयुग्मं केन मार्गेण तद्गतम् ३७त्वया विनाशितं वाऽथ सत्यं कथय मेऽधुना । तस्य त-
द्वचनं श्रुत्वा लुब्धको विस्मयं गतः ३८ असावपि न सामान्यो देवता काप्यनुत्तमा । उवाच लुब्धकः सद्यस्तस्याग्रे वाक्यमुत्तमम् ३९ लुब्ध-
क उवाच । ते गते ऽनेन मार्गेण सत्यं कृत्वा ममाग्रतः । ताभ्यां दत्तोसि भुक्त्यर्थे मम त्वमधुना ऽनघ १४० संप्रति त्वां हनिष्यामि नैव
मोक्ष्यामि कर्हिचित् ॥ मृग उवाच । तत्सत्यं कीदृशं ताभ्यां वाक्यमुक्तं तवाग्रतः ४१ येन ते प्रत्ययो जातो मुक्तं तद्धरिणीद्वयम् । ते गते
केन मार्गेण ये मुक्ते व्याध तेऽधुना ४२ व्याध उवाच । ते गतेऽनेन मार्गेण स्वमाश्रमपदं प्रति । व्याधेन कथितास्ताभ्यां शपथा ये कृतास्त
दा ४३ तच्छ्रुत्वा वचनं तस्य हरिणो हृष्टमानसः ॥ मृग उवाच । ताभ्यां व्याध यदुक्तं च तत्करोमि न चान्यथा ४४ प्रभाते त्वद्गृहं नूनमाग-
मिष्यामि निश्चितम् । भार्या ऋतुमती मेऽद्य कामार्ताऽप्यधुना भृशम्४५ गत्वा गृहेथ भुक्त्वा तामापृच्छच च सुहृज्जनान् । शपथैरागमिष्या-
मि गृहं तेनाऽत्र संशयः ४६ मद्देहं स्वगृहे नाद्य नेतुं शक्तः कथंचन । तद्वृथा मरणं मे स्याद्यद्यहं घातितस्त्वया ४७लुब्धक उवाच । असत्यं भा-

अहं प्राणान्विमोक्ष्यामि भोजनं ते न जायते १२ षष्ठवांश्च महातेजा मेदोमांससमन्वितः । अन्यश्च पीनगौरांगो मृगो ह्यत्रागमिष्यति १३
अहं च दुर्बला नूनं मेदोमांसविवर्जिता । केवलं पापभाक् त्वं हि मम प्राणविमोचकः १४ मार्गेणानेन भो व्याध मृग आयास्यति स्फु-
टम् । तं हत्वा ते कुटुंबस्य तृप्तिर्नूनं भविष्यति १५ तयोक्तं लुब्धकः श्रुत्वा किं करोमीत्यचिंतयत् । मृगयोक्तो हि स युक्तार्थ एष मे निश्चयो
हृदि १६ सचिंत्य लुब्धकः प्राह मृगीं शोकातुरां कृशाम् । सत्यं वद महाभागे प्रत्ययो मे यथा भवेत् १७ तस्य तद्वचनं श्रुत्वा हरिणी
तु सकंपिता । चक्रे सत्यप्रतिज्ञां तु व्याधस्याग्रे पुनः पुनः १८ मृग्युवाच । क्षत्रियस्तु रणं श्रुत्वा संग्रामं यो न गच्छति । तस्य पापेन
लिप्यामि यदि नायामि ते गृहम् १९ भेदयंति तडागानि वापीश्चाथ गवामपि । मार्गं स्थानं च ये घ्नंति सर्वसत्त्वभयंकराः १२० तेषां
वै पातकं मह्यं यदि नायामि ते गृहम् । एतच्छ्रुत्वा तु व्याधेन साऽपि मुक्ता मृगी तदा २१ जलं पीत्वा तु बहुशो गता सद्यो यथाग
तम् । जालिमध्ये स्थितस्याऽस्य द्वितीयः प्रहरो गतः २२ त्रोटित्वा विल्वपत्राणि पुनर्देवे नियोजयत् । पीडितोऽतीव शीतेन क्षुधया गृ
हर्षितया २३ शिव शिवेति जल्पन्वै न निद्रामुपलब्धवान् । कृतं सुरार्चनं तेन प्रहरे प्रहरे गते २४ वीक्षत्येव दिशः सर्वाः सत्त्वमार्गान्नि
रीक्षयत् । लुब्धकेनाथ दृष्टोऽसौ हरिणश्चलेक्षणः २५ विलोकयन्दिशः सर्वा मार्गमाणो मृगीपदम् । सौभाग्यबलदर्पाढ्यो मदनोन्मत्तपी
वरः २६ तं दृष्ट्वा बाणमाकृष्य ह्याकर्णं तुष्टमानसः । बाणं मुंचति यावद्वै तावद्दृष्टो मृगेण सु २७ कालरूपं तु तं दृष्ट्वा मृगश्चिंतितवान्भृशम् ।
निश्चितं भविता मृत्युर्गोचरस्य सतो यतः २८ भार्याप्राणसमा मेऽद्य व्याधेनेह निपातिता । तया विरहितस्याऽद्य नूनं मृत्युर्भविष्य

१ अभागत इति पाठः साधुः ।

वृंताकं च पटोलं च कलिंगं तुंबिकाफलम् । मूलकं लशुनं कंदं कुसुंभं कन- [ काल- ] शाककम् ६७ एतानि भक्षयेद्यस्तु नरो वै ज्ञानदुर्बलः । तस्य नो जायते शुद्धिश्चांद्रायणशतैरपि ६८ एतेषां पातकं मह्यं यदि नायामि ते गृहम् । यः पठेत्स्वरहीनं च लक्षणेन विवर्जितम् ६९ इयासुः संचरन्विप्रो वेदानुद्वीरयेत्तु यः । विप्रस्य पठतः क्वापि शृणोति यदि चांत्यजः १७० वेदोपजीविको विप्रो ऽतिलोभाच्छूद्रभोजनः । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ७१ शूद्रान्नेषु च ये सक्ताः शूद्रसंपर्कदूषिताः । तेषां पापेन लिप्यामि यदि नायामि ते गृहम् ७२ लेखकश्चित्रकर्ता च वैद्यो नक्षत्रसूचकः । कूटकर्ता द्विजो यश्च तस्य पापस्य भाग्यहम् ७३ कूटसाक्षी मृषावादी परद्रव्यस्य तस्करः । परदाराभिगामी च ये च विश्वासघातकाः ७४ द्रव्ये द्रव्यं विनिक्षिप्य पानकूटसमाश्रिताः । वेश्यारताः सदा ये च दानदातुर्निवारकाः ७५ भर्तारं द्रव्यहीनं च कुरूपं व्याधिपीडितम् । या न पूजयते नारी रूपयौवनगर्विता ७६ एकादशीं तथा माघे शिवरात्रिं चतुर्दशीम् । पूर्वविद्धां प्रकुर्वंति तेषां पापस्य भाग्यहम् ७७ अथ किं बहुनोक्तेन भो लुब्धक तवाग्रतः । यदि नायामि ते गेहं मम सत्यं भवेत्तव ७८ तेन वाक्येन संतुष्टो व्याधो वै वीतकल्मषः । संहृत्य धनुषो बाणं मृगो मुक्तो गृहं प्रति ७९ जलं पीत्वा तु हरिणः प्रविष्टो गहनं प्रति । गतो ऽसौ तेन मार्गेण गतं येन मृगीद्वयम् १८० लुब्धकेन तदा तत्र जालिमध्ये स्थितेन हि । प्रत्यूषे बिल्वपत्राणि त्रोटयित्वा समर्प्य च ८१ शिव शिवेति जल्पन्वै ह्याशु यातो निजाश्रमम् । अथोदिते सूर्यबिंबे अकामाज्जागरे कृते ८२ पापान्मुक्तो ह्यसौ सद्यः शिवपूजाप्रभावतः । यावद्दिशो निरीक्षेत निराशो भोजनं प्रति ८३ तावच्छिशुव्रता चान्या मृगी तत्र समागता । दृष्ट्वा मृगीं तदा व्याधो बाणं धनुषि योजयन् ८४ यावन्मुंचत्यसौ बाणं तावदुक्तं तया तदा । मा बाणान्मुंच

पसे धूर्त प्रतारयसि मां वृथा । ज्ञात्वा मृत्यु स्थितं तत्र तदागच्छति कोल्पधीः४८ व्याधस्य वचन श्रुत्वा हरिणो वाक्यमब्रवीत्।शपथैरागमि
ष्यामि यथा ते प्रत्ययो भवेत् ४९ व्याध उवाच । मम त्वं शपथान्ब्रूहि विश्वासो मे भवेद्यथा । यथा हि प्रेषयामि त्वां स्वगृहं प्रति कामु
क १५० मृग उवाच । भर्तारं वंचयेद्या स्त्री स्वामिनं वंचते नरः । मित्रं च वंचयेद्यस्तु गुरुद्रोहं करोति यः ५१ विरस तु रस दद्या
त्प्रेमभेदं करोति यः । भेदयेद्यस्तडागानि प्रासादं पातयेत्तथा ५२ प्रवासशीलो यो विप्रः क्रयविक्रयकारकः । संध्यास्नानविहीनश्च वेदशा
स्त्रविवर्जितः ५३ मद्यपास्त्रीषु रता ये परनिंदारताश्च ये । परस्त्रीसेवका विप्राः परपैशुन्यसूचकाः ५४ शूद्रान्नभोजिनो ये च भार्यां पुत्रां
स्त्यजंति ये । वेदनिंदापरा ये च वेदशास्त्रार्थनिंदकाः ५५ तेषां वै पातकं मह्यं यदि नायामि ते गृहम् । भार्या सग्रहणी यस्य व्रतशौ
चविवर्जितः ५६ सर्वाशी सर्वविक्रेता द्विजानामपि निंदकः । त्रिषु वर्णेषु शुश्रूषां यः शूद्रो न करोति वै ५७ विप्रवाक्यं परित्यज्य पा
खंडाभिरताः सदा । ब्रह्मचर्यरताः शूद्रा ये च पाखंडसंश्रिताः ५८ तेषां वै पातकं मह्यं यदि नायामि ते गृहम् । तिलांस्तैलं घृतं क्षौद्रं
कंबलं लवणं गुडम् ५९ लोहं लाक्षादिकं सर्वं रत्नान्नानाविधानपि । विक्रियात्तेन शूद्रस्य तत्र दोषो न विद्यते १६० मद्यं मांसं विषं
दुग्धं नीलं च वृषभं तथा । मीनं क्षीरं सर्पकूटं विप्राम्रकफलानि च ६१ मद्यादि विक्रयेद्यस्तु शूद्रोपि मदमोहितः । आदित्यं विष्णु
मीशानं गणाध्यक्षं तु पार्वतीम् ६२ एतांस्त्यक्त्वा गृहे मूढो योऽन्यं पूजयते नरः । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ६३
यो गां स्पृशति पादेन ह्युदितेऽर्के च सुप्यति।एकाकी मिष्टमश्नाति तस्य पापस्य भाग्यहम् ६४ मातापित्रोरपोष्टा च क्रियामुद्दिश्य पाच
कः। कन्याशुल्कोपजीवी च देवब्राह्मणनिंदकः ६५ गोग्रासं हतकारं च अतिथीनां च पूजनम् । ये न कुर्वंति गृहिणस्तेषां पापं भवेन्मम ६६

वृंताकं च पटोलं च कलिंगं तुंबिकाफलम् । मूलकं लशुनं कंदं कुसुंभं कन- [ काल- ] शाककम् ६७ एतानि भक्षयेद्यस्तु नरो वै ज्ञानदुर्बलः । तस्य नो जायते शुद्धिश्चांद्रायणशतैरपि ६८ एतेषां पातकं मह्यं यदि नायामि ते गृहम् । यः पठेत्स्वरहीनं च लक्षणेन विवर्जितम् ६९ इयास्तुः संचरन्विप्रो वेदानुद्दीरयेत्तु यः । विप्रस्य पठतः क्वापि शृणोति यदि चांत्यजः १७० वेदोपजीविको विप्रो ऽतिलोभाच्छूद्रभोजनः । तस्य पापेन लिप्यामि यदि नायामि ते गृहम् ७१ शूद्रान्नेषु च ये सक्ताः शूद्रसंपर्कदूषिताः । तेषां पापेन लिप्यामि यदि नायामि ते गृहम् ७२ लेखकश्चित्रकर्ता च वैद्यो नक्षत्रसूचकः । कूटकर्ता द्विजो यश्च तस्य पापस्य भाग्यहम् ७३ कूटसाक्षी मृषावादी परद्रव्यस्य तस्करः । परदाराभिगामी च ये च विश्वासघातकाः ७४ द्रव्ये द्रव्यं विनिक्षिप्य पानकूटसमाश्रिताः । वेश्यारताः सदा ये च दानदातुर्निवारकाः ७५ भर्तारं द्रव्यहीनं च कुरूपं व्याधिपीडितम् । या न पूजयते नारी रूपयौवनगर्विता ७६ एकादशीं तथा माघे शिवरात्रि चतुर्दशीम् । पूर्वविद्धां प्रकुर्वंति तेषां पापस्य भाग्यहम् ७७ अथ किं बहुनोक्तेन भो लुब्धक तवाग्रतः । यदि नायामि ते गेहं मम सत्यं भवेत्तव ७८ तेन वाक्येन संतुष्टो व्याधो वै वीतकल्मषः । संहृत्य धनुषो बाणं मृगो मुक्तो गृहं प्रति ७९ जलं पीत्वा तु हरिणः प्रविष्टो गहनं प्रति । गतो ऽसौ तेन मार्गेण गतं येन मृगीद्वयम् १८० लुब्धकेन तदा तत्र जालिमध्ये स्थितेन हि । प्रत्यूषे बिल्वपत्राणि त्रोटयित्वा समर्प्य च ८१ शिव शिवेति जल्पन्वै ह्याशु यातो निजाश्रमम् । अथोदिते सूर्यबिंबे अकामाज्जागरे कृते ८२ पापान्मुक्तो ह्यसौ सद्यः शिवपूजाप्रभावतः । यावद्दिशो निरीक्षेत निराशो भोजनं प्रति ८३ तावच्छिशुवृता चान्या मृगी तत्र समागता । दृष्ट्वा मृगीं तदा व्याधो बाणं धनुषि योजयन् ८४ यावन्मुंचत्यसौ बाणं तावदुक्तं तया तदा । मा बाणान्मुंच

धर्मात्मन्धर्मं मा मुंच सुव्रत ८५ अहं न वध्या सर्वेषामिति शास्त्रविनिश्चयः । शयानो मैथुनासक्तः स्तनपो व्याधिपीडितः ८६ न
हंतव्यो मृगो राज्ञा मृगी च शिशुना वृता । अथवा धर्ममुत्सृज्य मां हनिष्यसि मानद ८७ बालकाः स्वगृहे मुक्त्वा सखीनां च निवेश्य वै ।
शपथैरागमिष्यामि शृणु व्याध वचो मम ८८ या स्वभर्तारमुत्सृज्य परे पुंसि रता सदा । तस्याः पापेन लिप्यामि यदि नायामि ते गृहम् ८९
मद्यं मांसं विषं दुग्धं नीलीकुसुमफलानि च । एतानि विक्रयेद्यस्तु नरो मोहसमन्वितः १९० तेषां पापेन लिप्यामि यदि नायामि ते गृहम् ।
तस्यास्तद्वचनं श्रुत्वा व्याधो विस्मयमागतः ९१ ततो व्याधेन सा मुक्ता गता वै निजमंदिरम् । व्याधोपि तत्स्थलं त्यक्त्वा जगाम स्व
गृहं प्रति ९२ सर्वेषां वचनं ध्यायन्मृगाणां सत्यवादिनाम् । एतेषां घातको नित्यमहं यास्यामि कां गतिम् ९३ वनाद्गृहं समायातो बा
लकाः क्षुधया वृताः । नाभू मांसं गृहे तस्य भोजनं येन जायते ९४ निरामिषं तु तं दृष्ट्वा निराशास्तेऽभवस्तदा । व्याधोपि च तदा तत्र
तेषां वाक्यानि संस्मरन् ९५ न भोजनं न निद्रां च लभते विस्मयान्वितः । आगमिष्यति ते नूनं शपथैरपि यंत्रिताः ९६ न तानहं वधिष्यामि
सतां व्रतमनुस्मरन् । लुब्धकेन तदा मुक्तो हरिणः शपथैर्वृत ९७ स्वमाश्रमं तु समाप्तो यत्र तद्धरिणीद्वयम् । सद्यः प्रसूता सा चैका द्विती
या रतिलालसा ९८ तृतीयापि समायाता बालकैर्बहुभिर्वृता । सर्वाः समेता एकत्र मरणे कृतनिश्चया ९९ परस्परं प्रजल्पत्यो लुब्ध-
कस्य विचेष्टितम् । आयातां हरिणीं मुक्त्वा रूपाढ्यां रतिलालसाम् २०० कृतकृत्योऽभवत्ताभिस्ताभ्यो वाक्यमथाब्रवीत् । युष्माभि
रिह सस्थेय कर्तव्यं प्राणरक्षणम् १ व्याघ्राद्व्यालाल्लुब्धकेभ्यो बालकानां प्रयत्नतः । यो हि सत्यानुगो भार्यां न मुक्ते मोहसंवृतः २

१ क्ख ' व्याघ्रादिभ्यो ' इति वा पाठः । २ अहं यस्या तु यो भार्यामिति पाठांतरम् ।

भ्रूणहा स तु विज्ञेयस्तस्य जन्म निरर्थकम् । संतानात्स्वर्गमाप्नोति इह कीर्तिं च शाश्वतीम् २ संततिर्यत्नतः पाल्या स्वर्गसौख्यप्रदायिका । अपुत्रस्य गतिर्नास्ति इह लोके परत्र च ४ येन केनाप्युपायेन पुत्रमुत्पादयेत्पुमान् । मया च तत्र गंतव्यं यत्र व्याधस्य मंदिरम् ५ सत्यं तु पालनीयं स्यात्सत्ये धर्मः प्रतिष्ठितः । एतच्छ्रुत्वा तु; ता नार्यो वाक्यमूचुः सुदुःखिताः ६ वयमप्यागमिष्यामस्त्वया सार्द्धं मृगोत्तम । तथा ते विप्रियं कांत न स्मरामः कदाचन ७ पुष्पितेषु वनांतेषु नदीनां संगमेषु च । कंदरेषु च शैलानां युष्माभी रक्षिता वयम् ८ न कार्यमद्यमस्माकं क्रीडितेन त्वया विना । नारीणां पतिहीनानां जीवितैः किं प्रयोजनम् ९ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् २१० अपि द्रव्ययुता नारी बहुपुत्रसुहृद्वृता । सा शोच्या बंधुवर्गस्य पतिहीना कुलांगना ११ गंधमाल्यैः स्त्रियो नित्यं प्रीयंते भर्तुरग्रतः । नातंत्री वाद्यते वीणा नाचक्रो भ्रमते रथः १२ नापतिः सुखमाप्नोति नारी पुत्रशतैर्वृता । नास्ति भर्तृसमो धर्मो नास्ति धर्मसमः सुहृत् १३ नास्ति भर्तृसमो नाथः स्त्रीणां भर्ता परा गतिः । एवं विलप्य ताः सर्वा मरणे कृतनिश्चयाः १४ बालकैस्तैः समायुक्ता भर्तृशोकेन दुखिताः । मृगस्तासां वचः श्रुत्वा हृदि चिंतापरोऽभवत् १५ गंतव्यं किं न गंतव्यं मया व्याधस्य मंदिरम् । एकतः सुकृतं रक्षन्कुटुंबस्य क्षयो भवेत् १६ तदंतिकं न चेद्यामि मम सत्यं क्षयं व्रजेत् । वरं पुत्रस्य मरणं भार्याया आत्मनस्तथा १७ सत्ये त्यक्ते नरो नित्यमाकल्पं रौरवं व्रजेत् । तस्मात्सत्यं पालनीयं नरैः श्रेयोर्थिभिः सदा १८ एवं संचिंत्य हरिणो धर्मान्हृदि मनोरमान् । ताभिः सहैव शनकैः क्षणात्तस्याश्रमं ययौ १९ तस्मिन्सरसि संस्नात्वा कर्मन्यासं चकार ह । तल्लिंगं प्रणिपत्याशु हृदि ध्यायन्सदाशिवम् २२० भक्ष्यं पानं परित्यज्य मैथुनं, भोगमेव च । कामं क्रोधं तथा लोभं मायां मो-

क्षविनाशिनीम् २२१ वदयित्वा तु तं देश लुब्धकाभिमुखं ययौ । तस्य भार्याश्च पुत्राश्च मरणे कृतनिश्चयाः २२ अनशन व्रत गृह्य पृष्ठलग्ना
समाययुः । भार्यापुत्रैः परिवृतो मृगस्तं देशमागमत् २३ क्षुधितैर्बालकैर्युक्तो लुब्धको यत्र तिष्ठति । मृगस्त देशमागत्य कुटुंबेन समन्वि
तः २४ पाळयन्सर्ववाक्यानि लुब्धक वाक्यमब्रवीत् ॥ मृग उवाच । हन मां प्रथम व्याध पश्चादेताः क्रमेण तु २५ बालकानि तत पश्चा
द्धन्यतां मा विलंबय । लुब्धकैस्तु मृगा भक्ष्या नास्ति दोषः कदाचन २६ वय यास्याम स्वर्लोक सत्यपूता न संशयः । तथा ते सकु
टुंबस्य प्राणपुष्टिर्भविष्यति २७ एतदुक्त्वा तु वचनं मृगेण परिभाषितम् । आत्मानं निंदयित्वा तु लुब्धको वाक्यमब्रवीत् २८ व्याध उ
वाच । अहो मृग महासत्त्व गच्छ गच्छ स्वमाश्रमम् । आमिषेण न मे कार्यं यद्भाव्य तद्भविष्यति २९ जीवानां घातने चैव विमुख
स्वर्जने तथा । नैव पाप करिष्यामि कुटुंबार्थे कदाचन २३० त्वं गुरुर्मम धर्माणामुपदेष्टा मृगोत्तम । गच्छ गच्छ मृगश्रेष्ठ कुटुंबेन सम
न्वित ३१ मया त्यक्तानि शस्त्राणि सत्यधर्मः समाश्रितः ॥ मृग उवाच । कर्मन्यासमहं कृत्वा त्वत्सकाशमिहागतः ३२ हन्यतां हन्यतां
शीघ्रं न ते पापं भविष्यति । मया दत्ता पुरा वाक् तया बद्धो न याम्यहम् ३३ एतदुक्त्वा तु वचन लुब्धको वाक्यमब्रवीत् ॥ लुब्धक
उवाच । त्व बन्धुस्त्वं गुरुर्भ्राता त्व मे माता पिता सुहृत् ३४ मया त्यक्तानि शस्त्राणि त्यक्त मायादिक बलम् । कस्य भार्या सुताः क
स्य कुटुंब कस्य तन्मृग ३५ तैः स्वकर्म च भोक्तव्य मृग गच्छ यथासुखम् । इत्युक्त्वा स तदा तूर्णं बभञ्ज सशरं धनुः ३६ मृग प्रदक्षिणी
कृत्य नमस्कृत्य क्षमापयत् । एतस्मिन्नंतरे नेदुर्देवदुंदुभयो दिवि ३७ आकाशात्पुष्पवृष्टिस्तु पपात सुमनोहरा । तदा दूताः समायाता
विमान गृह्य शोभनम् ३८ देवदूता ऊचुः । अहो व्याध महासत्त्व सर्वसत्त्वक्षयंकर । विमानमिदमारुह्य सदेहः स्वर्गमाविश ३९ शिवरा

त्रिप्रभावेण पातकं ते क्षयं गतम् । उपवासस्तु संजातो निशि जागरणं कृतम् २४० यामे यामे कृता पूजा अज्ञानेन शिवस्य च । सर्वपापविनिर्मुक्तो गच्छ त्वं रुद्रमंदिरम् ४१ विमानं च समारुह्य सत्याच्चित्रपदं व्रज । मृगराज महासत्व भार्यापुत्रसमन्वितः ४२ भार्यात्रितयसंयुक्तो नक्षत्रपदमाप्नुहि । तव नाम्ना तु तदृक्षं लोके ख्यातं भविष्यति ४३ एतच्छ्रुत्वा तु वचनं लुब्धकेन समन्वितः । विमानं तु तदारुह्य नक्षत्रपदमागतः ४४ हरिणीद्वयमन्वेष्टुं पृष्ठतो मृगमेव च । तारात्रितयसंयुक्तं मृगशीर्षं तदुच्यते ४५ बालकद्वितयं चाग्रे तृतीया पृष्ठतो मृगी । पृष्ठतस्तत्र संप्राप्ता मृगशीर्षस्य सन्निधौ ४६ मृगराद् दृश्यते ऽद्यापि ऋक्षं व्योमगमुत्तमम् । उपवासं करिष्यंति जागरेण समन्वितम् ४७ यथोक्तशास्त्रमार्गेण तेषां मोक्षो न संशयः । शिवरात्रिसमं नास्ति व्रतं पापक्षयापहम् ४८ यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ४९ अश्वमेधसहस्राणि वाजपेयशतानि च । प्राप्नोति तत्फलं सर्वं नात्र कार्या विचारणा २५० ॥ इति श्रीलिंगपु० उमामहेश्वरसंवादे शिवरात्रिव्रतकथा संपूर्णा ॥

॥ अथोद्यापनम् ॥ स्कंद उवाच । व्रतस्योद्यापनं कर्म कथं कार्यं च मानवैः । को विधिः कानि कर्माणि कथयस्व मम प्रभो १ ईश्वर उवाच । शृणु षण्मुख यत्नेन लोकानां हितकाम्यया । उद्यापनविधिं चैव कथयामि तवाग्रतः २ यदा संजायते वित्तं भक्तिश्रद्धासमन्वितम् । स एव व्रतकालः स्याद्यतो नित्यं हि जीवितम् ३ चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम् । एकभुक्तं त्रयोदश्यां चतुर्दश्यामुपोषणम् ४ संपाद्य सर्वसंभारान्मंडपं तत्र कारयेत् । वस्त्रैः पुष्पैः समाच्छन्नं पट्टवस्त्रैश्च शोभितम् ५ तन्मध्ये लेखयेद्दिव्यं लिंगतोभद्रमंडलम् । अथवा सर्वतोभद्रं मंडपांतः प्रकल्पयेत् ६ शोभोपशोभासंयुक्तदीपैः सर्वत्र सोज्वलम् । आचार्यं पूजयेत्तत्र ऋत्विग्भिः सहितं शुचिः ७ शिवरूपाश्च ते विप्राः पूज्याश्चंदनपुष्पकैः । अनुज्ञातश्च तैर्विप्रैः शिवपूजां समारभेत् ८

क्षविनाशिनीम् २२१ वंदयित्वा तु तं देव लुब्धकाभिमुखे ययौ । तस्य भार्याश्च पुत्राश्च मरणे कृतनिश्चयाः २२ अनशन व्रतं गृह्य पृष्ठलग्ना
समाययुः । भार्यापुत्रैः परिवृतो मृगस्तं देशमागमत् २३ क्षुधितैर्बालकैर्युक्तो लुब्धको यत्र तिष्ठति । मृगस्त देशमागत्य कुटुंबेन समन्वि
तः २४ पालयन्सर्ववाक्यानि लुब्धक वाक्यमब्रवीत् ॥ मृग उवाच । हन मां प्रथम व्याध पश्चादेताः क्रमेण तु २५ बालकानि तत पश्चा
द्धन्यतां मा विलम्बय । लुब्धकैस्तु मृगा भक्ष्या नास्ति दोषः कदाचन २६ वय यास्याम स्वर्लोक सत्यपूता न संशयः । तथा ते सकु
टुंबस्य प्राणपुष्टिर्भविष्यति २७ एतच्छ्रुत्वा तु वचन मृगेण परिभाषितम् । आत्मान निंदयित्वा तु लुब्धको वाक्यमब्रवीत् २८ व्याध उ
वाच । अहो मृग महासत्त्व गच्छ गच्छ स्वमाश्रमम् । आमिषेण न मे कार्यं यद्भाव्य तद्भविष्यति २९ जीवानां घातने चैव विमुक्त
स्वर्जने तथा । नैव पाप करिष्यामि कुटुंबार्थे कदाचन २३० त्वं गुरुर्मम धर्माणामुपदेष्टा मृगोत्तम । गच्छ गच्छ मृगश्रेष्ठ कुटुंबेन सम
न्वितः ३१ मया त्यक्तानि शस्त्राणि सत्यधर्मः समाश्रितः ॥ मृग उवाच । कर्मन्यासमहं कृत्वा त्वत्सकाशमिहागतः ३२ हन्यतां हन्यतां
शीघ्रं न ते पाप भविष्यति । मया दत्ता पुरा वाक्‌ तया वध्यो न याम्यहम् ३३ एतच्छ्रुत्वा तु वचन लुब्धको वाक्यमब्रवीत् ॥ लुब्धक
उवाच । त्वं बंधुस्त्व गुरुर्भ्राता त्व मे माता पिता सुहृत् ३४ मया त्यक्तानि शस्त्राणि त्यक्त मायादिक बलम् । कस्य भार्या सुता कु
स्य कुटुंब कस्य तन्मृग ३५ तैः स्वकर्म च भोक्तव्य मृग गच्छ यथासुखम् । इत्युक्त्वा स तदा तूर्णं वर्भंज सशर धनु ३६ मृग प्रदक्षिणी
कृत्य नमस्कृत्य क्षमापयत् । एतस्मिन्नंतरे नेदुर्देवदुंदुभयो दिवि ३७ आकाशात्पुष्पवृष्टिस्तु पपात सुमनोहरा । तदा दूताः समायाता
विमान गृह्य शोभनम् ३८ देवदूता ऊचुः । अहो व्याध महासत्त्व सर्वमत्स्यक्षयकर । विमानमिदमारुह्य सदेहः स्वर्गमाविश ३९ शिवरा

नि ॥ ॥ अथ पौर्णिमाव्रतानि लिख्यंते ॥ चैत्रीपौर्णमासी सामान्यनिर्णयात्परैव । अत्र विशेषो निर्णयामृते विष्णुस्मृतौ । चित्राऋक्षयुता चैत्री परा स्नानादिकर्मणि १ चित्रवस्त्रप्रदानेन सिद्धिमाप्नोति वै नरः । मंदार्के च गुरौ वारे यदा भवति पौर्णिमा २ तत्राश्वमेधजं पुण्यं स्नानश्राद्धादिभिर्भवेत् ३ वायवीये— संवत्सरकृतार्चायाः साफल्यायाखिलान्सुरान् । दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवम् ४ इयं मन्वादिरपि ॥ इति चैत्रीपूर्णिमा ॥ वैशाखपौर्णिमास्यां विशेषतः स्मर्यते । भविष्ये—वैशाखी कार्तिकी माघी तिथयोऽतीव पूजिताः । स्नानदानविहीनास्ता न नेयाः पांडुनंदन ॥ अथ ज्येष्ठशुक्लपौर्णमास्याममायां वा वटसावित्रीव्रतम् ॥ इयं च पूर्वविद्धा ग्राह्या । भूतविद्धा न कर्तव्या अमावास्या च पौर्णिमा । वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् १ इति ब्रह्मवैवर्तात् ॥ ज्येष्ठे मासि सिते पक्षे पूर्णिमायां तथा व्रतम् । चीर्णं व्रतं महाभक्त्या कथितं ते मयाऽनघे २-इति धर्मराज उवाच । दाक्षिणात्याश्चैवमाचरंति । पाश्चात्यादयस्तु अमावास्यायामाचरंति । तच्चोक्तं निर्णयामृते भविष्ये— अमायां च तथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ३ अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेंद्रिया । अयाचितं चतुर्दश्याममायां समुपोषणमिति ४ हेमाद्र्यादिभिस्तु भाद्रपदपौर्णिमास्यामिदमुक्तम् । ते तु तदानीं आचरंति, यदा त्वष्टादशघटिका चतुर्दशी तदा परैव ॥ पूर्वविद्धैव सावित्रीव्रते पंचदशी तिथिः । नाड्योऽष्टादश भूतस्य तत्र कुर्यात्परेहनीति माधवोक्तेः ॥ वस्तुतस्तु भूतविद्धानिषेध एव । भूतोऽष्टादशनाडीभिरिति वाक्यम् । अन्यथा सावित्रीव्रतेऽष्टादशनाडीवेधदोषकल्पनायां निषेधांतरकल्पनागौरवं स्यात् ॥ ज्येष्ठे मासि त्रयोदश्यां दंतधावनपूर्वकम् । दंतकाष्ठं समं शुभ्रं जातीयं चतुरंगुलम् ५ तस्यापराह्णसमये नद्यादौ विमले जले । तिलामलककल्केन केशान्संशोध्य यत्नतः ६ स्नात्वा चैव शुचिर्भूत्वा वटं

स्द्रनाम्ना नमोऽन्तेन ब्राह्मणानपि पूजयेत् । अव्रणं सजलं कुंभं तस्योपरि तु विन्यसेत् ९ सौवर्णी राजतं ताम्रं मृन्मयं वा नवं दृढम् । कुंभोपरि न्यसेदेवं उमया सहितं शुभम् १० सौवर्णेऽप्यथवा रौप्ये वृषभे संस्थिते शुभे । वस्त्रालंकरणैर्हेमैरलंकृत्य प्रपूजयेत् ११ पलेन वा तदर्द्धेन तदर्धार्धेन वा पुनः । वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत् १२ उमामहेश्वरीं मूर्तिं पूजयेद्वृषभे स्थिताम् । सोमं च सगणं चैव पूजयित्वा महेश्वरम् १३ पुराणस्तोत्रपाठैश्च रात्रिशेषं नयेद्बुधः । ततः प्रभातसमये कृत्वा सन्ध्यादिकाः क्रियाः १४ ततः पूजां प्रकुर्वीत ततो होमं समाचरेत् । तिलव्रीहियवैश्चैव पायसान्नेन भक्तितः १५ त्र्यंबकमिति मंत्रेण नमः शंभवेचेति च । गौरीर्मिमायेति मन्त्रेण शतमष्टोत्तरञ्चयम् १६ होमं कुर्याच्च मतिमान् बिल्वपत्रैस्तु नामभिः । अनेकपादहिर्बुध्न्यो भवः शर्व उमापतिः १७ रुद्रः पशुपतिः शर्वरदः शिव ईश्वरः । महादेवो हरो भीमो नामान्येव चतुर्दश १८ पूर्णाहुतिं ततो हुत्वा कर्मशेषं समापयेत् । एतैर्होमः प्रकर्तव्यः कुंभदानेपि तान्स्मरेत् १९ भोज्यं क्षमापयेद्देवमेभिर्नामपदैः पृथक् । प्रतिमां कुंभसहितामाचार्याय निवेदयेत् २० शंभो प्रसीद देवेश सर्वलोकेश्वर प्रभो । तव रूपप्रदानेन मम संतु मनोरथाः २१ आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः । सवत्सां गां ततो दद्याद्व्रतसंपूर्णहेतवे २२ अन्येभ्यो ऽपि यथाशक्त्या ब्राह्मणेभ्यो हि दक्षिणाम् । चतुर्दश प्रदातव्या विप्रेभ्यो जलपूरिताः २३ कुंभा यज्ञोपवीतानि वस्त्राणि च पृथक् पृथक् । ससूक्ष्माणि च वस्त्राणि शय्यां सोपस्करां तथा २४ द्वादशैव तु गा दद्यात्परिधानादिकं तथा । अथवा दक्षिणामेव प्रदद्यात्तुष्टये विभान् २५ व्रतमेतत्कृतं यन्मे पूर्णं वाऽपूर्णमेव च । सर्वं संपूर्णतां यातु प्रसादाद्भवतो मम २६ इति समाप्य तान् विप्रान्प्रणम्य च पुनः पुनः । ततश्च स्वजनैः सार्द्धं स्वयं भुंजीत सुव्रती २७ ॥ इति श्रीस्क० शिवरात्रिव्रतोद्या० संपूर्णं ॥ ॥इति चतुर्दशीव्रतानि समाप्ता-

नि ॥ ॥ अथ पौर्णिमाव्रतानि लिख्यंते ॥ चैत्रीपौर्णमासी सामान्यनिर्णयात्परैव । अत्र विशेषो निर्णयामृते विष्णुस्मृतौ । चित्राऋक्षयुता चैत्री परा स्नानादिकर्मणि १ चित्रवस्त्रप्रदानेन सिद्धिमाप्नोति वै नरः । मंदार्के च गुरौ वारे यदा भवति पौर्णिमा २ तत्राश्वमेधजं पुण्यं स्नानश्राद्धादिभिर्भवेत् ३ वायवीये— संवत्सरकृतार्चायाः साफल्यायाखिलान्सुरान् । दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवम् ४ इयं मन्वादिरपि ॥ इति चैत्रीपूर्णिमा ॥ वैशाखपौर्णिमास्यां विशेषतः स्मर्यते । भविष्ये—वैशाखी कार्तिकी माघी तिथयोऽतीव पूजिताः । स्नानदानविहीनास्ता न नेयाः पांडुनंदन ॥ अथ ज्येष्ठशुक्लपौर्णमास्याममायां वा वटसावित्रीव्रतम् ॥ इयं च पूर्वविद्धा ग्राह्या । भूतविद्धा न कर्तव्या अमावास्या च पौर्णिमा । वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् १ इति ब्रह्मवैवर्तात् ॥ ज्येष्ठे मासि सिते पक्षे पूर्णिमायां तथा व्रतम् । चीर्णं व्रतं महाभक्त्या कथितं ते मयाऽनघे २-इति धर्मराज उवाच । दाक्षिणात्याश्चैवमाचरंति । पाश्चात्यादयस्तु अमावास्यायामाचरंति । तच्चोक्तं निर्णयामृते भविष्ये— अमायां च तथा ज्येष्ठे वटमूले महासती । त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ३ अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेंद्रिया । अयाचितं चतुर्दश्याममायां समुपोषणमिति ४ हेमाद्र्यादिभिस्तु भाद्रपदपौर्णिमास्यामिदमुक्तम् । ते तु तदानीं आचरंति, यदा त्वष्टादशघटिका चतुर्दशी तदा परैव ॥ पूर्वविद्धैव सावित्रीव्रते पंचदशी तिथिः । नाड्योष्टादश भूतस्य तत्र कुर्यात्परेहनीति माधवोक्तेः ॥ वस्तुतस्तु भूतविद्धानिषेध एव । भूतोऽष्टादशनाडीभिरिति वाक्यम् । अन्यथा सावित्रीव्रतेऽष्टादशनाडीवेधदोषकल्पनायां निषेधांतरकल्पनागौरवं स्यात् ॥ ज्येष्ठे मासि त्रयोदश्यां दंतधावनपूर्वकम् । दंतकाष्ठं समं शुभ्रं जातीयं चतुरंगुलम् ५ तस्यापराह्णसमये नद्यादौ विमले जले । तिलामलककल्केन केशान्संशोध्य यत्नतः ६ स्नात्वा चैव शुचिर्भूत्वा वटं

सिंचेद्वृदके । वृद्धिक्षये यथा रोमे ऋतुमत्यां तथैव च ७ कारयेद्विप्रहस्तेन सर्वं संपाद्यते शुभम् । इदं च त्रयोदशीमारभ्य पौर्णिमांतं
कर्तव्यम् ८ सधवा विधवा वापि सपुत्रा पुत्रवर्जिता । भर्तुरायुर्विवृद्ध्यर्थं कुर्याद्व्रतमिदं शुभम् ९ ज्येष्ठे मासे तु संप्राप्ते पौर्णिमास्यां पति
व्रता । स्नात्वा चैव शुचिर्भूत्वा नियमं कारयेत्ततः १० ॥अथ व्रतविधिः ॥ वटसमीपे गत्वा तत्र संस्कारयुक्तवटपूजा उक्ताआचम्य मास-
पक्षाद्युल्लिख्य मम भर्तुः पुत्राणां चायुरारोग्यप्राप्तये जन्मजन्मनि अवैधव्यप्राप्तये च सावित्रीव्रतमहं करिष्य इति संकल्प्य । वटमूले स्थि
तो ब्रह्मा वटमध्ये जनार्दनः । वटाग्रे तु शिवो देवो सावित्रीवटसंश्रिता १ वट सिंचामि ते मूलं सलिलैरमृतोपमैः । सूत्रेण वेष्टये भक्त्या
गंधपुष्पाक्षतैः शुभे २ नमो वटाय सावित्र्यै भ्रामयेच्च प्रदक्षिणाम् । सावित्रीं च वटं सम्यगेभिर्मंत्रैः प्रपूजयेत् ३ एवं विधिं बहिः कृत्वा
सम्यग्वै गृहमागता । हरिद्राचंदनेनैव गृहमध्ये लिखेद्वटम् ४तत्रोपविश्य संकल्प पूजा कार्या प्रयत्नतः ५ तिथ्यादि संकीर्त्य मम जन्मजन्म
नि अवैधव्यप्राप्तये भर्तुः चिरायुरारोग्यसंपदादिकामनया सावित्रीव्रतमहं करिष्ये । नियममंत्रः । त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे त्वहम् ।
चंद्रायार्घ्यं प्रदत्त्वा च पूजयित्वा कृतां सतीम् ६ मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् । भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शु
भे ७इति नियममंत्रः॥अथ पूजा॥ ततः ॐमहीद्यौःपृथिवीति ऋचा भूमिं स्पृष्ट्वा ॐ ओषधयः सं० ॐ आकलशेषु० कलशं निधाय पंचपल्ल
वसप्तमृत्तिकाहिरण्ययवान्कुंभे निक्षिप्य तदुपरि वंशपात्रं निधाय तस्योपरि सप्तधान्यानि पृथक्स्थाप्यानि तदुपरि वस्त्रं वस्त्रोपरि द्वात्रिंशत्
गुंजकपरिमितां वालुकाप्रतिमां ब्रह्मणासह संस्थाप्य पूजयेत् । पद्मपत्रासनस्थश्च ब्रह्मा कार्यश्चतुर्मुखः । सावित्री तस्य कर्तव्या वामोत्सं
गगता तथा ॥ आदित्यवर्णा धर्मज्ञा साक्षमाला करा तथा । ध्यानम् ॥ ब्रह्मणा सहितां देवीं सावित्रीं लोकमातरम् । सत्यव्रतं च

वित्रीं वटं चावाहयाम्यहम् । आवाहनम् । ब्राह्मणा सह सावित्रि सत्यवत्सहिते प्रिये । हेमासनं गृह्यतां तु धर्मराज सुरेश्वर । आसनम् ॥ गंगाजलं समानीतं पाद्यार्थं ब्रह्मणः प्रिये । भक्त्या दत्तं धर्मराज सावित्रि प्रतिगृह्यताम् । पाद्यम् ॥ भक्त्या समाहृतं तोयं फलपुष्पसमन्वितम् ॥ अर्घ्यं गृहाण सावित्रि मम सत्यव्रतप्रिये । अर्घ्यम् ॥ सुगंधि सहकर्पूरं सुरभि स्वादु शीतलम् । ब्रह्मणा सह सावित्रि कुरुष्वाचमनीयकम् । आचमनीयम् ॥ पयो दधि घृतं चैव शर्करा मधुसंयुतम् । पंचामृतेन स्नपनं प्रीयतां परमेश्वरि । पंचामृतस्नानम् ॥ मंदाकिन्या समानीतं हेमांभोरुहवासितम् । सावित्रि ब्रह्मराजेन स्नानार्थं प्रतिगृह्यताम् । स्नानम् ॥ सूक्ष्मतंतुमयं वस्त्रयुग्मं कार्पाससंभवम् । सावित्रि सत्यवक्तृभ्यां भक्त्यां दत्तं प्रगृह्यताम् । वस्त्रम् ॥ सावित्रि सत्यवक्ता ते धर्मराजसुरेश्वरि । सावित्रि ब्रह्मणा सार्द्धमुपवीतं प्रगृह्यताम् । उपवीतम् । भूषणानि च दिव्यानि मुक्ताहारयुतानि च । त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने । भूषणानि । कुंकुमागरुकर्पूरकस्तूरीरोचनायुतम् ॥ चंदनं ते मया दत्तं सावित्रि प्रतिगृह्यताम् । चंदनम् । अक्षताश्च सुरश्रेष्ठाः कुंकुमाक्ताः सुशोभानाः । मया निवेदिता भक्त्या गृहाण परमेश्वरि । अक्षतान् ॥ हरिद्रा कुंकुमं चैव सिंदूरं कज्जलान्वितम् । सौभाग्यद्रव्यसंयुक्तं सावित्रि प्रतिगृह्यताम् । सौभाग्यद्र० । माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो । मयाहृतानि पुष्पाणि पूजार्थंप्र० पुष्पाणि ॥ अथांगपूजा ॥ सावित्र्यैन०पादौपू० । वटप्रियायै० जंघेपू० । कमलपत्राक्ष्यै० कटीपू० । भूतधारिण्यै० उदरं पू० । गायत्र्यै० कंठं पू० । ब्राह्मणःप्रियायै० मुखं पू० । सौभाग्यदात्र्यै० शिरःपू० ॥ अथ ब्रह्मसत्यपूजा । धात्रेनमः पादौ पू० । विधात्रे न० जंघे पू० स्रष्ट्रे न० उरू पू० । प्रजापतये० मेंढ्रं पू० । परमेष्ठिने० कटी पू० । अग्निरूपाय० नाभिंपू० । पद्मनाभाय० हृदयं पू० । वेधसे न० बाहूपू० विधये० कंठं पू० । हिरण्यगर्भा-

सिंचेद्द्रुदकैः । वृद्धिक्षये यथा रोगे ऋतुमत्यां तथैव च ७ कारयेद्विप्रहस्तेन सर्वं संपाद्यते शुभम् । इदं च त्रयोदशीमारभ्य पौर्णिमान्तं कर्तव्यम् ८ सधवा विधवा वापि सपुत्रा पुत्रवर्जिता । भर्तुरायुर्विवृद्ध्यर्थं कुर्याद्व्रतमिदं शुभम् ९ ज्येष्ठे मासे तु संप्राप्ते पौर्णिमास्यां पतिव्रता । स्नात्वा चैव शुचिर्भूत्वा नियमं कारयेत्ततः १० ॥अथ व्रतविधिः॥ वटसमीपे गत्वा तत्र सत्कारयुक्तवटपूजा उक्ता।आचम्य मासपक्षाद्युल्लिख्य मम भर्तुः पुत्राणां चायुरारोग्यप्राप्तये जन्मजन्मनि अवैधव्यप्राप्तये च सावित्रीव्रतमहं करिष्ये इति संकल्प्य। वटमूले स्थितो ब्रह्मा वटमध्ये जनार्दनः । वटाग्रे तु शिवो देवो सावित्रीवटसंश्रिता १ वट सिंचामि ते मूलं सलिलैरमृतोपमैः । सूत्रेण वेष्टये भक्त्या गंधपुष्पाक्षतैः शुभैः २ नमो वटाय सावित्र्यै भ्रामयेच्च प्रदक्षिणाम् । सावित्रीं च वटं सम्यगेभिर्मंत्रैः प्रपूजयेत् ३ एवं विधिं बहिः कृत्वा सम्यग्वै गृहमागता । हरिद्राचंदनेनैव गृहमध्ये लिखेद्वटम् ४ तत्रोपविश्य संकल्प पूजा कार्या प्रयत्नतः ५ तिथ्यादि संकीर्त्य मम जन्मजन्मनि अवैधव्यप्राप्तये भर्तुः चिरायुरारोग्यसंपदादिकामनया सावित्रीव्रतमहं करिष्ये । नियममंत्रः । त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे त्वहम् । चंद्रायार्घ्यं प्रदत्त्वा च पूजयित्वा कृतां सतीम् ६ मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् । भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुमे ७ इति नियममंत्रः॥अथ पूजा॥ ततः ॐ महीद्यौः पृथिवीति भूमिं स्पृष्ट्वा ॐ ओषधयः सं० ॐ आकलशेषु० कलशं निधाय पंचपल्लवसप्तमृत्तिकाहिरण्ययवान्कुंभे निक्षिप्य तदुपरि वंशपात्रं निधाय तस्योपरि सप्तधान्यानि पृथक्स्थाप्यानि तदुपरि वस्त्रं वस्त्रोपरि द्वात्रिंशदंगुलपरिमितां सावित्रीप्रतिमां ब्रह्मणासह संस्थाप्य पूजयेत् । पद्मपत्रासनस्थश्च ब्रह्मा कार्यश्चतुर्मुखः । सावित्री तस्य कर्तव्या वामोत्संगगता तथा ॥ आदित्यवर्णां धर्मज्ञां साक्षमालां करां तथा । ध्यानम् ॥ ब्रह्मणा सहितां देवीं सावित्रीं लोकमातरम् । सत्यव्रतं च सा

वित्रीं वटं चावाहयाम्यहम् । आवाहनम् । ब्राह्मणा सह सावित्रि सत्यवत्सहिते प्रिये । हेमासनं गृह्यतां तु धर्मराज सुरेश्वर । आसनम् ॥ गंगाजलं समानीतं पाद्यार्थं ब्रह्मणः प्रिये । भक्त्या दत्तं धर्मराज सावित्रि प्रतिगृह्यताम् । पाद्यम् ॥ भक्त्या समाहृतं तोयं फलपुष्पसमन्वितम् ॥ अर्घ्यं गृहाण सावित्रि मम सत्यव्रतप्रिये । अर्घ्यम् ॥ सुगंधि सहकर्पूरं सुरभि स्वादु शीतलम् । ब्रह्मणा सह सावित्रि कुरुष्वाचमनीयकम् । आचमनीयम् ॥ पयो दधि घृतं चैव शर्करा मधुसंयुतम् । पंचामृतेन स्नपनं प्रीयतां परमेश्वरि । पंचामृतस्नानम् ॥ मंदाकिन्या समानीतं हेमांभोरुहवासितम् । सावित्रि ब्रह्मराजेन स्नानार्थं प्रतिगृह्यताम् । स्नानम् ॥ सूक्ष्मतंतुमयं वस्त्रयुग्मं कार्पाससंभवम् । सावित्रि सत्यवत्कृभ्यां भक्त्यां दत्तं प्रगृह्यताम् । वस्त्रम् ॥ सावित्रि सत्यवक्ता ते धर्मराजसुरेश्वरि । सावित्रि ब्रह्मणा सार्द्धमुपवीतं प्रगृह्यताम् । उपवीतम् । भूषणानि च दिव्यानि मुक्ताहारयुतानि च । त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने । भूषणानि । कुंकुमागरुकर्पूरकस्तूरीरोचनायुतम् ॥ चंदनं ते मया दत्तं सावित्रि प्रतिगृह्यताम् । चंदनम् । अक्षताश्च सुरश्रेष्ठाः कुंकुमाक्ताः सुशोभानाः । मया निवेदिता भक्त्या गृहाण परमेश्वरि । अक्षतान् ॥ हरिद्रा कुंकुमं चैव सिंदूरं कज्जलान्वितम् । सौभाग्यद्रव्यसंयुक्तं सावित्रि प्रतिगृह्यताम् । सौभाग्यद्र० । माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो । मयाहृतानि पुष्पाणि पूजार्थंप्र० पुष्पाणि ॥ अथांगपूजा ॥ सावित्र्यैन०पादौपू०।वटप्रियायै० जंघेपू० । कमलपत्राक्ष्यै० कटीपू० । भूतधारिण्यै० उदरं पू० । गायत्र्यै० कंठं पू० । ब्राह्मणःप्रियायै० मुखं पू० । सौभाग्यदात्र्यै० शिरःपू० ॥ अथ ब्रह्मसत्यपूजा । धात्रेनमः पादौ पू० । विधात्रे न० जंघे पू० स्रष्ट्रे न० उरू पू० । प्रजापतये० मेंढ्रं पू० । परमेष्ठिने० कटी पू० । अग्निरूपाय० नाभिंपू० । पद्मनाभाय० हृदयं पू० । वेधसे न० बाहूपू० विधये० कंठं पू० । हिरण्यगर्भा-

यः मुख पू०। ब्रह्मणेन० शिरःपू०। विष्णवेन० सर्वांगं पू०॥ देवद्रुमरसोद्भूतः कालागरुसमन्वितः। आघ्रेयतामयं धूपो सावित्रि प्रतिगृह्यताम्। धूपम्॥ चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम्। आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि। दीपम्॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्। मया निवेदितं भक्त्या नैवेद्यं प्रतिगृह्यताम्। नैवेद्यम्। मध्ये पानीयम्। उत्तरापोशनम्। मुखप्रक्षालनम्। इदं फलमिति फलम्। पूगीफलमिति तांबूलम्। हिरण्यगर्भेति दक्षिणाम्। नमो ब्रह्मण्यदेवि त्वं सततं ब्रह्मणः प्रिये। पूजितासि द्विजैः सर्वैः स्त्रीभिर्मुनिगणैस्तथा। त्रिसंध्यं देवि भूतानां वंदनीया सुशोभने। मया दत्ता च पूजेयं त्वं गृहाण नमोऽस्तु ते। पुष्पाञ्जलिम्॥ ततोऽर्घ्यत्रयं दद्यात्। ॐकारपूर्वके देवि सर्वदुःखनिवारिणि। वेदमातर्नमस्तुभ्यं सौभाग्यं च प्रयच्छ मे। इदमर्घ्यम्॥ पतिव्रते महाभागे ब्रह्माणि च शुचिस्मिते। दृढव्रते दृढमते भर्तुश्च प्रियवादिनी। अर्घ्यम्॥ अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते। पुत्रान्पौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोऽस्तु ते। अर्घ्यम्॥ सावित्रि ब्रह्मगायत्री सर्वदा प्रियभाषिणी। तेन सत्येन मां पाहि दुःखसंसारसागरात्। त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चन्द्रमण्डले। त्वमेव च जगन्माता त्वमुद्धर वरानने। यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि। भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे। अवियोगो यथा देव सावित्र्या सहितस्य ते। अवियोगस्तथाऽस्माकं भूयाज्जन्मनि जन्मनि। इति प्रार्थना॥ सुवासिन्यस्ततः पूज्या दिवसे दिवसे गते। सिंदूरं कुङ्कुमं चैव तांबूलं च पवित्रकम्। तथा दद्याच्च शूर्पाणि भक्ष्यभोज्यादिकं सदा। माहात्म्यं चैव सावित्र्या श्रोतव्यं मुनिसत्तम। पुराणश्रवणं कार्यं सतीनां चरितं शुभम्॥ इति पूजाविधिः॥ ततः व्रतपूजासांगतासिद्ध्यर्थं ब्राह्मणाय वायनप्रदानमहं करिष्ये। फलवस्त्रसमायुक्तं सौभाग्यद्रव्यसंयुतम्। वंशपात्रे विधायादौ ब्राह्मणाय

निवेदयेत् । उपायनमिदं द्रव्यं व्रतसंपूर्णहेतवे । वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम् । इति वायनम् ॥ इति वटसावित्रीपूजनं समाप्त-
म् ॥ ॥ अथ कथा ॥ सनत्कुमार उवाच ॥ कुलस्त्रीणां व्रतं देव महाभाग्यं तथैव च । अवैधव्यकरं स्त्रीणां पुत्रपौत्रप्रदायकम् १ ईश्वर
उवाच ॥ आसीन्मद्रेषु धर्मात्मा ज्ञानी परमधार्मिकः । नाम्ना चाश्वपतिर्वीरो वेदवेदांगपारगः २ अनपत्यो महाबाहुः सर्वैश्वर्यसमन्वितः ।
सपत्नीकस्तपस्तेपे समाराधयते नृपः ३ सावित्री च प्रसावित्रीं जपन्नास्ते महामनाः । जुहोति चैव सावित्रीं भक्त्या परमया युतः ४
ततस्तुष्टा तु सावित्री सा देवी द्विजसत्तम । सा विग्रहवती देवी तस्य दर्शनमागता ५ भूर्भुवःस्वरवत्येषा साक्षसूत्रकमंडलुः । तां तु दृ-
ष्ट्वा जगद्वंद्यां सावित्रीं च नृपोत्तमः ६ प्रणिपत्य नृपो भक्त्या प्रहृष्टेनांतरात्मना । तं दृष्ट्वा पतितं भूमौ तुष्टा देवी जगाद ह ७ सावि-
त्र्युवाच ॥ तुष्टाऽहं तव राजेंद्र वरं वरय सुव्रत । एवमुक्तस्तया राजा प्रसन्नां तामुवाच ह ८ अनपत्यो ह्यहं देवि पुत्रमिच्छामि शोभने ।
नान्यं वृणोमि सावित्रि पुत्रमेव जगन्मये ९ अन्यदस्ति समग्रं मे क्षितौ यच्चापि दुर्लभम् । प्रसादात्तव देवेशि तत्सर्वं विद्यते गृहे १०
एवमुक्ता तु सा देवी प्रत्युवाच नराधिपम् ॥ सावित्र्युवाच ।पुत्रस्ते नास्ति राजेंद्र कन्यका ते भविष्यति ११ कुलद्वयं तु सा राजन्नुद्ध-
रिष्यति भामिनी । मन्नाम्ना राजशार्दूल तस्या नाम भविष्यति १२ इत्युक्त्वा तं मुनिश्रेष्ठ राजानं ब्रह्मणः प्रिया । अंतर्धानं गता देवी सं-
तुष्टोऽसौ महीपतिः १३ ततः कतिपयाहोभिस्तस्य राज्ञी महीभुजः । ससत्त्वा समजायेत पूर्णे काले सुखावहे १४ सावित्र्या तुष्टया
दत्ता सावित्र्या जपया तथा । सावित्री तेन वरदा तस्या नाम बभूव ह १५ राजते देवगर्भाभा कन्या कमललोचना । तां दृष्ट्वा हेमग-
र्भाभां राजा चिंतामुपेयिवान् १६ अयाच्यमानां च वरैरूपेणाप्रतिमा भुवि । तस्या रूपेण ते सर्वे सन्निरुद्धा महीभुजः १७ ततः स रा-

जा माद्रप उवाच कमलेक्षणाम् । पुत्रि प्रदानकालस्ते न च याचति केचन १८ स्वयं वरय वृथ ते पतिं गुणसमन्वितम् । मनःप्रवृद्धा
दकरणे शीलेनाभिजनेन च १९ इत्युक्त्वा तां च राजेंद्रो वृद्धामात्यैः सहैव ताम् । वस्त्रालंकारसहितां धनरत्नैः समन्विताम् २० विसृज्य
च क्षणं तत्र यावत्तिष्ठति भूमिपः । तावत्तत्र समागच्छन्नारदो भगवानृषिः २१ संपूज्य च ततो राजा अर्घ्यपाद्येन तं मुनिम् । आ
सने च सुखासीनः पूजितस्तेन भूभुजा २२ पूजयित्वा मुनिं राजा प्रोवाचेदं द्विजोत्तमम् । पावितोऽहं त्वया विप्र दर्शनेनाद्य नारद
२३ यावदेवं वदेद्राजा तावत्सा कमलेक्षणा । आश्रमादागता देवी वृद्धामात्यैः समन्विता २४ अभिवाद्य पितुः पादौ ववंदे सा मुनिं
ततः । नारदेन तु दृष्टा सा वृक्षा प्रोवाच भूमिपम् २५ कन्यां च देवगर्भाभां किमर्थं न प्रयच्छसि । वराय त्वं महाबाहो वरयोग्यां हि
सुंदरीम् २६ एवमुक्तस्तदा तेन मुनिना नृपसत्तमः । उवाच तं मुनिं वाक्यमनेनार्थेन प्रेषिता २७ आगतेयं विशालाक्षी मया संप्रेषिता
सती । अनया च वृतो भर्ता पृच्छ त्वं मुनिसत्तम २८ सा पृष्टा तेन मुनिना तस्मै चाचष्ट भामिनी ॥ सावित्र्युवाच । द्युमत्सेनस्य रा
ज्यं वै वैरिणा रुक्मिणा हृतम् २९ देवादयं स्त्रीसहितः सत्यवांस्तत्सुतो वने । आश्रमे सत्यवान्नाम द्युमत्सेनसुतो मुने ३० भर्तेति म
नसा विप्र वृतोऽसौ राजनंदनः ॥ नारद उवाच । कष्टं कृतं महाराज दुहित्रा तव सुव्रत ३१ अजानत्या वृतो भर्ता गुणवानिति विश्रु-
त । सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ३२ स्वयं सत्यं प्रभाषेत सत्यवानिति तेन सः । तथा चाश्वाः प्रियास्तस्य अश्वैः क्रीड-
ति मृन्मयैः ३३ चित्रे ऽपि विलिखत्यश्वांश्चित्राश्वस्तेन चोच्यते । रूपवान् गुणवांश्चैव सर्वशास्त्रविशारदः ३४ न तस्य सदृशो लोके
विद्यते चेह मानवः । सर्वैर्गुणैश्च संपन्नो रत्नैरिव महार्णवः ३५ एको दोषो महानस्य गुणानावृत्य तिष्ठति । संवत्सरेण क्षीणायुर्देहत्यागं

करिष्यति ३६ अश्वपतिरुवाच । अन्यं वरय भद्रं ते वरं सावित्रि गम्यताम् । विवाहस्य तु कालोऽयं वर्तते शुभलोचने ३७ सावित्र्यु-
वाच । नान्यमिच्छाम्यहं तात मनसाऽपि वरं प्रभो । यो मया च वृतो भर्ता स मे, नान्यो भविष्यति ३८ विचिंत्य मनसा पूर्वं वाचा
पश्चात्समुच्चरेत् । क्रियते च ततः पश्चाच्छुभं वा यदि वाशुभम् ३९ तस्मात्पुमांसं मनसा कथं चान्यं वृणोम्यहम् । सकृज्जल्पंति राजा-
नः सकृज्जल्पंति पंडिताः ४० सकृत्कन्याः प्रदीयंते त्रीण्येतानि सकृत्सकृत् । पतिं मत्वा न मे बुद्धिर्विचलेच्च कथंचन ४१ सगुणो
निर्गुणो वापि मूर्खः पंडित एव च । दीर्घायुरथ चाल्पायुः स वै भर्ता मम प्रभो ४२ नान्यं वृणोमि भर्तारं यदि वा स्याच्छचीपतिः ।
इति मत्वा तया तात यत्कर्तव्यं सुखेन च ४३ नारद उवाच । स्थिरा बुद्धिश्च राजेंद्र सावित्र्याः सत्यवान्प्रति । त्वरयस्व विवाहाय भर्त्रा
सह कुरु त्विमाम् ४४ ईश्वर उवाच । निश्चितां तु मुनिर्ज्ञात्वा स्थिरां बुद्धिं च निश्चलाम् । सावित्र्या च महाराज्ञा प्रतस्थेऽसौ वनं प्रति ४५
गृहीत्वा तु धनं राजा द्युमत्सेनस्य सन्निधौ । स्वल्पानुगो महाराजो वृद्धामात्यसमन्वितः ४६ नारदस्तु ततो खे वै तत्रैवांतरधीयत । स ग-
त्वा राजशार्दूलो द्युमत्सेनेन संगतः ४७ वृद्धश्चांधश्च राजाऽसौ वृक्षमूलमुपाश्रितः । सावित्र्यश्वपती राजा पादौ जग्राह वीर्यवान् ४८
स्वनाम च समुच्चार्य तस्थौ तस्य समीपतः । उवाच राजा तं भूपं किमागमनकारणम् ४९ पूजयित्वाऽर्घ्यदानेन वन्यमूलफलैश्च सः ।
ततः पप्रच्छ कुशलं स राजा मुनिसत्तम ५० अश्वपतिरुवाच । कुशलं दर्शनेनाद्य तव राजन्ममाद्य वै । दुहिता मम सावित्री तव
पुत्रमभीप्सति ५१ भर्तारं राजशार्दूलप्राप्नोत्वियमनिंदिता । ममेदं कांक्षितं पूर्वं भर्तारमनया विभो ५२ आवयोश्चैव संबंधो भवत्वद्य म-
मेप्सितः ॥ द्युमत्सेन उवाच । वृद्धश्चांधश्च राजेंद्र फलमूलाशनो नृप ५३ राज्याच्च्युतस्य मे पुत्रो वन्येनाद्य च जीवति । सा कथं सहते दुःखं

दुःखिता तव कानने ५४ अनभिज्ञा च दुःखानामित्याह नाभिकांक्षये ॥ अश्वपतिरुवाच । अनया च वृतो भर्ता जानंस्या राजसत्तम ५५ अनेन सह वासस्ते तव पुत्रेण मानद । स्वर्गतुल्यो महाराज भविष्यसि न संशयः ५६ एवमुक्तस्तदा तेन राजा राजर्षिसत्तमः । तथेति स प्रतिज्ञाय चकारोद्वाहमुत्तमम् ५७ कृत्वा विवाहं, राजेंद्र संपूज्य विविधैर्धनैः । अभिवाद्य द्युमत्सेनं जगाम नगर प्रति ५८ सावित्री तु पतिं लब्ध्वा इंद्रं प्राप्य शची यथा । सत्यवानपि तद्भार्यां तया पत्न्याऽभिनंदितः ५९ क्रीडते तद्वनोद्देशे पौलोम्या मघवा इव । नारदस्य च तद्वाक्यं हृदये तु मनस्विनी ६० वहंती नियमं चक्रे व्रतस्यास्य च भामिनी । गणयंती दिनान्येव न लेभे हर्षमुत्तमम् ६१ ज्ञात्वा तद्दिवसं विप्र भर्तुर्मरणकारणम् । व्रतं त्रिरात्रमुद्दिश्य दिवा रात्रौ स्थिराऽभवत् ६२ ततस्त्रिरात्रं निर्वर्त्य संतर्प्य पितृदेवताः । अस्यांते नियमं कृत्वा त्रिदिनस्य मनस्विनी ६३ अस्मिन् दिने च गंतव्यमिति सत्यवता मुने । कुठार परिगृह्याम पिटकं चैव दारुकम् ६४ प्रस्थितं च वनायैव सावित्री वाक्यमब्रवीत् । न गंतव्य वन त्वद्य मम वाक्येन मानद ६५ मयाऽपि गम्यते साधो त्वया सह वनं व्रज । संवत्सरं भवेत्पूर्णमाश्रमे ऽस्मिन्मम प्रभो ६६ तद्वनं द्रष्टुमिच्छामि प्रसादं कुरु मे प्रभो । सत्यवानुवाच ॥ नाहं स्वतंत्रः सुश्रोणि पृच्छस्व पितरौ मम ६७ ताभ्यां प्रस्थापिता गच्छ मया सह शुचिस्मिते । एवमुक्ता तदा तेन भर्त्रा सा कमलेक्षणा ६८ श्वश्रूश्वशुरयोः पादावभिवाद्येदमब्रवीत् । वनं द्रष्टुं गमिष्यामि आज्ञा मह्य प्रदीयताम् ६९ भर्त्रा सह वनं गंतुमेतत्त्वरयते मनः । तस्यास्तद्वचनं श्रुत्वा द्युमत्सेनो ऽब्रवीदिदम् ७० व्रतं कृतं त्वया भद्रे पारणं कुरु सुव्रते । पारणांते ततो भीरु वनं गंतुं त्वमर्हसि ७१ सावित्र्युवाच । नियमश्च कृतोऽस्माभी रात्रौ चंद्रोदये सति । जाते मया प्रकर्तव्यं भोजनं तात मे शृणु ७२ वनदर्शनकामोऽस्ति भर्त्रा सह ममाद्य वै । न मे तत्र

भवेद्वनिर्भर्त्रा सह नराधिप ७३ इत्युक्तस्तु तया राजा द्युमत्सेनो महीपतिः । यत्ते ऽभिलषितं पुत्रि तत्कुरुष्व सुमध्यमे ७४ नमस्कृत्वा तु सावित्री श्वश्रूश्वशुरयोरपि । सहिता राजशार्दूल तेन सत्यव्रता विभो ७५ विलोकयंती भर्तारं प्राप्तकालं मनस्विनी । वनं च फलितं दृष्ट्वा पुष्पितद्रुमसंकुलम् ७६ द्रुमाणां चैव नामानि मृगाणां चैव भामिनी । पश्यंती मृगयूथानि हृदयेन प्रवेपती ७७ तत्र गत्वा सत्यवान्वै फलान्यादाय सत्वरम् । काष्ठानि च समादाय बबंध भारकं तदा ७८ काष्ठभारं क्षणात्कृत्वा वटशाखावलंबनम् । वटवृक्षस्य(मूले)सा साध्वी चोपविष्टा महासती ७९ काष्ठं पाटयतस्तस्य जाता शिरसि वेदना । ग्लानिश्च महती जाता गात्राणां वेपथुस्तदा ८० आगत्य वृक्षसामीप्यं सावित्रीमिदमब्रवीत् । मम गात्रे ऽतिकंपश्च जाता शिरसि वेदना ८१ कंटकैर्भिद्यते भद्रे शिरो मे शूलसंमितैः । उत्संगे तव सुश्रोणि स्वप्तुमिच्छामि सुव्रते ८२ अभिज्ञा तद्विशालाक्षी तस्य मृत्योर्मनस्विनी । प्राप्तकालं मन्यमाना तस्य तत्रैव भामिनी ८३ सत्यवानपि सुप्तस्तु कृत्वोत्संगे शिरस्तदा । तावत्तत्र समागच्छत्पुरुषः कृष्णपिंगलः ८४ जाज्वल्यमानो वपुषा ददर्शाथ मनस्विनी । उवाच वाक्यं वाक्यज्ञा कस्त्वं लोकभयंकरः ८५ नाहं धर्षयितुं शक्या पुरुषेणापि केनचित् । इत्युक्तः प्रत्युवाचेदं यमो लोकभयंकरः ८६ यम उवाच । क्षीणायुस्तु वरारोहे भर्ता तव मनस्विनी । नेष्याम्येनमहं बध्वा ह्येतन्मे च चिकीर्षितम् ८७ इत्युक्त्वा पितृराजस्तां भगवान् संचिकीर्षितम् । यथावत्सर्वमाख्यातु सत्क्रियार्थं प्रचक्रमे ८८ अयं हि धर्मसंयुक्तो रूपवान्गुणसागरः । नार्हो मत्पुरुषैर्नेतुमतोहं स्वयमागतः ८९ ततः सत्यवतो कायात्पाशबद्धं च सत्वरम् । अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ९० ततः समुद्धृतप्राणं गतश्वासं हतप्रभम् । निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ९१ यमस्तु तं तथा बध्वा प्रययौ दक्षिणामुखः ९२ सावित्री चापि दुःखार्ता यममेवा-

न्वगच्छत । नियमव्रतसंपन्ना महाभागा पतिव्रता ९३ यम उवाच । निवर्त गच्छ सावित्री कुरुष्वास्यौर्ध्वदेहिकम् । कृतं भर्तुस्त्वया
ऽनृण्यं यावद्‌गम्यगतं त्वया ९४ सावित्र्युवाच । यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति । मयाऽपि तत्र गन्तव्यमेष धर्मः सनातनः ९५
तपसा गुरुभक्त्या च भर्तृस्नेहाद्व्रतेन च । तव चैव प्रसादेन न मेऽप्रतिहता गतिः ९६ प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः । मित्रतां पु
रस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ९७ नानात्मवन्तो हि वने चरन्ति धर्मं च सत्यं च परिश्रमं च । विज्ञानतो धर्ममुदाहरन्ति तस्मात्सतो
धर्ममाहुः प्रधानम् ९८ यम उवाच । निवर्त तुष्टोस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतुयुक्तया । वरं वृणीष्वेह विनाऽस्य जीवितं ददा
मि ते सर्वमनिन्दिते वरम् ९९ सावित्र्युवाच । च्युतः स्वराज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे । स लब्धचक्षुर्बलवा-
न्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसन्निभः १०० यम उवाच । ददामि ते सर्वमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा । तवा-
ध्वनो ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत् १ सावित्र्युवाच । कुतः श्रमो भर्तृसमीपतोऽद्य मे यतो हि भ
र्ता मम सा गतिर्ध्रुवा । यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे २ सतां सकृत्संगतमीप्सितं परैस्ततः प
रं मित्रमिति प्रचक्षते । न चाफलं सत्पुरुषेण संगतं ततः सतां संनिवसेत्समागमे ३ यम उवाच । मनोऽनुकूलं बुधबुद्धिवर्द्धनं
त्वया यदुक्तं वचनं हिताश्रयम् । विना पुनः सत्यवतो हि जीवितं वरं द्वितीयं वरयस्व भामिनि ४ सावित्र्युवाच । हृतं पुरा मे श्वशुर
स्य धीमतः स्वमेव राज्यं स लभेत पार्थिवः । न च स्वधर्मं प्रजहीत मे गुरुर्द्वितीयमेवं वरयामि ते वरम् ५ यम उवाच । स्वमेव राज्यं प्र

१ मम भर्तृस्पर्शं ।

तिपत्स्यते चिरान्न च स्वधर्मात्परिहास्यते नृपः । कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् ६ सावित्र्युवाच । प्रजास्त्वयैता नियमेन संयता निमम्य चैता नयसे न काम्यया । अतो यमत्वं तव देव विश्रुतं निबोधयेमां गिरमीरितां मया ७ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च दानं च सतां धर्मः सनातनः ८ एवं प्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः । संतः स्वे वाऽप्यमित्रेषु दयां प्राप्तेषु कुर्वते ९ यम उवाच । पिपासितस्येव यथा भवेत्पयस्तथा त्वया वाक्यमिदं समीरितम् । विना पुनः सत्यवतोऽस्य जीवितं वरं वृणिष्वेह शुभे यदिच्छसि ११० सावित्र्युवाच । ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् । कुलस्य संतानकरं च तद्भवेत्तृतीयमेवं वरयामि ते वरम् ११ यम उवाच । कुलस्य संतानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे । कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता १२ सावित्र्युवाच । न दूरमेतन्मम भर्तृसन्निधौ मनो हि मे दूरतरं प्रधावति । अथ व्रजन्नेव गिरा समुन्नतं मयोच्यमानं शृणु धर्म मे वचः १३ विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यते बुधैः । समेन धर्मेण च रंजिताः प्रजास्ततस्तवेहेश्वर धर्मराजता १४ आत्मन्यपि न विश्वासस्तावद्भवति सत्सु यः । तस्मात्सत्सु विशेषेण सर्वप्रणयमृच्छति १५ सौहृदात्प्रणयाच्चापि विश्वासो नाम जायते । तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः १६ यम उवाच । उदाहृतं ते वचनं यदंगने शुभं न तादृग्त्वदृते मया श्रुतम् । अनेन तुष्टोस्मि विना ऽस्य जीवितं वरं चतुर्थं वरयस्व गच्छ च १७ सावित्र्युवाच । ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत्कुलोद्भवम् । शतं सुतानां बलिनां महात्मनामिमं चतुर्थं वरयामि ते वरम् १८ यम उवाच । शतं सुतानां बलवीर्यशालिनां भविष्यति प्रीतिकरं तवाबले । परिश्रमस्ते न भवेन्नृपात्मजे निवर्त दूरं हि पथस्त्वमागता १९ सावित्र्युवाच । सतां हि

या शाश्वतधर्मवृत्तिः संतो न सीदंति न च व्यथंति ते । सतां सद्भिर्नाफलः संप्रयाति सद्भ्यो भयं नानुवर्तति सतः १२० संतो हि सत्येन
नयति सूर्यं सतो भूमिं तपसा धारयंति । संतो गतिर्भूतभव्यस्य राजन्सतां मध्ये नावसीदंति सतः २१ आर्यजुष्टमिदं वृत्तमिति विज्ञाय
शाश्वतम् । सतः परार्थं कुर्वाणा नावेक्षंते प्रतिक्रियाम् २२ न च प्रसादः सत्पुरुषेषु मोघो न च व्यर्थो नश्यति नाभिमानः । यस्मादेत
न्नियतं सत्सु नित्यं तस्मात्संतो रक्षितारो भवंति २३ यम उवाच । यथायथा भाषसि धर्मसहितं मनोनुकूलं सुपदं महार्थवत् । तथा तथा मे
त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते २४ सावित्र्युवाच । न ते ऽपवर्गः सुकृताद्विना कृतस्तथा ऽन्यथाऽन्येषु वरेषु मानद । वरं
वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं विना पतिम् १२५ न कामये भर्तृविनाकृतं सुखं न कामये भर्तृविना कृतं दिवम् । न कामये
भर्तृविनागतां श्रियं न भर्तृहीना व्यवसामि जीवितुम् २६ वरोपि वैवस्वत पौरसात्मनस्त्वे च दत्तो भवता कृपालुना । वरं वृणे जीवतु सत्यवानयं
तवैव सत्यं वचनं भविष्यति २७ तथेत्युक्त्वा तु तान्पाशान्मुक्त्वा वैवस्वतो यमः । धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् २८ एष
भद्रे मया मुक्तो भर्ता ते कुलनंदिनि । आरोग्यं वयसि प्राप्य सिद्धार्थश्च भविष्यति २९ चतुर्वर्षशतं चायुस्त्वया सार्द्धमुपेष्यति । सा गता
वटसामीप्यं कृत्वोत्संगे शिरस्ततः १३० प्रबुद्धस्तु ततो ब्रह्मन् सत्यवानिदमब्रवीत् । मया स्वप्नो वरारोहे दृष्टो ज्ञेयं च भामिनि ३१ त
त्सर्वं कथितं तस्या यद्वृत्तं सर्वमेव तत् । तथा च कथितः सर्वः संवादश्च यमेन हि ३२ अस्तंगते ततः सूर्ये द्युमत्सेनो महीपतिः ।
पुत्रस्यागमने कांक्षी इतश्चेतश्च धावति ३३ आश्रमादाश्रमं गच्छन्पुत्रदर्शनकांक्षया । आवयोर्वर्धयोर्यष्टिः क्व गतोसि विनाथयोः ३४ एवं
स विविधं क्रोशन्सपत्नीको महीपतिः । चकार दुःखसंतप्तः पुत्रपुत्रेति चासकृत् ३५ अकस्मादेव राजेंद्रो ह्यचक्षुर्मदीश्वरः । तद्दृष्ट्वा परमा

श्रर्थं चेक्षुप्राप्तिं द्विजोत्तमाः ३६ सांत्वपूर्वं तदा वाक्यमूचुस्ते तापसा भृशम् । चक्षुःप्राप्त्या महाराज सूचितं ते महीपते ३७ पुत्रेण च समं योगं प्राप्यसे नृपसत्तम ॥ ईश्वर उवाच । यावदेवं वदंत्येते तापसा द्विजसत्तम ३८ सावित्रीसहितः प्राप्तः सत्यवान् द्विजसत्तम । नमस्कृत्य द्विजान्सर्वान्मातरं पितरं तथा ३९ सावित्री च ततो ब्रह्मन्ववंदे चरणाविति । श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्री कमलेक्षणा १४० मुनय ऊचुः । वरं सावित्रि जानासि कारणं वरवर्णिनि । वृद्धयोश्चक्षुषः प्राप्तेः श्वश्रूश्वशुरयोः शुभे ४१ सावित्र्युवाच । न जानामि मुनिश्रेष्ठाश्चक्षुषः प्राप्तिकारणम् । चिरं सुप्तस्तु मे भर्ता तेन कालव्यतिक्रमः ४२ सत्यवानुवाच । अस्याः प्रभावात्संजातं, दृश्यते कारणं न च । तत्सर्वं विद्यते विप्राः सावित्र्यास्तपसः फलम् ॥ व्रतस्यैव तु माहात्म्यं दृष्टमेतन्मयाऽधुना ४३ ईश्वर उवाच । एवं तु वदतस्तस्य तदा सत्यवतः प्रभो । पौराः समागतास्तस्य आचरन्नृपतेर्हितम् ४४ येन राज्यं बलाद्राजन् हृतं मंत्रेण मंत्रिणा । अमात्येन हतः सोपि इति पौरा समागताः ४५ पौरा ऊचुः । उत्तिष्ठ राजशार्दूल स्वं राज्यं पालय प्रभो । अभिषिंचस्व राजेंद्र पुरे मंत्रिपुरोहितैः ४६ ईश्वर उवाच । स गत्वा राजशार्दूलः स्वपुरं जनसंवृतः । पितृपैतामहं राज्यं संप्राप्तं च महात्मना ४७ सावित्री सत्यवांश्चैव परां मुदमवापतुः ४८ जनयामास पुत्राणां शतं वै बाहुशालिनाम् । व्रतस्यैव तु माहात्म्यात्तस्याः पितुरजायत ४९ पुत्राणां च शतं ब्रह्मन्प्रसन्ना च यमात्तथा । एतत्ते कथितं सर्वं व्रतमाहात्म्यमुत्तमम् ५० क्षीणायुर्जीवितो भर्ता व्रतस्यास्य प्रभावतः । कर्तव्यं सर्वनारीणामवैधव्यफलप्रदम् ५१ सनत्कुमार उवाच । विधानं ब्रूहि देवेश व्रतस्यास्य च त्र्यंबक । क्रियते विधिना केन स्त्रीभिस्त्रिपुरसूदन ५२ ईश्वर उवाच । वर्षैकं नियमं कृत्वा एकभक्तेन मानद । नक्ताहारेण वा विप्र भुंक्ते प्राप्य द्विजर्षभ ५३ त्रिदिनं लं-

र्चयित्वा च चतुर्थे दिवसे शुभे । चंद्रायार्घ्यं प्रदद्याच्च पूजयित्वा सुवासिनीम् ५४ सावित्रीं च प्रसावित्रीं गंधपुष्पैश्च पूजयेत् । मिथुनानि
यथाशक्त्या भोजयित्वा यथाविधम् ५५भोस्त्येऽह तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे। दिने प्रतिदिनं श्रेष्ठं कुर्यान्न्यग्रोधसेचनम् ५६ कृत्वा व
तमये पात्रे वालुकाप्रस्थमेव च । ससवान्यक्षतं पात्रं प्रस्थेकेन द्विजोत्तम ५७-प्रस्थं द्वात्रिंशत्तन्दुकपरिमितसंख्यम्।।कारयेन्मुनिशार्दूल वस्त्र
युग्मेन वेष्टयेत्।।तस्योपरि न्यसेद्देवीं सावित्रीं ब्रह्मणा सह ५८सावित्री सत्यवांश्चैव कार्यो रौप्यमयौ शुभौ । पिटकं च कुठारं च कृत्वा रौप्यम
यौ शुभौ ५९ फलैः कालोद्भवैर्देवीं पूजयेद्ब्रह्मणः प्रियाम्। हरिद्रारजितेश्चैव कंठसूत्रैः समर्चयेत् १६० सतीनां कंठसूत्राणि त्रिदिनं प्रतिदापये
त् ।पक्कान्नानि च देयानि नित्यमेव द्विजोत्तमान् ६१ माहात्म्यं चैव सावित्र्याः श्रोतव्यं मुनिसत्तम । पुराणश्रवणं कार्यं सतीनां चरितं शुभम्
६२ पूजयेच्च तथा नित्यं मंत्रेणानेन सुव्रत । सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिया ६३ पूज्यसे हूयसे देवि द्विजैर्मुनिगणैः सदा ।
त्रिसंध्य देवि भूतानां वंदिता त्वं जगन्मये ६४ सावित्री त्वं प्रसावित्री द्विधाभूतासि शोभने । जगत्त्रयस्थिता देवि त्रिसंध्य च तथाऽन
घे ६५ श्रेष्ठे देवि त्रिलोके च त्रेवामी त्व मुनीश्वरि । व्यापितः सकलो लोक अतो मां पाहि सर्वदा ६६ रूपं देहि यशो देहि सौभा
ग्य देहि मे शुभे । पुत्रान्देहि धनं देहि सर्वदा जन्मजन्मसु ६७ यथा ते न वियोगोऽस्ति भर्त्रा सह सुरेश्वरि । तथा मम महाभागेऽ कुरु
त्वं जन्मजन्मनि ६८ एवं संपूजयेद्देवीं कमलासनसंस्थिताम् । एवं दिनत्रयं नीत्वा चतुर्थेहनि सत्तम ६९ मिथुनानि च संभोज्य षोड
शानि द्विजोत्तम । अर्चयित्वा तथाचार्यं सपत्नीकं सुसंमतम् १७० तस्मै संकल्पितं सर्वं हेमसावित्रिसंयुतम् । मंत्रेणानेन दातव्यं द्विज
मुख्याय सुव्रत ७१ सावित्री कल्पविदुषीं प्रणिपत्य तथा मुने । सावित्री जगतां माता सावित्री जगतः पिता ७२ मया दत्ता च सावि

त्री ब्राह्मण प्रतिगृह्यताम् । अवैधव्यं च मे नित्यं भूयाज्जन्मनि जन्मनि ७३ मृता च वसते लोके ब्राह्मणा पतिना सह । तत्रैव च चिरं कालं भुक्त्वा भोगाननुत्तमान् ७४ ॥ धर्मराजवरदानानंतरम् ॥ सावित्र्युवाच । यां मदीयव्रतं देव भक्त्या नारी करिष्यति । भर्त्रा सा सहिता साध्वी समस्तसुखभाग्भवेत् ७५ धर्मराज उवाच । गौरी प्रमुग्धा मुग्धा वा अपुत्रा पतिवर्जिता । सभर्तृका सपुत्रा वा कुर्याद्व्रतमिदं शुभम् ७६ ज्येष्ठे मासे तु संप्राप्ते पौर्णमास्यां पतिव्रता । स्नात्वा चैव शुचिर्भूत्वा वटं सिंच्य बहूदकैः ७७ सूत्रेण वेष्टयेद्भक्त्या गंधपुष्पाक्षतैः शुभैः । नमोवैवस्वतायेति भ्रामयंती प्रदक्षिणाम् ७८ रात्रौ कुर्वीत नक्तं च ह्यब्दमेकं समाहिता । तथैव वटवृक्षं च पक्षे पक्षे प्रपूजयेत् ७९ अनेनैव विधानेन कर्तव्यं व्रतमुत्तमम् । सर्वान्मनोरथान्प्राप्य ह्यंते रुद्रोपि जायते ८० ॥ इति श्रीस्कंदपुराणे वटसावित्रीव्रतकथा समाप्ता ॥ ॥ अथोद्यापनम् ॥ संप्राप्ते तु पुनर्ज्येष्ठे नक्तभुग्द्वादशी भवेत् । दंतधावनपूर्वं च स्नात्वा नियममाचरेत् ॥ त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे त्वहम् । चंद्रायार्घ्यं प्रदत्त्वा च पूजयित्वा तु तां सतीम् ॥ मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् । भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे ॥ इति नियममंत्रः ॥ कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च । सप्तधान्ययुतं पात्रं प्रस्थैकेन द्विजोत्तम ॥ वस्त्रद्वयोपरि स्थाप्य सावित्रीं ब्रह्मणा सह । हैमीं कृत्वा तयोर्मूर्तिं त्रिरात्रव्रतमाचरेत् ॥ न्यग्रोधस्य तले तिष्ठेद्यावच्चैव दिनत्रयम् । सौवर्णीं चैव सावित्रीं सत्येन सह कारयेत् ॥ रौप्यपर्यंकमारोप्य रथस्योपरि विन्यसेत् । पलादूर्ध्वं यथाशक्त्या रथं रौप्यमयं शुभम् । काष्ठभारं कुठारं च वटं चैव सुविस्तृतम् । धर्मराजं नारदं च तत्रैव परिकल्पयेत् ॥ वटमूले प्रकुर्वीत मंडलं

१इत आरभ्य वक्ष्यमाणं श्लोकषट्कमन्यत्र, रागांतर्गतमिति भाति, कथायां सावित्रीधर्मराजयोः संवादे ऽनुक्तत्वात् ।

गोमयेन हि । संस्थाप्य तत्र सावित्रीं चतुष्कोपरिशोभनाम् ॥ एवं च मिथुनं कृत्वा पूजयेद्गतमत्सरा । पंचामृतेन स्नपनं गंधपुष्पोदकेन च ॥ . चंदनागरुकर्पूरमाल्यवस्त्रविभूषणैः पीतपिष्टेन पद्मं च चंदनेनाथवा लिखेत् । देवीं संपूजयेत्तत्र मंत्रैरेभिर्विधानतः ॥ नमः सावित्र्यै पादौ तु प्रसावित्र्यै तु जानुनी । कटिं कमलपत्राक्ष्यै उदरं व्रतधारिण्यै ॥ गायत्र्यै च नमः कंठे शिरसि ब्रह्मणः प्रिये ॥ ब्रह्मसत्यव्रतोः— पादौ धात्रे नमः पूज्यावूरू ज्येष्ठाय वै नमः । परमेष्ठिने च वै मेढ्रमग्निरूपाय वै कटी ॥ वेधसे चोदरं पूज्य पद्मनाभाय वै हृदि। कंठं विधात्रे पूज्यं हि हेमगर्भाय वै मुखम् ॥ ब्रह्मणे वै शिरः पूज्य सर्वांग विष्णवे नमः ॥ अभ्यर्च्यैव क्रमेणैव शास्त्रोक्तविधिना शुभम् । ततो रजतपात्रेण अर्घ्यं दद्याद्द्वयोरपि ॥ अर्घ्यमंत्रः— ॐकारपूर्वकेदेविवीणापुस्तकधारिणी । देवमातर्नमस्तुभ्यमवैधव्यमपस्छमे । पतिव्रतेमहामामेवह्निजातेशुचिस्मिते । दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि । अवैधव्यंचसौभाग्यंदेहित्वममसुव्रते । पुत्रा पौत्रांश्चसस्यत्वगृहाणार्घ्यंनमोनमः ॥ ब्रह्मसत्यव्रतोरर्घ्यमंत्रः—त्वयासृष्टंजगत्सर्वंसदेवासुरमानुषम् । सत्यव्रतवरोदेवब्रह्मरूपनमोस्तुते ॥ यमस्यार्घ्यमंत्रः— त्वकर्मसाक्षीलोकानांशुभाशुभविवेककृत् । वैवस्वतगृहाणार्घ्यंधर्मराजनमोस्तुते । धर्मराजः पितृपतिः साक्षीभूतोऽसिजंतुउ । कालरूपगृहाणार्घ्यमवैधव्यंपदेहिमे ॥ गंधपुष्पैश्च नैवेद्यैः फलैः कर्पूरदीपकैः । रक्तवस्त्रैरलंकारैः पूजयेद्गतमत्सरा ॥ सावित्रीप्रार्थना—सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी । तेनसत्येनमांपाहिदुःखसंसारसागरात् ॥ त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले । त्वमेवचजगन्मातामामुद्धरवरानने ॥ सौभाग्यंकुलवृद्धिंचदेहित्वंममसुव्रते । यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि ॥ भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे ॥ सावित्रीसत्यव्रतोः प्रार्थना— अभियोगोयथादेवसावित्र्यासहितस्यते । अवियोगस्तथाऽस्माकंभूयाज्जन्मनिजन्मनि ॥

यमप्रार्थना । कर्मसाक्षिञ्जगत्पूज्यसर्ववंद्यप्रसीदमे । संवत्सरंव्रतंसर्वंपरिपूर्णंतदस्तुमे ॥ सावित्रिप्रार्थना—सावित्रीत्वंयथादेविचतुर्वर्षशतायुषम् । पतिंप्रासासिगुणिनंममदेवितथाकुरु ॥ सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिये । पूजितासिद्विजैःसर्वैःस्त्रीभिर्मुनिगणैस्तथा ॥ त्रिसंध्यंदेविभूतानांवंदनीयासिसुव्रते । मयादत्ताचपूजेयंत्वंगृहाणनमोस्तुते ॥ जागरं तत्र कुर्वीत गीतवादित्रमंगलैः । सुवासिन्यस्ततः पूज्या दिवसे दिवसे शुभाः ॥ सिंदूरं कुंकुमं चैव ताबूलं च सुपूगकम् । तथा दद्याच्च शूर्पाणि भक्ष्यं सौभाग्यमष्टकम् ॥ संतिष्ठेच्च दिवारात्रौ कामक्रोधविवर्जिता । दिनत्रयेपि कर्तव्यमेवमर्घ्यादिपूजनम् ॥ ततश्चतुर्थदिवसे यत्कार्यं तच्छृणुष्व मे । मिथुनानि चतुर्विंशत्षोडश द्वादशाष्ट वा ॥ पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनासनैः । अथवा गुरुमेकं वा व्रतस्य विधिकारकम् ॥ सर्वलक्षणसंपन्नं सर्वशास्त्रार्थपारगम् । वेदविद्याव्रतस्नातं शांतं तु विजितेंद्रियम् ॥ सपत्नीकं समभ्यर्च्य वस्त्रालंकारमंडलैः । शय्यां सोपस्करां दद्याद्गृहं चैवातिशोभनम् । अशक्तस्तु यथाशक्त्या स्तोकं स्तोकं च कल्पयेत् ॥ सावित्रित्वंयथादेवीचतुर्वर्षशतायुषा । सत्यवत्पतिनासार्द्धमयादत्तातथाकुरु ॥ मयादत्ताचसावित्रीब्राह्मणप्रतिगृह्यताम् । मयागृहीतासावित्रीत्वयादत्तासुशोभने । यावच्चंद्रश्चसूर्यश्चसहभर्तासुखीभव ॥ न्यग्रोधस्य समीपे तु गृहे वा स्थंडिलेपि वा । सावित्र्याश्चैव मंत्रेण घृतहोमं तु कारयेत् । पायसं जुहुयाद्भक्त्या घृतेन सह भामिनी ॥ व्याहृत्या चैव मंत्रेण तिलव्रीहियवांस्तथा । गुरुं च गुरुपत्नीं च ततो भक्त्या क्षमापयेत् ॥ धर्मराजो यमो धाता नीलःकालांतको व्ययः । वैवस्वतश्चित्रगुप्तो दध्नो मृत्युः क्षयो वटः ॥ मासि मासि तथा ह्येतैर्नामभिः सेचयेद्वटम् । न्यग्रोधेहं वसाम्येव तस्माद्यत्नेन सेचयेत् ॥ होमांते दक्षिणां दद्यादृत्विजश्च क्षमापयेत् । भुंजीत वासरांते

१ ( पत्रे ६ पृष्ठे २ पंक्तौ १२उक्तम् ) इक्षवस्तृणराजंचेत्येतत्सौभाग्याष्टक द्रष्टव्यम् ।

तु नके शांता तपस्विनी । अर्घ्यं दद्यादरुन्धत्यै हृष्टा चैव प्रणम्य च ॥ अरुंधतिनमस्तेऽस्तु वसिष्ठस्य प्रियेशुभे । अर्घ्यमेतन्मयादत्तं फलपुष्पसमन्वितम् । पुत्रान्देहि सुसदेहि शुद्धाणार्घ्यं नमोऽस्तुते ॥ स त्रिभिर्ब्राह्मणैः सार्द्धं भुंजीत विजितेंद्रिया । एवं करोति या नारी व्रतमेतदनुत्तमम् ॥ भ्रातरः पितरो पुत्राः श्वशुरो स्वजनास्तथा । चिरायुषस्तथा ऽरोगा भवति च न संशयः ॥ भर्त्रा च सहिता साध्वी ब्रह्मलोके महीयते ॥ इति श्रीस्कं० सावित्रीव्रतोद्यापनं संपूर्णम् ॥ ॥ अथाषाढपौर्णमास्यां गोपद्मव्रतम् । तत्र पूजा—चतुर्भुजं महाकायं जांबूनदसमप्रभम् । शंखचक्रगदापद्मरमागरुडशोभितम् ॥ सेवितं मुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः । (एवंविधं हरिं ध्यात्वा ततो यजनमारभेत्) ध्यानम् ॥ आवाहयामि देवेश भक्तानामभयप्रदम् । स्निग्धकोमलकेशं च मनसावाहयेद्धरिम् । ॐसहस्रशीर्षा० । आवाहनम् ॥ सुवर्णमणिभिर्दिव्ये रचिते देवनिर्मिते । दिव्यसिंहासने कृष्ण उपविश्य प्रसीद मे । ॐपुरुषएवेदं० । आसनम् ॥ पादोदकं सुरश्रेष्ठ सुवर्णकलशे स्थितम् । गंधपुष्पाक्षतैर्युक्तं पाद्यं मे प्रतिगृह्यताम् । ॐ एतावानस्य० पाद्यम् ॥ अष्टद्रव्यसमायुक्तं स्वर्णपात्रोदकं शुभम् । गोऽभयं कुरु भक्तानां गृहाणार्घ्यं जगत्पते । ॐत्रिपादूर्ध्वउ० । अर्घ्यम् ॥ कर्पूरेण समायुक्तमुशीरेण सुवासितम् । दत्तमाचमनीयार्थं नीरं स्वीक्रियतां विभो । ॐतस्माद्विराळ० । आचमनीयम् ॥ गंगागोदावरी चैव यमुना च सरस्वती । नर्मदा सिंधुकावेरी ताभ्यः स्नानार्थमाहृतम्[१] । ॐ यत्पुरुषेण० स्नानं ॥ वस्त्रयुग्मं समानीतं पट्टसूत्रेण निर्मितम् । सुवर्णखचितं दिव्यं गृहाण त्वं सुरेश्वर । ॐतयज्ञं० वस्त्रम् ॥ कार्पासतंतुभिर्युक्तं ब्रह्मणा निर्मितं पुरा । अनेकरत्नखचितमुपवीतं गृहाण भोः । ॐतस्माद्यज्ञात्सर्वहुतः स० । यज्ञोपवीतम् ॥ चंदनं मलयोद्भूतं कस्तूरीचारुचंदनम् । कर्पूरेण च संयुक्तं स्वीकुरुष्वानुलेपनम् । ॐतस्माद्य

१ एताभ्यः नदीभ्यः स्नानार्थं समाहृतं, तत्प्रतिगृहाणेत्यर्थः ।

ज्ञात्सर्वहुतऋ० । गंधम् ॥ शतपत्रैश्च कल्हारैश्चंपकैर्मल्लिकादिभिः । तुलसीयुक्तपुष्पाणि गृहाण पुरुषोत्तम ॐतस्मादश्वा० । पुष्पम् ॥ द-
शांगं गुग्गुलोद्भूतं सुगंधिं च मनोहरम् । कृष्णागरुसमायुक्तं धूपं देव गृहाण मे । ॐयत्पुरुषंव्यदधु० । धूपं ॥ साज्यं च वर्तिसंयुक्तं वन्हिना
योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह । ॐब्राह्मणोस्य० । दीपम् ॥ अन्नंचतुर्विधं० । ॐचंद्रमामन० । नैवेद्यम् ॥ आचमनीय-
म् । करोद्वर्तनम् । इदंफलं० । फलम् ॥ पुगीफलमिति तांबूलम् ॥ हिरण्यगर्भेति दक्षिणाम् ॥ यानिकानिच० । ॐनाभ्याआसी० । प्रदक्षि-
णाम् । नमोस्त्वनंतायस० । ॐसप्तास्यासन्० । नमस्का० । देवदेवजगन्नाथगोपालप्रतिपालक । गोपदैःकृतसंत्राणगृहाणकुसुमांजलिम् ॐय-
ज्ञेनयज्ञमिति पुष्पांजलिम् ॥ तद्वर्षोक्तंवायनं । परमान्नमिदं विप्र कांस्यपात्रेण संयुतम् ॥ त्वत्प्रसादादहं विप्र व्रतस्य फलमाप्नुयाम् ॥ मंत्रही-
नं क्रियाहीनमिति प्रार्थना ॥ इति गोपद्मपूजा ॥ अथ कथा ॥ सनत्कुमार उवाच । नाथैकं त्वां हि पृच्छामि चतुर्वर्गफलप्रदम् । सर्वरोगप्रश-
मनं विष्णुसारूप्यमुक्तिदम् १ नारीणामथवा पुंसां भुक्तिमुक्तिफलप्रदम् । ब्रूहि चेदस्ति देवर्षे कृपां कृत्वा ममोपरि २ नारद उवाच । भगव-
न्सर्वमाख्यास्ये यत्पृष्टं विदुषा त्वया । गोपद्मकं व्रतं ह्येतद्व्रतानां व्रतमुत्तमम् ३ कर्तुः सिद्धिकरं दिव्यं विख्यातं भुवनत्रये ॥ सनत्कुमार उ-
वाचच । भगवन्भूतभव्येश सर्वशास्त्रविशारद ४ तद्व्रतं ब्रूहि मे ब्रह्मन् कथमुद्यापनं भवेत् । पुरेदं केन वा चीर्णं देवर्षे कथय व्रतम् ५ नारद उवाच ॥
आषाढपौर्णमास्यां वा तथाऽष्टम्यां हरेर्दिने[1] । प्रारभेद्व्रतमेतच्च कार्तिकावधि तत्तिथौ ६ तिलामलककल्केन स्नानं नित्यं विधाय च । नदीतीरे
ऽथवा गोष्ठे शिवागारे हरेर्गृहे ७ वृंदावने वापि लिखेद्गोपद्मकपदं शुभम् । त्रयस्त्रिंशत्तु पद्मानि कुर्याद्भक्त्या दिनेदिने ८ तत्संख्यया प्रक-

१ एकादश्याम् ।

तैस्या अर्घ्यंप्रदक्षिणानतीः । बालकृष्णं समुद्दिश्य लक्ष्म्या सह जगद्गुरुम् ९ गंधाद्यैरुपचारैस्तु यथाशक्त्या प्रपूजयेत् । ब्राह्मणांस्तु
ततः पूज्य पश्चसन्यामभुक्तवेव् १० प्रथमाब्देऽप्य वटकैर्द्वितीयेऽपूपकैर्व्रती । तृतीये शालिपिष्टाभैश्चतुर्थे पूरिकादिभिः ११ पंचमे प
रमान्नैस्तु सम्यगेवं पूजयेद्व्रती । तत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ ऋषीणां पृच्छमानानां सूतेनोक्तं पुरातनम् १२ सूत उवाच ।
पुरा शक्रोऽमरावत्यां देवदानवकिंनरैः । सौरादित्यवसाद्यैर्गंधर्वैर्विद्याभिः सह १३ रमा नृत्यं समारेभे कौतुकेनेन विह्वला । एवं नृत्ये
क्रियमाणे त्रुटितं वाद्यमङ्गलम् १४ क्षणमात्रं विचार्याय धर्मराजस्तु उक्तवान् १५ यम उवाच । जन्ममध्ये व्रतं येश्च न कृतं प्राणिभिः
क्वचित् । तद्धर्मस्नायुभिः शक्र कर्तव्यं छादनं ढके १६ नारदेन श्रुतं तच्च जगाद यदुनंदनम् । स्वर्चयित्वा तु तं कृष्णो वचन चेदमब्रवी-
त् १७ कृष्ण उवाच । सर्वलोकज्ञ देवर्षे भुवनेषु चरन् सदा । आश्चर्यं वद देवर्षे यदस्ति शुभदायकम् १८ नारद उवाच । गत मया
ऽमरावत्यामाश्चर्यं धर्मसंसदि । तत्र सर्वे समायाता सुरा इंद्राश्चतुर्दश १९ रुद्रा एकादश तथा आदित्या द्वादशापि च । वसवोऽष्टौ तथा
नामा यक्षराक्षसपन्नगा २० रमया च समारब्धं नृत्यं शक्रस्य पश्यतः । त्रुटिते चर्मे वाद्यानामब्रुवंतस्य साधनम् २१ यमः प्राह तथा
भूतान् सुभद्रा व्रतास्ति भोः । तामानयध्वं तच्चर्म वाद्ययोग्य सदस्त्विति २२ तच्छ्रुत्वा तु मया भीत्या सर्वं त्वयि निवेदितम् ॥ सूत
उवाच । इति नारदवाक्यं तु श्रुत्वा कृष्णस्त्वरान्वितः २३ सुभद्राया गृहं गत्वा पूजितस्तामुवाच ह ॥ श्रीकृष्ण उवाच । किंचिद्व्रतं त्व-
या भद्रे कृतं वा नेति संशय २४ सुभद्रोवाच । सर्वव्रतानि भो कृष्ण कृतान्येव न संशयः । नोचेत्स्वभगिनी चाह न स्यामर्जुनवल्लभा २५

१ भद्राय कृतु । केन व्रती पुरा चीर्णे व्रते केन प्रकाशितम् । कस्मिन्पुण्यफलं तस्य किं फलं सूत कथ्यतामिति मान्युक्तिर्नैतावके । २ वक्ष्ये वाद्यविशेषे ।

पुत्रोऽभिमन्युश्च कथं कथयस्व जगत्पते ॥ कृष्ण उवाच । तथापि त्वं महाभागे व्रतमेकं समाचर २६ गोपद्मेति च विख्यातं त्रिषु लोकेषु विश्रुतम् । इति कृष्णवचः श्रुत्वा सुभद्रा तत्तदाऽकरोत् २७ कृष्णोपदिष्टविधिना सत्वरं च समापितम् । सोद्यापने व्रते चीर्णे काले यमभटा ययुः २८ दूता ऊचुः । सुभद्रे तव देहस्य चर्मार्थे ह्यागता वयम् । त्वच्चर्म सुखवाद्यार्थं यमेन च प्रकल्पितम् २९ इति दूतवचः श्रुत्वा सव्रताऽस्मीति सा ऽब्रवीत् । ततो भटाः सर्व एव ददृशुः सादरास्तदा ३० पद्मानां निचयं तस्या गृहे गां च सवत्सकाम् । स्थंडिले हस्तमात्रे तु सुसमिद्धं हुताशनम् ३१ कृष्णोपदिष्टं वीक्ष्यैवं दूता जग्मुर्यमांतिकम् । प्रतिपेदे प्रभावेण सुभद्रा पदमच्युतम् ३२ नारद उवाच । इति सूतवचः श्रुत्वा ऋषयश्चक्रिरे व्रतम् ३३ सनत्कुमार उवाच । भो भो नारद देवर्षे सर्वशास्त्रविशारद । शीघ्रं ब्रूहि सखे पद्मव्रतस्योद्यापने विधिम् ३४ नारद उवाच । पूर्णे तु पंचमे वर्षे व्रतस्योद्यापनं भवेत् । श्रीकृष्णप्रतिमा कार्या सुवर्णस्य पलेन वै ३५ पुष्पमंडपिका कार्या चतुर्द्वारसुशोभना । तन्मध्ये पूजयेद्भक्त्या रमया सहितं हरिम् ३६ त्रयस्त्रिंशत्ततो विप्रान्वृत्वा होमं समाचरेत् । अतोदेवेति मंत्रेण जुहुयात्तिलपायसम् ३७ ब्राह्मणान् भोजयेत्पश्चाद्गोभिः संपूजयेद्व्रती । यं यं चिंतयते कामं तं तं प्राप्नोत्यसंशयम् ३८ ॥ इति भविष्योत्तरपु० गोपद्मव्रतकथोद्यापनं संपूर्णम् ॥ ॥ अथाषाढशुक्लपौर्णमास्यां कोकिलाव्रतम् ॥ यदाषाढाधिकमासस्तदा कोकिलाव्रतानुष्ठानं कार्यम् । तद्विधिः—आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य ममेह जन्मजन्मांतरस्थसर्वपापक्षयार्थं पुत्रपौत्रलक्ष्मीवृद्धये सौभाग्यवृद्धिद्वाराऽवैधव्यसपत्ननाशाय कोकिलारूपगौरीप्रीत्यर्थं कोकिलाव्रतं करिष्य इति संकल्प्य पूजयेत्। आषाढपौर्णमास्यां तु संध्याकाले ह्युपस्थिते ॥ संकल्पयेन्मासमेकं, श्रावणे प्रत्यहं ह्यहम् । स्नानं करिष्ये नियमाद्ब्रह्मचर्यस्थिता सती ॥ भोक्ष्यानि नक्तं

मृशय्यां करिष्ये भाणिनां दयाम् । इत्युक्त्वा ॥ स्नानं करोमि देवेशि कोकिले प्रीतये तव । जले अस्मिन्पावने पुण्ये सर्वदेवजलाश
ये । इति मंत्रेण तिलामलककल्केन सर्वौषधिजलेन वचापिष्टेन आष्टौ दिनानि प्रत्येकं सर्वौषधियुक्तेन च षड्दिनान्येवं मासाव
धि स्नाने क्रमः ॥ एवं स्नात्वा रविं ध्यात्वा तस्मा अर्घ्यं च दापयेत् ॥ आदित्य भास्कर रवे अर्क सूर्य दिवाकर । प्रभाकर नमस्तु-
भ्यं गृहाणार्घ्यं नमोस्तु ते–इतिसूर्यार्घ्यमंत्रः ॥ ततः स्वर्णपक्षां रौप्यपादां मौक्तिकनेत्रां प्रवालमुखीं रत्नपुच्छां चूतचंपकवृक्षस्थां पक्षि
रूपिणीं कोकिलां लिखित्वा पूजयेदित्युक्तम् ॥ स्वर्णपक्षां रक्तनेत्रां प्रवालमुखपंकजाम् । कस्तूरीवर्णसंयुक्तामुत्पन्नां नंदने वने । चूतचंपक-
वृक्षस्थां पुष्टस्वरसमन्विताम् । चिंतयेत्पार्वतीं देवीं कोकिलारूपधारिणीम् । ध्यानम् ॥ आगच्छ कोकिले देवि देहि मे वांछित फलम् । च
पकद्रुममास्थ क्रीडंति नंदनेवने । आवाहनम् ॥ आसन क्षौमवस्त्रेण निर्मितं ह्यनघे तव । गृहाणेदं मया देवि कोकिले प्रियवर्धिनि । आसनम् ॥
तिलस्नेहे तिलमुख्ये तिलसौख्ये तिलप्रिये । सौभाग्यं धनपुत्रांश्च देहि मे कोकिले नमः । तिलपुष्पफलैर्युक्तं पाद्यं मे प्रतिगृह्यताम् ।
पाद्यम् ॥ रत्नपंचकपुष्पैश्च पीतचंदनसंयुतम् । हेमपात्रे स्थितं तोयं गृहाणार्घ्यं नमोस्तु ते । अर्घ्यम् ॥ निर्मलं सलिलं गांगं कोकिले
पक्षिरूपिणि । वासितेन सुगंधेन गृहाणाचमनीयकम् । आचमनीयम् ॥ पंचामृतेन स्नपनं कोकिले कलकंठके । मया दत्तेन प्रीता त्वं भ
व मे परमेश्वरि । पयो दधि घृतं चैव शर्करा मधुसंयुतम् । पंचामृतेन स्नपनं दत्तं स्वीकुरु कोकिले । पंचामृतस्नानम् ॥ मंदाकिनीजलं पु
ण्यं सर्वतीर्थसमन्वितम् । स्नानार्थं ते मया दत्तं कोकिले गृह्यतां नमः । स्नानम् ॥ पट्टमात्कार्पासवस्त्रेण वासांसि विविधानि च । पीतव
स्त्रप्रदानेन प्रीता भव मर्माविके सदा ॥ कंचुकं च मया दत्तं नानावर्णविचित्रितम् । कोकिले गृह्यतां देवि प्रसीद परमेश्वरि । कंचुकम् ॥

हरिद्रारंजिते देवि कंठसूत्रं समर्पितम् । कोकिले सुभगे देवि वरदा भव चांबिके । कंठसूत्रम् ॥ यानि रत्नानि सर्वाणि गंधर्वेपूरगेषु च । तैर्युक्तं भूषणं हैमं कोकिले प्र० । भूषणानि ॥ श्रीखंडचंदनंदि० । चंदनम् ॥ अक्षताश्च० । अक्षतान् ॥ कुंकुमालक्तकं दिव्यं कामिनीभूषणास्पदम् । सौभाग्यदं गृहाणेदं प्रसीद हरवल्लभे । हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितम् । सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि । सौभाग्यद्रव्यम् ॥ करवीरैर्जातिकुसुमै० । पुष्पाणि ॥ वनस्पतिरसो० । धूपम् ॥ साज्यंच० । दीपम् ॥ शर्कराखंडखाद्यानि दधिक्षीरघृतानि च । आहारार्थे मया दत्तं नैवेद्यं प्रतिगृह्यताम् । नैवेद्यम् ॥ पाटलोशीरकर्पूरसुरभि स्वादु शीतलम् । तोयमेतत्सुखस्पर्शं कोकिले प्र० । आचमनीयम् ॥ चंदनागरुकर्पूरकस्तूरीकेसरान्वितम् । करोद्वर्तनकं देवि गृह्यतां हरवल्लभे । करोद्वर्तनम् । कूष्मांडं नारिकेरं च पनसं कदलीफलम् । जंबीरं मातुलिंगं च फलं गृह्ण नमोस्तु ते । फलानि ॥ पूगीफलमिति तांबूलम् ॥ हिरण्यगर्भेति दक्षिणाम् ॥ कोकिले कृष्णवर्णे त्वं सदा वससि कानने । भवानी हरकांताऽसि कोकिलायै नमो नमः । नीराजनम् ॥ पूजिता परया भक्त्या कोकिला गिरिशप्रिया । पुष्पैर्नानाविधैः श्रेष्ठैर्वरदास्तु सदा मम । पुष्पांजलिम् ॥ यानि कानि च० । प्रदक्षिणाम् ॥ नमो देव्यै० । नमस्कारम् ॥ कोकिलारूपधारिण्यै जगन्मात्रे नमोऽस्तुते । शरणागतदीनानां त्राहि देवि सदांबिके । गंधपुष्पाक्षतैर्युक्तं तोयं हेमफलान्वितम् । अर्घ्यं गृहाण देवेशि वांच्छितार्थं प्रयच्छ मे । अर्घ्यम् ॥ आषाढस्य सिते पक्षे मेघवर्णे हरिप्रिये । कोकिले त्वं जगन्मातर्गृहाणार्घ्यं नमोस्तु ते । पुनरर्घ्यम् ॥ तिलस्नेहे० रूपंदेहिजयं० । प्रार्थना ॥ व्रतांते हैमीं तिलपिष्टजां कोकिलां कृत्वा विप्राय दद्यात् । देवि चैत्ररथोत्पन्ने विंध्यपर्वतवासिनि । अर्चिता पूजितासि त्वं कोकिले हरवल्लभे । कोकिले कलकंठासि माधवे मधुरस्वरे । वसंते देवि गच्छ त्वं देवानां नंदने व-

ने । इति विसर्जनम् ॥ इति कोकिलापूजा ॥ अथ कथा ॥ युधिष्ठिर उवाच ॥ स्वभर्त्रा सह संयोगः स्नेहः सौभाग्यमेव च । भ
वेधवा कुलस्त्रीणां तद्व्रतं ब्रूहि केशव १ श्रीकृष्ण उवाच । यमुनायास्तटे रम्ये मथुरानगरी शुभा । तस्यां शत्रुघ्ननामा ऽभूद्राजा राघव
वंशजः २ तस्य भार्या कीर्तिमाला नाम्नाऽऽसीत्प्रथिता भुवि । प्रणम्य भगवान्पृष्टो वसिष्ठो मुनिसत्तमः ३ कीर्तिमालोवाच । वद मे त्वं
मुनिश्रेष्ठ सौभाग्यप्राप्तिदं व्रतम् । पूज्यः कथं च भगवान् शिवः केन व्रतेन च ४ वसिष्ठ उवाच । यदि पृच्छसि मे त्वं हि व्रतानामुत्तम
व्रतम् । तारणं सर्वपापानां कथयामि निबोध तत् ५ दक्षप्रजापतेर्यज्ञे पुरा देवाः समागता । ऋषयश्च तथा सर्वे विद्याधरगणास्तथा ६
ब्रह्मा विष्णुश्च वायुश्च देवराजस्तथैव च । वरुणो ऽग्निर्ग्रहाश्चैव ये चान्ये च दिवौकसः ७ वसिष्ठो वाल्मिकिर्गार्ग्यो विश्वामित्रो महान्
पि । एते चान्ये च ऋषय सर्वे यज्ञार्थमागताः ८ अपश्यन्नारदस्तत्र संति केत्रागता इति । ईश्वरेण विना सम्यग्दृष्ट्वा सर्वान्समागतान् ९
शिरः संस्पृश्य पाणिभ्यां ननर्त कलहप्रियः । ज्ञात्वा सकलमूर्ख च तत कैलासमाययौ १० सर्वाघनाशन पुण्यं कैलासशिखरं शुभम् ।
तत्र दृष्ट्वा समासीनं गौरीसहितशंकरम् ११ कृतांजलिपुटो भूत्वा प्रणिपत्य मुनिः स्थितः । ईश्वरस्तमुवाचाथ निःश्वसतमनेकधा १२ कि-
मागमनकृत्य ते मदीय सदनंप्रति । श्वासोच्छ्वासेन संयुक्तस्तन्मे ब्रूहि द्विजोत्तम १३ ईश्वरस्य वच श्रुत्वा शिरः संस्पृश्य पाणिना । दुःख
युक्त इवोवाच नारदः कलहप्रियः १४ नारद उवाच । यन्निमित्तं महादेव मर्त्यलोकात्समागत । वदामि दुःखसंयुक्तं तच्छृणुष्व जगत्प-
ते १५ दक्षयज्ञमह द्रष्टुमथ देवात्समागत । तत्र यज्ञे स्थिताः सर्वे दक्षजामातराः प्रभो १६ दृष्टा तांश्च न तन्मध्ये दृष्टस्त्रिभुवनेश्वर ।
तथावस्था कृता तेन दक्षणापुण्यकर्मणा १७ तेन वै श्वाससंयुक्त आगतोस्मि तवांतिकम् । ईश्वरेण विना किंचिद्धर्मकार्यं न सिद्ध्यति १८

अतोस्य विफलः सर्वः प्रयासः स्वमखं प्रति । तस्य तद्भाषितं श्रुत्वा न तन्मिथ्येत्यचिंतयत् १९ सक्रोधस्तत्तदा जातो ह्रीश्वरो जगदीश्वरः।
गौर्या च प्रार्थितो देवः श्रुत्वा तन्नारदेरितम् २० तस्य यज्ञस्य घातार्थं देव तत्र व्रजाम्यहम् ।इत्युक्त्वा चलिता रोषादीश्वरेण निवारिता २१
जगदीश नमस्तुभ्यं व्रजामि पितृवेश्मनि । नारदेनाथ सहिता गणेशेन च संयुता २२ यज्ञार्थमागता चैव दक्षद्वारे शिवप्रिया। वह्नौ दृष्ट्वा
वसोर्धारां लज्जिता च शिवप्रिया २३ तिष्ठंतीं द्वारितां दक्षो न ददर्श महासतीम् । क्षणमेकं च तिष्ठंतीं यदा दक्षो न पश्यति २४ तदेवं चिं-
तितं गौर्या जीवितव्यं मया कथम् । धाविता कुंडनिकटे हाहाकृत्वा च सा ततः २५ क्षिप्तं वन्हौ तदा गौर्या शापं दत्त्वा च दारुणम् । दृष्ट्वा तच्च
गणेशेन पाशः परशुरुद्यतः २६ क्षुब्धो ह्यसौ तदाऽत्यर्थं गौर्यर्थे च गणाधिपः । पाशेन बध्वा कतिचित्कोपान्निहतवान्सुरान् २७ दक्षेण नोदिता दे-
वाः सर्वे युद्धाय निर्ययुः । महद्युद्धमभूद्भूयःसहदेवैर्गणेशितुः२८ तं दृष्ट्वा नारदः शीघ्रं पुनः कैलासमाययौ । निवेदयामास तदा युद्धं गौर्या विस-
र्जनम् २९ तच्छ्रुत्वा स्फालयामास जटां कोपादुमापतिः । ततो जातो ऽतिविकटः पुरुषो रक्तलोचनः ३० स बभाषे महादेवं स्वामिन्नाज्ञां च देहि
मे । वीरभद्रेति नामास्य कृत्वा चाज्ञां समर्पयत् ३१ दक्षयज्ञविघातार्थं गच्छ वीरातिसत्वरम् । श्रुत्वा तदीश्वरवचः सर्वप्रमथसंवृतः ३२ आययौ
यज्ञसदनमसृग्वह्निषु निक्षिपत् । तत इंद्रादयो देवास्तद्वधाय विनिर्ययुः ३३ क्षणात्पराजितास्तेन विद्रुताश्च दिशो दश।अनुद्रुतश्च तान्सोपि पू-
ष्णो दंतानपातयत् ३४ भगस्य नेत्रे नासां च असिपुत्र्या न्यकृंतत । एवं विद्राव्य तान्सर्वान् शिरो दक्षस्य चिच्छिदे ३५ कृत्वैवं यज्ञघातं स
आजगाम शिवांतिकम् । नमस्कृत्य पुरस्तस्थौ कृतं कार्यमिति ब्रुवन् ३६ तथाप्यशांतः कोपो ऽस्य ज्ञात्वेति ज्ञानचक्षुषा । प्रसादयितुमासीनं ब्रह्म
विष्णू समीयतुः ३७ नमस्कृतस्ततस्ताभ्यां प्रसन्नो ऽभूत्सदाशिवः । नारदस्तुंबरुश्चैव गीतैः शिवमतोषयत् ३८ प्रसन्नं वीक्ष्य तं विप्रः

शिलां संस्पृश्य पाणिना । ननर्द नारदस्तत्र तोषयन्नधिकं शिवम् ३९ एतस्मिन्नंतरे ब्रह्मा विष्णुश्च प्रमथाधिपम् । व्यजिज्ञपत्तं दक्षादीन्कृपादृष्ट्या विलोकय ४० कृत्तांगान्भग्नशीर्णांगान्मृतान्संजीवय प्रभो । विलोकितास्ते देवेन कृपादृष्ट्या च वै तदा ४१ पूर्वादयश्च सांगा वै अभूवंस्तत्प्रसादत । दक्षस्तु पादयोर्मूले ययौ दक्षः पिनाकिनः ४१ अपराधं क्षमस्वेति पुनः पुनरुवाच ह । उत्थापितः करेणासौ ततो दक्षः पिनाकिना ४२ उक्तश्च मा पुनः कार्षीरेवमीशावमानकम् । विधरस्व सुखेनेती भूयस्तं कोपमाविशत् ४४ शशाप च तदा गौरीं यज्ञविघ्नकरीं शिवः । मखे विघ्नं कृतवती दक्षस्यैषा ततो ऽधिरात् ४५ तिर्यग्योनिसमापन्ना विचरिष्यसि भूतले । ततो गौरी बभाषे तं प्रणिपत्य सदाशिवम् ४६ कथं यास्यामि तिर्यक्त्वं भूतले च स्थितिः कथम् । अन्यथा नैव भविता शाप एष त्वयोदितः ४७ कोकिला मधुरालापा भवेयं नंदने वने । कोकिलानां स्वरो रूपं रूपं स्त्रीणां पतिव्रतम् ४८ विद्यारूपं कुरूपाणां क्षमारूपं तपस्विनाम् । अचिरादेव च पुनः कुले महति जन्म मे ४९ भूयास्त्वमेव भर्ता च न वियोगश्च मे मतः । वरयेत्कुलजां प्राज्ञः कुरूपामपि कन्यकाम् ५० दुष्टे कुले समुत्पन्ना भर्तुः पातयते कुलम् । नदी पातयते कूलं नारी पातयते कुलम् ५१ नदीनां चैव नारीणां स्वच्छंदं ललिता गतिः । ततस्तुष्टो महादेवश्चक्रे शापविमोचनम् ५२ दशवर्षसहस्राणि कोकिलारूपधारिणी । नंदने देवविपिने चरिष्यसि ततःपरम् ५३ हिमाचलसुता भूत्वा मत्प्रियत्वमुपेष्यसि । देवानां तु यथा विष्णुः सहकारो महीरुहाम् ५४ गंगा च सर्वतीर्थानां तथा तिर्यक्षु कोकिला । आषाढी द्वौ यदा स्यातां कोकिलायास्तदार्चनम् ५५ तया या कुरुते नारी न सा वैधव्यमाप्नुयात् ५६ वसिष्ठ उवाच । एतच्छ्रुत्वा ... । तदारभ्य शचि सेवस्तमपित कोकिलाव्रतम् ५७ या नारी नैव कुरुते मोहात्सा विधवा भवेत् ।

कुरु त्वमेतत्कल्याणि कीर्तिमाले व्रतोत्तमम् ५८ कीर्तिमालोवाच । कथमाराध्यते देवी कोकिलारूपधारिणी । विधानं ब्रूहि तद्विप्र त्वत्प्रसादात्करोम्यहम् ५९ वसिष्ठ उवाच । कोकिलाव्रतमाहात्म्यं विधानं च वदामि ते । शृणु देवी प्रयत्नेन मंत्रैः पौराणिकैर्युतम् ६० मलमासे त्वतिक्रांते शुद्धाषाढे समागते ॥ आषाढ्यां पौर्णमास्यां तु संध्याकाले ह्युपस्थिते । संकल्पयेन्मासमेकं, श्रावणप्रभृति ह्यहम् ६१ स्नानं करिष्ये नित्यं च ब्रह्मचर्यस्थिता सती । भोक्ष्ये नक्तं च भूशय्यां करिष्ये प्राणिनां दयाम् ६२ सौभाग्यधनधान्यादिप्राप्तये शिवतुष्टये । इति संकल्प्य विप्राग्रे नारी विप्रेभ्य एव च ६३ प्राप्यानुज्ञां तु संपाद्य सामग्रीं सकलामपि । प्रत्यूषे च प्रतिदिने दंतधावनपूर्वकम् ६४ नद्यां गत्वाऽथवा वाप्यां तडागे गिरिनिर्झरे । स्नानं करोमि देवेशि कोकिले प्रीतये तव ६५ जले ऽस्मिन्पावने पुण्ये सर्वदेवजलाश्रये । स्नानं कृत्वा व्रती देवि सुगंधामलकैस्तिलैः ६६ दिनाष्टकं ततः पश्चात्सर्वौषध्या पुनः पृथक् । वचापिष्टेन च स्नानं दिनान्यष्टौ समाचरेत् ६७ तिलामलकपिष्टेन वचौषधियुतेन च । षड्दिनानि ततः स्नानं संपूर्णफललिप्सया ६८ स्नात्वा ध्यात्वा रविं तस्यै दद्यादर्घ्यं प्रयत्नतः ६९ आदित्य भास्कर रवे अर्क सूर्य दिवाकर । प्रभाकर नमस्तुभ्यं गृहाणार्घ्यं नमोस्तु ते ७० इति सूर्यार्घ्यमंत्रः ॥ कारयेत्कोकिलां देवीं सौवर्णीं सर्वकामदाम् । रौप्यं चरणयोश्चैव नेत्रयोश्चापि मौक्तिके ७१ रत्नानि पंच पृष्ठे तु चूतवृक्षसमाश्रिताम् । अथवा तिलपिष्टेन कोकिलां पक्षिरूपिणीम् ७२ निधाय ताम्रपात्रे तां पूजयेत्सुसमाहितः । उपचारैः षोडशभिर्यथावित्तं निबोध मे ७३ आवाहयामि तां देवीं कोकिलारूपधारिणीम् । अवतारं कुरुष्वात्र प्रसादं कुरु सुव्रते ७४ आगच्छ कोकिले देवि देहि मे वांछितं फलम् । चूतवृक्षं समारुह्य रमसे नंदने वने ७५ तिर्यग्योनिसमुद्भूते कोकिले कलकंठके । तिलपुष्पाक्षतैरर्घं गृहाण त्वं नमोस्तु ते ७६

आषाढस्यासिते पक्षे मेघवर्णस्वरूपिणी । कोकिला नाम देवी त्वं स्नानार्थं प्रतिगृह्यताम् ७७ कुर्याद्देवविधो पूजां श्रावण्यंते च पूजयेत् । विसर्जयेत्र पश्चात्तां सौवर्णीं कोकिलां यदि ७८ यदा च तिलपिष्टस्य कोकिला क्रियते सदा । कुर्यात्मत्स्यहमाद्धानं भिन्नायास्तु विसर्जनम् ७९ रम्यं वनं समागत्य श्रुत्वा कोकिलकूजितम् । यदा न श्रूयते शब्द उपवासस्तु तद्दिने ८० कोकिले कृष्णवर्णे त्वं सदा वासो वनेषु ते । सौभाग्यमतुलं देहि गृहाणार्घ्यं नमोऽस्तु ते ८१ वसते च समुत्पन्ने विंध्यपर्वतवासिनि । गच्छ गच्छ महादुर्गे स्वस्थाने नंदने वने ८२ विसर्जनम् ॥ रूपं देहि धनं देहि सर्वसौभाग्यदे हि मे । पुत्रान्देहि यशो देहि सौभाग्यं देहि संपदः ८३ इत्युक्त्वा च ततः पश्चाद्धविष्याशनेन सुव्रती । नक्तभोजी भवेद्राज्ञि यावन्मासः समाप्यते ८४ मासांते ताम्रपात्रे तु कोकिलां स्वर्णनिर्मिताम् । वस्त्रधान्यगुडैर्युक्तां श्रावण्यां कुंडल तथा ८५ दद्यात्सदक्षिणां चापि दैवज्ञे वा पुरोहिते । एवमाषाढमासस्य द्वैविध्ये समुपस्थिते ८६ सधवा विधवा वापि या नारी कोकिलाव्रतम् । करोति सप्तजन्मानि सौभाग्यं लभते तु सा ॥ मृता गौरीपुरं याति विमानेनार्कतेजसा ८७ श्रीभगवानुवाच । एतद्व्रतं वसिष्ठेन मुनिना कथितं पुरा । तया कृतं तु तत्पार्थ समस्तं कीर्तिमालया ८८ तस्याश्च सर्वं निष्पन्नं वसिष्ठवचनं यथा । एवमन्यापि कौंतेय कोकिलाव्रतमुत्तमम् ८९ करिष्यति ततस्तस्याः सौभाग्यं च भविष्यति । न करोति यदा नारी व्याली भवति कानने ९० एकतः सर्वदानानि कोकिलाव्रतमेकतः । कृतं पुरा ऽप्सरोभिश्च ऋषिपत्नीभिरादरात् ९१ अहल्यया च सा पूर्वमर्चिता शापमुक्तये । अरुंधत्या च सा स्नात्वा पूजिता कोकिला नृप ९२ सीतया पूजिता सापि सर्वकामार्थसिद्धये । गौतम्यां दंडकारण्ये स्नानं कृत्वा यथाविधि ९३ नलान्वेषणकामेन दमयंत्या च पूजिता । रुक्मिण्या च ततः स्नात्वा पूजिता कोकिला शिवा ९४ विष्णोः

पत्युरवाप्त्यर्थं तच्च जातं न संशयः ॥ कुचैला मलिना दीना परकर्मरता तथा ९५ एवं वंध्या काकवंध्या विवत्सा मृतवत्सका । सर्वास्ताः फलभाजः स्युर्व्रतस्यास्य प्रभावतः ९६ आयुरारोग्यमैश्वर्यं सुखं वृद्धिं यशः प्रजाम् । सौभाग्यं सुंदरं रूपं नारी प्राप्नोति नान्यथा ९७ एतद्व्रतं मयाख्यातं कार्यं वारत्रयं नृप । तृतीयांते च विधिवत्कार्यमुद्यापनं शुभम् ९८ एकस्माज्जायते द्रव्यं द्वितीयाल्लभते सुतान् । तृतीयाच्चापि सौभाग्यं प्राप्नुयान्नात्र संशयः ९९ ॥ इति वराहपुराणे कोकिलाव्रतकथा सं० ॥

॥ अथोद्यापनम् ॥ उद्यापनविधिं ब्रूहि व्रतस्यास्य मम प्रभो । येन विज्ञानमात्रेण सौभाग्यं च भविष्यति ॥ श्रावणे पौर्णमास्यां तु शुक्लपक्षे तथैव च । द्वितीयायामेकभुक्तं दंतधावनपूर्वकम् ॥ उपवासस्य नियमं कर्तुं व्रतपरायणम् । तृतीया पुण्यफलदा मध्याह्ने समुपोषिता ॥ उपलिप्य शुचौ देशे मंडलं तत्र कारयेत् । अष्टदलं लिखेत्पद्मं चतुष्कोणं च भद्रकम् ॥ कलशं वारिपूर्णं च पंचरत्नसमन्वितम् । तस्योपरि न्यसेत्पात्रं[१] प्रस्थेनैकेन पूरयेत् ॥ तदभावे तदर्द्धं वा कुडवेनाथ नारद । ऊर्णापट्टं कृष्णवर्णं युग्मं दद्याच्च शक्तितः ॥ तस्योपरि न्यसेद्देवीं कोकिलाप्रतिमां तथा । अत्र गंधप्रदानेन धूपदीपप्रदानकम् ॥ नैवेद्यं मोदकान्दद्यात्पक्वान्नं घृतसंयुतम् । अर्घ्यं चैव प्रदातव्यं तांबूलं फलमुत्तमम् ॥ रात्रौ जागरणं कार्यं वाद्यनृत्यप्रभूषितम् । पूजिता एकचित्तेन फलं प्राप्नोति चाक्षयम् ॥ प्रभाते विमले जाते स्नानं कृत्वा विधानतः । पूजयेद्विधिवद्देवीं होमं च विधिवद्द्विज ॥ तिलचंपकपुष्पैश्च तंडुलैर्घृतपायसैः । अष्टोत्तरशतं हुत्वा दुर्गामंत्रैश्च वैदिकैः ॥ कोकिलाप्रीतये ब्रह्मन् व्याहृतीनां शतत्रयम् । ब्राह्मणान्भोजयेत्पश्चात्सपत्नीकांश्च पंच च ॥

१ अत्र कारयेदित्यध्याहारः ।

अशक्तो द्येकयुग्मं च भोजयेच्च तथा गुरुम् । त्रिस्त्रिम्यश्च प्रदातव्यं पारिकापंचकं तथा ॥ मोदकांश्च ससूत्रांश्च वंशपात्रसमन्वितान् । कृष्णवर्ण
समायुक्तान् पक्वान्नेन प्रपूरितान् ॥ सर्वोपस्कारसंयुक्तांस्त्रिस्त्रिम्यश्च प्रदापयेत् । आचार्यं पूजयेद्भक्त्या गां कृष्णां च सवत्सकाम् ॥ उपानहौ
तथा शय्यां चामर छत्रमेव च । मुद्रिकां कर्णवेष्टे च चदन कुसुमानि च ॥ सर्वं दद्याद्विजेंद्राय सपत्नीकाय नारद । दापयेद्विधिवत्सर्वं ब्राह्म
णाय कुटुंबिने ॥ व्रतोपदिष्टदान च भोजनं च सदक्षिणम् । ततो भुंजीत नैवेद्यं पुत्रपौत्रैः समन्विता ॥ एवं या कुरुते राजन् कोकिलाव्र
तमुत्तमम् । सर्वं प्राप्नोति सौभाग्य पुत्रधान्यधनानि च ॥ देवीचैत्ररथोत्पन्नेकोकिलेविन्ध्यवासिनी ॥ कोकिलेपूजितेगच्छविधिवत्सर्वकामदे ।
कारयेत्कोकिलां देवीं सौवर्णीं सर्वकामदाम् ॥ रौप्यचरणचंचूभी रचितां नेत्रमौक्तिकाम् ॥ पंचरत्नानि पृष्ठे च चूतवृक्षसमाश्रिताम् ॥
एव त्वं च यथापूज्या यथोक्ता च शनैः शनैः ॥ विप्रकरार्पिता लक्ष्मीः स्वस्वमाचमिदं शृणु । महाफलमवाप्नोति महामायाप्रसादतः ॥
इति कोकिलाव्रतोद्यापनं ॥ ॥ अथ श्रावणपौर्णमास्यां रक्षाबंधनम् ॥ इद भद्रायां न कार्यम् । भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी
तथा । श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनी—इति वचनात्॥अथ कथा॥हेमाद्रौ भविष्ये—युधिष्ठिर उवाच॥सर्वरोगोपशमन सर्वाशुभवि-
नाशनम् । सकृत्कृतेनाब्दमेकं येन रक्षाकृतो भवेत् १ श्रीकृष्ण उवाच । शृणु पांडवशार्दूल इतिहास पुरातनम् । इंद्राण्या यत्कृत पू
र्वं शक्रस्य जयवृद्धये २ देवासुरमभूद्युद्धं पुरा द्वादशवार्षिकम् । तत्रासुरैर्जितः शक्रः सह सर्वैः सुरोत्तमैः ३ बृहस्पतिमुपामन्त्र्य इदं वचनमब्र
वीत् ॥ शक्र उवाच । न स्थातु चैव शक्नोमि न गंतु तैरभिद्रुतः ४ सर्वथा योद्धुमिच्छामि गुरुस्त्वं च न्यवारय । तयोः संवदतोरेवं शची

१ परिमन्नाये ये पड्वर्ति दानं भोजनं च सदक्षिणं दद्यादित्यर्थः ।

प्राह सुरेश्वरम् ५ अद्य भूतदिनं देव प्रातः सर्वं भविष्यति । अहं रक्षां विधास्यामि येनाजेयो भविष्यसि ६ इत्युक्त्वा पौर्णमास्यां सा पौलोमी कृतमंगला । बबंध दक्षिणे पाणौ रक्षापोटलिकां ततः ७ बद्धरक्षस्ततः शक्रः कृतस्वस्त्ययनो द्विजैः । दुद्राव दानवानीकं क्षणात्काल इव प्रजाः ८ शक्रस्तु विजयी जातः पुनरेव जगत्त्रये ९ एष प्रभावो रक्षायाः कथितस्ते युधिष्ठिर । जयदः सुखदश्चैव पुत्रारोग्यधनप्रदः १० । युधिष्ठिर उवाच । क्रियते केन विधिना रक्षाबंधः सुरोत्तमैः । कस्मिंस्तिथौ कदा देव ह्येतन्मे वक्तुमर्हसि ११ यथा हि भगवन्देव विचित्राणि प्रभाषसे । तथा तथा न मे तृप्तिर्बह्वर्थाः शृण्वतः कथाः १२ कृष्ण उवाच । संप्राप्ते श्रावणे मासि पौर्णमास्यां दिनोदये । स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः १३ ततो देवान्पितॄंश्चैव तर्पयेत्परमांभसा । उपाकर्मणि चैवोक्तमृषीणां चैव तर्पणम् १४ कुर्वीत ब्राह्मणैः सार्द्धं वेदानुद्दिश्य शक्तितः । शूद्राणां मंत्ररहितं स्नानं दानं च शस्यते १५ ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् । कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चितैः १६ कार्पासैः क्षौमवस्त्रैर्वा विचित्रैर्मलवर्जितैः । विचित्रतंतुग्रथितां स्थापयेद्भाजनोपरि १७ कार्या गृहस्य रक्षा वै गोमयैः शुक्लतंडुलैः । दूर्वावर्णैः सितैश्चैतैः सर्वपापविनाशिनि १८ उपलिप्ते गृहे मध्ये सान्नं कुंभं च विन्यसेत् । पीठोपरि विशेद्राजा सचिवैः सुमुहूर्तके १९ वेश्याजनेन सहितो मंगलैः सहितः स्थितैः । रक्षाबंधः कार्यसिद्धिः सर्वविघ्नोपशांतिदः । पुरोधा नृपते रक्षां सम्यग्बध्नीत मानवः २० येनबद्धोबलीराजादानवेंद्रोमहाबलः । तेनत्वामभिबध्नामिरक्षेमाचलमाचल २१ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः । कर्तव्यो रक्षिकाबंधो द्विजान् संपूज्य भक्तितः २२ अनेन विधिना यस्तु रक्षाबंधं समाचरेत् । स सर्वदोषरहितः सुखी संवत्सरं भवेत् २३ इति भविष्योक्तं रक्षाबंधनं समाप्तम् ॥ ॥ अथ भाद्रपदपौर्णमास्यामुमामहेश्वरव्रतम् ॥ शिवरहस्ये तद्विधिः ।

राजोवाच। भगवन्मुनिशार्दूल व्रतमेकं वदस्व मे। सांगे यस्मिन्व्रते चीर्णे सर्वान्कामानवाप्नुयात्॥ गौतम उवाच। उमामहेश्वरं नाम व्रतमस्ति
व्रतोत्तमम्। मासि भाद्रपदे शुक्ले पौर्णमास्यां प्रयत्नतः॥ तद्व्रतं कार्यमनघैर्ब्राह्मणाद्यैर्विधानतः। भाद्रशुक्लचतुर्दश्यां प्रातः स्नात्वा विधान
तः॥ शिवं संपूज्य विधिवच्छैवानप्यतियत्नतः॥ शिवं ध्यात्वा जगद्वंद्यं सोमं सोमार्द्धशेखरम्॥ कृतांजलिपुटो भूत्वा मंत्रमेतं पठेन्नरः॥
श्व करिष्ये व्रतं यस्मादुमामाहेश्वराभिधम्। आज्ञां देहि महादेव सोम सोमार्द्धशेखर॥ इति विज्ञाप्य वै देवं पुनः संपूज्य यत्नतः। मध्याह्ने
ऽपि महादेवमर्चयेन्नियतो व्रती॥ ततो देवानृषीन्सर्वानभ्यर्च्य विधिवन्नृप॥ हविष्याशी शिवं सायं पूजयेद्विधिपूर्वकम्। निद्रा कार्या तथा
योगं महादेवस्य सन्निधौ॥ उत्थाय पश्चिमे यामे महादेवं ततः स्मरेत्। ततः शौचादिकं सर्वं निर्वर्त्य प्रीतमानसः॥ स्नानं कुर्याद्यथायो
गं यथाशास्त्रं यथाक्रमम्। परिधाय ततो वस्त्रं क्षालितं शुभमक्षतम्॥ उद्धूलनं ततः कार्यं त्रिपुंड्रं च यथाक्रमम्। रुद्राक्षधारणं कार्यं सं
ध्या कार्या ततः परम्॥ ततः शिवार्चनं कार्यं बिल्वपत्रादिभिर्नरैः। ततो होमोपि कर्तव्यः शिवप्रीत्यर्थमादरात्॥ ततःपरं नियमेन प्रणमेत्सोमम
व्ययम्। सग्रंथिकुशपिंजूलं ततः संपाद्यमादरात्। सूत्रं पंचदशग्रंथिपूजितं च शिवात्मकम्॥ एवं पंचदशग्रंथिं दोरकं कुंकुमान्वितम्।
संपादनीयं यत्नेन व्रतनिष्ठैरनाकुलैः॥ उमामहेश्वरौ चैव सौवर्णौ प्रतिमाद्वयम्। संपादनीयं यत्नेन राजतं वा मनोहरम्॥ पलादूनं न
कर्तव्यं प्रतिमाद्वयमुत्तमम्। अधिकं चेद्यथाशक्तिः कर्तव्यमतियत्नतः॥ सौवर्णो राजतो वापि ताम्रो वा मृन्मयो नवः। संपादनीयो
यत्नेन प्रयतैर्व्रततत्परैः॥ ततः सदर्भमूर्तिं च वस्त्रयुग्मेन वेष्टयेत्। पृथक् पृथक् स्थापनीयं कलशे प्रतिमाद्वयम्॥ आपोहिष्ठादिभिर्मं
त्रैस्तथा त्र्यंबकमंत्रकैः। अभिषिच्य प्रयत्नेन पूजयेत्प्रतिमाद्वयम्॥ ततः प्रयत्नतो गच्छेदर्ककृतशिवालयम्। अथ षोडशके पत्रे च

हिरंतश्च तुर्युणे । अलंकृतैः स्वस्तिकाद्यैः स्थापयेत्कलशं नवम् । ध्यायेत्ततो महादेवमुमादेहार्द्धधारिणम् ॥ मुक्तामालापरीतांगं दुकूलपरिवेष्टितम् । पंचाननमुमाकांतमनलेंदुरविप्रभम् ॥ चंद्रार्द्धशेखरं नित्यं जटामुकुटमंडितम् । त्रिपुंड्रलेखाविलसद्भालनेत्रोपरि स्थितम् ॥ भस्मोद्धूलितसर्वांगं रुद्राक्षाभरणान्वितम् । मंदस्मितमनाधारमाधारं जगतां प्रभुम् ॥ देवैरनंतैरनिशं स्तूयमानमनेकधा । देवात्मकं देववंद्यं विष्णुब्रह्मादिवंदितम् ॥ विष्णुनेत्रान्वितारक्तपादपंकजमुत्तमम् । अप्रतिद्वंद्वमद्वंद्वं सर्ववृंदारकार्चितम् ॥ सर्वोत्तममनाद्यंतं सर्वदेवनिवेदितम् । सत्यं शुद्धं परं ब्रह्म पुरुषं कृष्णपिंगलम् ॥ ऊर्ध्वकेशं विरूपाक्षं विश्वरूपं चिदात्मकम् । निष्कलं निर्गुणं शांतं निरवद्यं निरंजनम् ॥ अप्रमेयं जगन्मध्ये स्थितिसंहारकारणम् । विश्वबाहुं विश्वपादं विश्वाक्षं विश्वसंभवम् ॥ विश्वं नारायणाराध्यमक्षरं परमं पदम् । विश्वतः परमं नित्यं विश्वस्येशमनामयम् ॥ एवं ध्यात्वा महादेवं सर्वदेवोत्तमोत्तमम् ॥ ध्यायेत्ततःपरं गौरीमादिविद्यामनामयीम् ॥ लक्ष्मीसेवितपादाब्जां शचीसेवितपादुकाम् । सरस्वत्यादिभिर्नित्यं स्तूयमानपदांबुजाम् ॥ अधरोष्ठधरीभूतपक्वबिंबफलासुमाम् । मुखकांतिकलोपेतां पूर्णचंद्रामनामयाम् । तिरस्कृतालिमालां तामलकावलिभिः सदा । पीनवक्षोजनिर्धूतचक्रवाकवरांगनाम् । नित्यं तिरस्कृतांभोजां नयनाभ्यामनिंदिताम् । सीमंतधिक्कृताशेषकामभल्लामहर्निशम् । भ्रूकुटीधिक्कृताशेषरामभल्लामनाकुलाम् ॥ बाहुताल्करोद्भूतहेममालांविलासिनीम् । रोमावलीतिरोभूतभ्रमद्भ्रमरनालिकाम् ॥ नाभिरंध्रतिरोभूतघनावर्तामवर्तुलाम् ॥ उत्तमोरुतिरोभूतरंभास्तंभां शुभावहाम् ॥ पादयुग्मप्रभाकांतिनिर्जितारुणपंकजाम् । उपेंद्रोपेंद्रजननीं महेशार्द्धांगभामिनीम् ॥ महेशाश्लिष्टवामांगां वरदाभयदां सदा । प्रसन्नवदनां शांतां स्मितपूर्वाभिभाषिणीम् ॥ पूर्णचंद्रदुकूलाढ्यां नानाभरणभूषिताम् । स्तूयमानां सदा

देवपद्मेर्दानैम कोटिग ॥ एवं ध्यात्वा ततः सम्यगुपचारान्प्रकल्पयेत् । ततः पुष्पाणि संगृह्य शिवमावाहयेच्छिवाम् ॥ महादेव दयासिंधो विष्णुब्रह्मादिवंदित । आवाहयामि देव त्वां प्रसीद परमेश्वर ॥ इत्यावाहनम् ॥ आसनं पाद्यं अर्घ्यं आचमनीयं मधुपर्कं पंचामृत स्नान स्नानं वस्त्र उपवीतं गंधं आभरणानि बिल्वपत्र पुष्पाणि धूप दीप नैवेद्य आचमनीय फल तांबूल दक्षिणां छत्रचामरव्यजनानि नीराजन पुष्पांजलिं प्रदक्षिणां नमस्कारं समर्पयेत अथांगपूजा ॥ कपर्दिनेनमः शिरःपूजयामि । भाललोचनाय० भालपू० । सोमसूर्याग्निलोचनाय० नेत्रत्रयंपू० । सुश्रोत्राय० श्रोत्रेपू० । घ्राणगवाय० घ्राणपू० । स्मृतिदंताय० दंतान्पू० श्रुतिजिव्हाय० जिव्हांपू० । सुकपोलाय० कपोलौपू० । ज्ञानोष्ठाय० ओष्ठौपू० । विश्वजंघाय० जंघेपू० । विश्वपादाय० पादौपू० । विश्वनखाय० नखान्पू० । सर्वात्मकाय० सर्वांगंपू० ॥ अथ शक्त्यंगपूजा ॥ शिवायैन० शिरःपू० । पृथग्वेण्यै० वेणींपू० । सीमंतराजितायै० सीमंतपू० । कुंकुमभालायै० भालपू० । पद्मनेत्रयै० नेत्रेपू० । स्तुतिश्रोत्रायै० श्रोत्रेपू० । गंधप्रियायै० घ्राणपू० । सुभगकपोलायै० कपोलौपू० कुंदसमदंताय० दंतान्पू० । विद्याजितायै० जिव्हां० । बिंबोष्ठ्यै० ओष्ठौ० शुभकंठायै० कंठं० । पृथुलकुचायै० कुचौ० । विश्वगर्भायै० उदरं० । शुभकट्यै० कटी० । दिव्योरुदेशायै० ऊरू० । कृतजंघायै० जंघे० । लक्ष्मीसेवितपादुकायै० पादौ० । महेश्वरप्रियायै० नखान्पू० । शोभनविग्रहायै० सर्वांगपू० ॥ अंगपूजां समाप्यैवं दोरकं च विसर्जयेत् । प्रत्येकं ग्रंथिषु स्वच्छैः स्वच्छैर्बिल्वदलादिभिः ॥ प्रथमग्रंथिमारभ्य नम सोमेति मंत्रतः । यथाक्रमेण संपूज्य ततो धार्यं हि दोरकम् ॥ तत्रोपचाराः सर्वेपि तेन मंत्रेण सादरम् । व्रतिभिर्यत्नतः कार्यं कुंकुमांकितदोरकम् ॥ तत प-

१ एतासां विशेषा आमनोपचाराणां सैकाम प्रकाले प्रकल्प्याः । २ सर्वपर्णीया इति रोसः ।

च दश प्रस्था गोधूमास्तंडुलाश्च वा । उपायनार्थमानेयाः शुद्धा गोघृतपाचिताः ॥ यद्वा पंचदशाज्याक्ता गोधूमापूपमंडकाः । ततः शि-
वैकशरणा शैवा शिवव्रतप्रियाः ॥ पूजनीयाः प्रयत्नेन गंधपुष्पादिभिः क्रमात् । ततः सवस्त्रकलशं शिवयोः प्रतिमाद्वयम् ॥ शैवाय देयं
यत्नेन सुवर्णफलसंयुतम् । आदावुपायनं दत्त्वा देयं ह्येतदतःपरम् ॥ उपायनस्य मंत्रोऽपि वक्ष्यतेऽत्र विशेषतः ॥ उमेशः प्रतिगृह्णाति ह्युमे-
शो वै ददाति च । उमेशस्तारकोभाभ्यामुमेशाय नमो नमः ॥ अमुं मंत्रं समुच्चार्य दत्त्वा दानं निवेदयेत् । अतः शैवाः प्रयत्नेन
भोजनीया विशेषतः ॥ सुवासिन्योऽपि यत्नेन भोजनीयाः प्रयत्नतः । शैवानेवं भोजयित्वा स्वयं भुंजीत वाग्यतः ॥ अतिथीनपि संत-
र्प्य द्वारदेशस्थितान्नृप । एवं प्रयत्नतः कार्यं प्रतिवत्सरमादरात् ॥ नियमेनैव विधिवदुक्तरीत्या यथाक्रमम् । ब्राह्मणाद्यैरिदं का-
र्यं व्रतमाहितमानसैः ॥ सर्वाभीष्टप्रदं पुण्यं व्रतमेतच्छिवात्मकम् । प्राप्ते तु षोडशे वर्षे कार्यमुद्यापनं नृप । उद्यापनविधानं च वक्ष्ये शृ-
णु यथाक्रमम् । पौर्णमास्यां भाद्रपद्यां व्रतोद्यापनमादरात् । कर्तव्यमतियत्नेन द्रव्यं संपाद्य सादरम् । हैमी कार्या सार्द्धषड्भिः प्रतिमा
च पलैः शुभा ॥ तदर्द्धेनाथवा कार्या तदर्धेनाथवा नृप । रजतेनाथवा कार्या यथोक्तपलमानतः ॥ संपादनीयाः कुंभाश्च हैमाः
पंचदशोत्तमाः । अथवा राजताः कार्या यद्वा ताम्रमया नृप ॥ भाद्रशुक्लचतुर्दश्यां शैवा ब्राह्मणपुंगवाः । निमंत्रणीया यत्नेन प्रा-
त: सप्तदशोत्तमाः ॥ ततो गृहं वितानाद्यैरलंकृत्य प्रयत्नतः । स्वस्तिकाद्यैरलंकुर्याच्छिवस्थानं शुभावहम् ॥ ततः सायं प्रयत्नेन
तस्मिञ्छंकरमंदिरे । पूजनीयाः प्रयत्नेन शिवयोः प्रतिमे शुभे ॥ पूर्वोक्तेन विधानेन मंत्रैस्तैर्वरसाधनैः । रात्रौ जागरणं कार्यं सो-
पवासं प्रयत्नतः ॥ ऋत्विग्भिः सह सोत्साहं पयोमात्राशनेन वा । रात्रौ शिवकथा श्राव्या श्रोतव्या यत्नतो नृप ॥ कर्तव्या

परनतो रात्रौ पूजा यामचतुष्टये । तत स्थैर्यं प्रयत्नेन स्नात्वा शंकरसन्निधौ ॥ पूजनीयः प्रयत्नेन शिवो देवशिखामणिः । चतुरस्रं ततः कार्यं कुंडमष्टदलान्वितम् । तत्र वन्हिं प्रतिष्ठाप्य विधिवद्गृह्यमार्गत । साज्येन परमान्नेन होमः कार्यस्ततःपरम् ॥ पंचविंशतिसाहस्रं होमः सोमेति मंत्रतः । कार्यः प्रयत्नतो राजन्प्रः पूर्वः शिवे रतः । ततः पूर्णाहुतिं कृत्वा शैवान्संपूजयेत्ततः । बिल्वपत्रै पुष्पमाल्यैर्भस्मना च यथाक्रमम् । एकैकस्मै प्रदातव्य शिवयोः प्रतिमाद्वयम् । कलशोपि प्रदातव्यस्ततो वस्त्रद्वयान्वितः ॥ आचार्याय प्रदातव्यं सुवर्णं शतमादरात् । ततो यत्नेन शैवेंद्राः पूजनीयाः कृतव्रतैः ॥ सुवासिन्योपि शैवानां भोजनीयाः प्रयत्नतः । ततो देयाः स्वशक्त्या च भोजितेभ्यश्च दक्षिणाः ॥ ततश्च स्वकृत कर्म शिवाय च निवेदयेत् । उद्यापने कृत शंभो मयैतदधुना प्रभो । इदं संपूर्णतां यातु त्वत्प्रसादान्महेश्वर ॥ मंत्रहीनं भक्तिहीनं शक्तिहीनमुमापते । कृतं कर्म भवत्वद्य त्वत्प्रसादात्फलप्रदम् । प्रायश्चित्तं वैदिकानां व्यंगानामपि कर्मणाम् । शिवस्मरणमेवेति श्रुतिरप्यस्ति शांकरी ॥ अतः कृतमिदं श्रौतं कर्म व्यंगमपि प्रभो । सांगं भवतु विश्वेश तवैव स्मरणात्प्रभो ॥ इति संप्रार्थ्य देवेशं सांबं सर्वसुरोत्तमम् । भुंजीयाद्बंधुभिः सार्द्धं समौनं तैलवर्जितम् ॥ एवं यः कुरुते सम्यगुमामाहेश्वरव्रतम् । स सर्वभोगान्भुक्त्वांते मोक्षमाप्नोति सर्वथा ॥ इति विधिः ॥ तत्रैव कथा ॥ राजोवाच । गौतमेदं व्रतं चीर्णं पुरा केन वदस्व मे । कस्य वा समभूत्सिद्धिर्व्रतस्यास्य प्रभावतः १ गौतम उवाच । पुरा शैववरो राजन्दुर्वासाख्यो मुनीश्वरः । कदाचित्संचरंल्लोकान्ददर्श कमलापतिम् २ तत समागतं दृष्ट्वा दुर्वासा मुनिसत्तमः । बिल्वमालां ददौ तस्मै शंकरेण समर्पिताम् ३ गृहीत्वा बिल्वमालां तां हरिर्गमनसंभ्रमात् । शिरसा पूजनीयां तां गरुडे स विनिक्षिपत् ४ ततस्तं तादृशं दृष्ट्वा दुर्वासाः क्रोधमूर्च्छितः । हरिं शशाप मद्रुषा धिग्जन्मेति च संवदन् ५ मया शिवार्पिता दत्ता

माला तुभ्यमघापहा । सा कथं गरुडस्कंधे विनिक्षिप्ता त्वया हरे ६ गर्वस्य मूलभूतेयं लक्ष्मीस्तव विनश्यतु ७ वैकुंठस्याधिकारोऽपि तव मास्तु ममाज्ञया । निस्तेजस्कोऽवनीपृष्ठे संचराद्यावधि ध्रुवम् ८ इत्युक्त्वा स तु दुर्वासा ययौ लोकांतरं नृप । ततः पपात दुग्धाब्धौ लक्ष्मीर्विष्णुमनोहरा ९ उवास विपिने घोरे स्वकृतं कर्म संस्मरन् ॥ ततः कदाचिद्भूपाल मया तत्र गतं पुरा १० तदा मामागतं दृष्ट्वा पूजयामास मां हरिः । ततोऽश्रुपूर्णनयनः कृतांजलिपुटो हरिः ११ जगाद पूर्ववृत्तांतं स्वलक्ष्मीनाशकारणम् । ततोऽतिक्लांतचित्ताय विष्णवे व्रतमुत्तमम् १२ तत्पृष्टेन मया भूप कथितं सादरं शिवम् । ततो विलंबं विधिवच्चकार श्रद्धयान्वितः १३ ततः प्रसन्नो भगवान् हरये पार्वतीपतिः । ददौ लक्ष्मीं सगरुडां करुणानिधिरव्ययः १४ इदमेव व्रतं चीर्णमिंद्रेणापि हतौजसा । तेन प्राप्तस्ततः स्वर्गः स्वर्गभोगाश्च शाश्वतः १५ ब्रह्मणाऽपि पुरा चीर्णमिदमेव व्रतं नृप । नष्टा वागीश्वरी तेन संप्राप्ता दुर्लभापि सा १६ मुनिभिश्च पुरा चीर्णं व्रतमेतन्मुमुक्षुभिः । अस्य व्रतस्याचरणान्मुक्तिः प्राप्ता मुनीश्वरैः १७ इदं व्रतं प्रयत्नेन यः करिष्यति भक्तितः । तस्य सौभाग्यसंपत्तिर्भविष्यत्येव सर्वथा १८ यस्यास्त्यैश्वर्यभोगेच्छा मोक्षेच्छाऽप्यनपायिनी । यस्य सर्वाधिपत्येच्छा तेन कार्यमिदं व्रतम् १९ वैद्युतेनापि विप्रेण मोक्षार्थमतियत्नतः । कृतमेतद्व्रतं पूर्वं सर्वाभीष्टफलप्रदम् २० मुक्तिः प्राप्ता च तेनापि व्रतस्यास्य प्रभावतः । यं यं कामं समुद्दिश्य व्रतमेतदनुत्तमम् २१ यः करिष्यति तं कामं स समाप्नोति निर्मलम् । इदं व्रतं महेशेन समाख्यातमुमां प्रति २२ कुमाराय समाख्यातमुमयैतद्व्रतं शुभम् । नंदिकेशाय कथितं मया चैतद्व्रतं शुभम् २३ नंदिकेशेन कथितं दुर्वासामुनये ततः । दुर्वाससाऽपि कथितमगस्त्याय व्रतोत्तमम् । व्रतं च सागरे मह्यमगस्त्येन महात्मना २४ मयाऽतिक्लिन्नचित्ताय विष्णवे कथितं पुरा । तेन चीर्णं व्रतमिदं सर्वसाभौग्यदायकम् २५ ब्रह्मणे कथितं पूर्वमिदमेव व्रतं मया । तेन चीर्णं व्रतं सांगं वाणीप्रा-

र्थमादरात् २६ मुर्यायेंद्राय चंद्राय मयैतत्कथितं व्रतम्। तेश्च चीर्णं व्रतमिदं सर्वसौभाग्यदायकम् २७। कश्यपादिमुनिभ्यश्च कथितं व्रतमुत्तमम्। तेश्च चीर्णं व्रतं सम्यग्मुक्तिभुक्तिफलप्रदम् २८ भूप व्रतानि सत्येव बहूनि विविधानि च। तथाप्येतादृशं देव व्रतं नास्त्येव सर्वथा २९ भवानपि कुरु प्रीत्या भूपाल व्रतमुत्तमम् ३० इदं व्रतं शिवक्षेत्रे यः करिष्यति भक्तितः। तस्य सर्वार्थसंपत्तिर्भवत्येव न संशयः ३१ शिव उवाच। इत्येतद्वचनं श्रुत्वा स राजा प्रीतमानसः। सपुत्रः पूजयामास गौतमं शैवपुंगवम् ३२ ततो धर्मव्रतं चैवमुपदिश्य स गौतमः। पुनः सपूजितो राज्ञा स्वाश्रमं प्रतिसंययौ ३३ राजा सपुत्रस्तद्वाक्यादिदं माहेश्वराभिधम्। व्रतं चकार विधिवद्यथाक्रममतंद्रितः ३४॥ इति शिवरहस्ये उमामहेश्वरव्रतोद्यापनं संपूर्णम्॥ इदं कर्नाटके प्रसिद्धम्॥ अथाश्विनपौर्णमास्यां कोजागरव्रतम्॥ आश्विनपौर्णमासी परा ग्राह्या। अश्वयुजिकर्मणि पूर्वाह्णव्यापिनी देवकर्मत्वाद्ग्राह्या। अत्र कोजागरव्रते बहुव्यापिनिरात्रौ लक्ष्मीपूजनाक्षक्रीडाप्रधानत्वाद्रात्रिव्यापिन्येव कार्या। स्कांदे—अस्ति कोजागरं नाम व्रतानामुत्तमं व्रतम्। यत्कृत्वा समवाप्नोति जंतुर्लोकाननुत्तमान्। इति॥ अथ कथा॥ ऋषय ऊचुः। कार्तिकस्य उपांगानि व्रतानि कथयंतु नः। कृतेषु येषु भवति संपूर्णं कार्तिकव्रतम् १ वालखिल्या ऊचुः। आश्विने शुक्लपक्षे तु प्रवेशा चैव पूर्णिमा। तद्रात्रौ पूजनं कुर्याच्छ्रियो जागरपूर्वकम् २ नारिकेलोदकं पीत्वा अक्षक्रीडां समारभेत्। निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी ३ जगत्सु भ्रमती तस्या लोकचेष्टावलोकिनी। तस्मै वित्तं प्रयच्छामि यो जागर्ति महीतले ४ सर्वथैव प्रकर्तव्यं व्रतं दारिद्र्यभीरुभिः। एतद्व्रतप्रभावेण वलितोऽपि धनी भवेत् ५ ऋषय ऊचुः। वलितः मोच्यते कोऽसौ लब्धवा-

१ तस्यां पौर्णमास्याम्।

न्स कुतो व्रतम् । एतद्विस्तरतो ब्रूत वालखिल्यास्तपोधनाः ६ वालखिल्या ऊचुः । ब्राह्मणो वलितो नाम मागधः कुशसंभवः । नानाविद्याप्रवीणोऽसौ संध्यास्नानपरायणः ७ याचनं मरणं तुल्यं मन्यते स द्विजोत्तमः । गृहागतं स गृह्णाति नान्यद्याचयते क्वचित् ८ तस्य भार्या महाचंडी नित्यं कलहकारिणी । मद्भगिन्यः स्वर्णरौप्यालंकारादिविभूषिताः ९ नानामाल्यांबरधरा दृश्या देवांगना इव । अहं दरिद्रस्य गृहे पतिताऽस्मि दुरात्मनः १० लज्जा मां बाधतेऽत्यंतं ज्ञातीनां मुखदर्शने । धिगस्तु चैव विद्याया निर्धनस्य कुलस्य च ११ एवं वदति लोकेषु न करोति पतीरितम् । संकल्पं कृतवानेकं यद्यद्भर्ता वदिष्यति १२ विपरीतं करिष्यामि यावल्लक्ष्मीः प्रसीदति । भर्तः पाषाणबुद्धे त्वं चौर्यं कुरु नृपालये १३ आनीयतां धनं भूरि नोचेत्संताडयाम्यहम् । क्षणं रोदति नाश्नाति कदाचिद्बहु खादति १४ सा कपालं ताडयतीत्येवं क्लेशयते पतिम् । क्षंत्वा तस्यास्तु चरितं याचना दुःखभीतितः १५ नोवाच वचनं किंचिद्यथालाभेन तोषितः । एकस्मिन् श्राद्धपक्षे तु ह्युद्विग्नोऽभूद्द्विजोत्तमः १६ एकस्मिन्वत्सरे सर्वं श्राद्धसामग्रिकं गृहे । वर्तते गृहिणी चेयं न करिष्यति किंचन १७ इत्युद्विग्नमना विप्रो न भाषयति किंचन । चिंतयाविष्टमेवं तमाययौ मित्रमुत्तमम् १८ नाम्ना गणपतिख्यातं तस्मिन्नभ्यागते सति । नोवाच पूर्ववद्वार्तां मित्रे वचनमब्रवीत् १९ भो भो वलित चित्तं ते किमर्थं चिंतयान्वितम् । अवश्यं स्वधिया कृत्वा चिंतां ते निर्हराम्यहम् २० वलित उवाच । अधुना पितृपक्षे तु पितुः श्राद्धं समागतम् । सामग्रिकं चास्ति गृहे विपरीतकरी प्रिया ॥ कथं संपाद्यते श्राद्धमिति चिंतायुतोऽस्म्यहम् २१ गणपतिरुवाच । धन्योसि कृतकृत्योसि भार्या यस्येदृशी गृहे । ब्रूहि त्वं वैपरीत्येन भार्या कार्यं करिष्यति २२ वलितस्तु तथेत्युक्त्वा सायं भार्यामभाषत । अनर्थका-

स्यर्थमादरात् २६ सुपर्णाय चंद्राय मयैतत्कथितं व्रतम्। तैश्च चीर्णं व्रतमिदं सर्वसौभाग्यदायकम् २७ । कश्यपादिमुनिभ्यश्च कथित व्रत मुत्तमम् । तैश्च चीर्णं व्रत सम्यग्भुक्तिमुक्तिफलप्रदम् २८ भूप व्रतानि सन्त्येव बहूनि विविधानि च । तथाप्येतादृश देव व्रतं नास्त्येव सर्वथा २९ भवानपि कुरु प्रीत्या भूपाल व्रतमुत्तमम् ३० इदं व्रतं शिवक्षेत्रे य करिष्यति भक्तितः । तस्य सर्वार्थसंपत्तिर्भवत्येव न सशयः ३१ शिव उवाच । इत्येतद्वचन श्रुत्वा स राजा प्रीतमानसः । सपुत्रः पूजयामास गौतम शिवपुंगवम् ३२ ततो धर्मव्रतं चैवमुपदिश्य स गौतमः । पुन सपूजितो राज्ञा स्वाश्रम प्रतिसंययौ ३३ राजा सपुत्रस्तद्वाक्यादिदं माहेश्वराभिधम् । व्रतं चकार विधिवद्यथाक्रममतंद्रितः ३४ ॥ इति शिवरहस्ये उमामहेश्वरव्रतोद्यापन संपूर्णम् ॥ इदं कर्नाटके प्रसिद्धम् ॥ अथाश्विनपौर्णमास्यां कोजागरव्रतम् ॥ आश्विनपौर्णमासी परा ग्राह्या । अश्वयुजिकर्मणि पूर्वाह्णव्यापिनी देवकर्मत्वाद्ग्राह्या । अत्र कोजागरव्रते बहुव्यापिनिशात्रौ लक्ष्मीपूजनाक्षक्रीडाप्रधानत्वाद्रात्रिव्यापिन्येव कार्या । स्कांदे—अस्ति कोजागर नाम व्रतानामुत्तम व्रतम् । यत्कृत्वा समवाप्नोति जन्तुर्लोकाननुत्तमान् । इति ॥ अथ कथा ॥ ऋषय ऊचुः । कार्तिकस्य उपांगानि व्रतानि कथयंतु नः । कृतेषु येषु भवति संपूर्णं कार्तिकव्रतम् १ वालखिल्या ऊचुः । आश्विने शुक्लपक्षे तु भवेद्या चैष पूर्णिमा । तद्रात्रौ पूजन कुर्याल्लक्ष्म्यो जागरतिपूर्वकम् २ नारिकेलोदक पीत्वा अक्षक्रीडां समारभेत् । निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी ३ जगत्भ्रमति तस्यां लोकचेष्टावलोकिनी । तस्मै वित्तं प्रयच्छामि यो जागर्ति महीतले ४ सर्वथैव प्रकर्तव्य व्रत दारिद्र्यभीरुभिः । एतद्व्रतप्रभावेण वलितोपि धनी भवत ५ ऋषय ऊचुः । वलितः प्रोच्यते कोऽसौ कथवा

१ तस्यां पौर्णमास्याम् ।

वलित उवाच। द्यूतेन क्षीयते लक्ष्मीर्द्यूताद्धर्मो विनश्यति। मुधैतद्वदसे किं त्वं कथं लक्ष्मीः प्रसीदति ३९ कन्योवाच। भाषसे त्वं पंडितवत् कर्म तेऽस्ति तु मूर्खवत्। इषस्य शुक्लपूर्णायां द्यूताल्लक्ष्मीः प्रसीदति ४० द्यूतक्रीडां तु कृत्वैवं कौतुकं पश्य चैंदिरम्। इत्युक्त्वा ऽसौ तया नीतो क्रीडार्थं स्वस्य मंदिरे ४१ दत्त्वा तस्मै नारिकेरजलं भक्ष्यादिकं तथा। आरब्धं च तथा द्यूतं श्रीलक्ष्मीः प्रीयतामिति ४२ लापितानि च रत्नानि कन्याभिर्ब्राह्मणेन तु। कौपीनं लापितं स्वीयं ताभिर्निर्जितमेव तत् ४३ ब्राह्मणः क्रोधसंयुक्तो किं कर्तव्यं मया ऽधुना। उपवीतं लापयित्वा ततः स्वीयं कलेवरम् ४४ लापयिष्ये विनिश्चित्य ह्युपवीतं ललाप सः। ताभिर्जितं च तदपि शरीरं लापितं स्वकम् ४५ ततोऽर्द्धरात्रे संजाते लक्ष्मीनारायणावुभौ। आगतौ लोकचरितं द्रष्टुं विप्रं ददर्शतुः ४६ हीनोपवीतकौपीनं चिंतयाऽतिकृशीकृतम्। उवाच वचनं विष्णुः शृणु त्वं पद्मलोचने ४७ तव व्रतकरो विप्रः कथं जातः सचिंतकः। तस्मादेनं कुरु क्षिप्रं लक्ष्मीवंतं सुखान्वितम् ४८ इति विष्णुवचः श्रुत्वा पद्मया ऽसौ कटाक्षितः। बालाचित्तहरो जातस्तत्कालं मदनोपमः ४९ ततः कामेन संविद्धास्तास्तु या नागकन्यकाः। विप्राय वचनं प्रोचुः शृणु विप्र तपोधन ५० यद्यस्माभिर्जितस्त्वं च भर्ताऽस्माकं वचोनुगः। वयं त्वया निर्जिताश्चेद्यथेच्छसि तथा कुरु ५१ इति तद्वचनं श्रुत्वा तथा मेने स च द्विजः। क्रीडनात्ता जिताः कन्या गांधर्वेण विवाहिताः ५२ तासां रत्नानि ताश्चापि गृहीत्वा स्वगृहं ययौ। प्राप्तं चंडीतिरस्कारान्मयेदं भाग्यमुत्तमम् ५३ तस्मात्संमानिता चंडी सापि प्रीता बभूव ह। चकार स्वामिनश्चाज्ञामित्थं लक्ष्मीव्रतं त्विदम् ५४ बहुरात्रिव्यापिनी या साऽत्र पूर्णा विशिष्यते। तत्राराध्य महालक्ष्मीमिंद्रमैरावतस्थितम् ५५ उपवासं प्रकुर्वीत दीपान्दद्याच्च भक्तितः। लक्षं तदर्द्धमयुतं सहस्रं शतमेव वा ५६ घृतेन दीयते दीपान् तिलतै-

रके पंदि परश्व याद्यके पितुः २२ न स्यापिते धन यस्मान्मदर्थं तैस्तु पातकैः । तस्मान शीघ्र पाकं त्वं कुरु शुद्धे क्कोपि चेव् २४
ब्राह्मणा ये धूर्तकाराः शौचाचारविवर्जिताः । निर्मंत्र्यास्ते त्वयाऽभद्रे नोत्तमास्तु कदाचन २५ इति भर्तृवचः श्रुत्वा संभारस्तु महान्कृ
तः । निर्मंत्रितास्तु सद्विप्राः काले पाकः कृतस्तथा २६ विपरीतैरेवं वाक्यैः श्राद्धं संपादित तया । पिंडदान ततः कृत्वा भार्या वचन
मब्रवीत् २७ विसृज्य पिंडान्नीत्वा त्वं क्षिप गंगाजले शुभे । पिंडानीतांस्तथेत्युक्त्वा शौचकूपे व्यचिक्षिपत् २८ तच्छ्रुत्वा वनितो दुःखी
बभूवाकुलिताननः । क्रोधाद्विनिर्ययौ गेहात्संकल्पं कृतवानिति २९ लक्ष्मीर्यदि प्रसन्ना स्यात्तदान्नं भक्षयाम्यहम् । इति संकल्प्य सो वि
शो गहने निर्जने वने ३० एको धर्मनदीतीरे वृक्षवल्कलधारकः । त्रिंशद्दिनानि च तदा आगता त्विषपूर्णिमा ३१ काळीवंशसमुद्भूता
नागकन्याः सुलोचनाः । निवसंति वने तस्मिन्व्रत चक्रू समासये ३२ श्वेतीकृतं तु सुधया गृहं चंद्रगृहोपमम् । मंडलानि विचित्राणि
नानापिष्टैः कृतानि च ३३ पंचामृतानि रत्नानि दर्पणाच्छादनानि च । स्थापयित्वेंदिरापूजा कृता ताभिः प्रयत्नतः ३४ एव तु प्रथमो
यामो बालाभिर्नीत एव हि । प्रारब्ध च ततो द्यूतं तुर्यं तास्तु न लेभिरे ३५ चतुर्भिस्तु विना ऽक्षाणां क्रीडनं नैव जायते । तस्मान्न
यस्तु विचरन् विचार्यैव पुनर्गता । कन्यका तु नदीतीरे ददर्श वळितद्विजम् ३६ ज्ञात्वा त साधुचरितं सर्चित च मुखाह्वये । उवाच
वचनं चारु द्विज कोसि समागतः ३७ याचध क्रीडितुं द्यूतं लक्ष्म्याः प्रीतिकरं परम् । इत्य तद्वचनं श्रुत्वा वळितो वाक्यमब्रवीत् ३८

१ पातकरसैस्तैः त्रिभिरिरपर्थं । २ [ पश्चात् ] चतुर्भिर्विनाक्षक्रीडनं नैव जायते, तस्मात्तु [ तुरीया स्त्री पुरुषो वा ] मृग्यः पदे [ वा ] विचार्य [ इतस्ततः ] विचरन्, ग्ग [ वाग्य एव ] कन्यका नदीतीरे [ गता सती ] वनितद्विजं ददर्शोत्तमम्भयाः ।

र्वं एव हि ११ नोचेद्यानि च रत्नानि देवतानां समीपतः । गृहीत्वा तानि सर्वाणि कुर्वंतूपायनं मम १२ इत्याज्ञां तस्य शिरसि कृत्वा ते स-
र्वराक्षसाः । देवान्नागांश्च यक्षांश्च धृत्वा ऽस्याग्रे निवेदिताः १३ प्रणम्य सर्वदेवास्ते त्रिपुरं च व्यजिज्ञपुः । गृह्यतां दैत्यराजेंद्र यदस्माकं भवि-
ष्यति १४ वयं कृत्वा तु ते सेवां जीविष्यामो यथातथा । इति श्रुत्वा वचस्तेषामधिकारान्प्रचक्रिरे १५ तेषां स्त्रियः समानीता देववेश्याः सह-
स्रशः । एवं भास्करमुत्सृज्य सर्वे देवास्तदाज्ञया १६ चक्रुर्यथोक्तं दैत्यस्य द्वारस्थाः सर्व एव हि । सूर्यस्य निकटेऽप्युक्तं मद्वारे स्थीयतां सदा१७
तेनापि च तथेत्युक्त्वा तद्द्वारे संस्थितः क्षणम् । ददाह भुवनं सर्वं स्वकरैः क्षणमात्रतः १८ आदिष्टश्च ततस्तेन स्वेच्छया गम्यतामिति ।
ततो गतो ऽसौ भगवान् भुवनानि विभावयन् ॥ तदाज्ञां चक्रुर्देवा द्वारे तिष्ठंति वारिताः १९ कदाचित्तस्य गेहे तु नारदः स-
मुपाययौ । तेनापि पूजितो भक्त्या पप्रच्छ स्वं पराक्रमम् २० नारद उवाच । ईदृशो जयघोषस्तु केनापि न कृतो भुवि । अस्मिन्देशे
तु दैत्येंद्रः किमिदानीं निगद्यताम् २१ त्रिपुर उवाच । सर्वस्थानेषु मे कीर्तिर्न गता किं तु नारद । मया प्रस्थापिता दैत्याः सर्व एव इत-
स्ततः २२ नारद उवाच । यो यत्र च गतो दैत्यो जातस्तत्र विभुः स हि । तव नाम न गृह्णाति वक्ति च स्वपराक्रमम् २३ इति श्रुत्वा
मुनेर्वाक्यं सद्य एव हि दारुणः । क्रोधस्तस्य महाञ्जातः किं कर्तव्यं मया ऽधुना २४ विश्वकर्माणमाहूय वाक्यमेतदुवाच ह । शीघ्रं
कुरु त्रिधातूनां विश्वकर्मन्पुरत्रयम् २५ विमानतुल्यं यत्रेच्छा तत्र तच्च गमिष्यति । इति तस्य वचः श्रुत्वा त्वष्टापि च तथाऽकरोत् २६
रूपत्रयं समास्थाय त्रिपुरेषु समाश्रितः । नारदस्य तु वाक्येन दैत्या बंदीकृतास्तदा २७ पुरेणैकेन पाताले भ्रमते त्रिपुरासुरः । स्वर्गे
चापि पुरेकेण धरण्यां भ्रमते पुरा २८ कांश्चित्संताडयत्येवं संमारयति कानपि । ददाति केषां स्वामित्वं स्वेच्छाचारी महाबलः २९ तेनेत्थं

ष्ठेन या व्रती । रात्रौ जागरणं कुर्यान्नृत्यगीतपुरःसरम् ५७ यथा विभवतो देयाः पुरोवीथीषु दीपकाः । देवतायतने चैव आरामेषु गृहेषु
च ५८ ततः प्रभाते सुस्नातः संपूज्य च शतक्रतुम् । ब्राह्मणान्भोजयेत्क्षीरघृतशर्करपायसैः ५९ वासोभिर्दक्षिणाभिश्च सवस्त्रान् पूजयेद्वि
जान् । यथाशक्ति च दातव्या दीपाः स्वर्णविनिर्मिताः ६० एवं विधिं विनिर्वर्त्य ततः पारणमाचरेत् । व्रतस्यास्य प्रभावेण कल्पसंख्या
वसेद्दिवम् ६१ अप्सरोभिः परिवृतः स्वर्गलोके महीयते । इह चायुष्यमारोग्यं पुत्रपौत्रादिसंपदः ६२ एवं लक्ष्मीव्रतं कृत्वा न दरिद्रो
न दुःखभाक् । कथां श्रुत्वा विधानेन व्रतस्यापि फलं लभेत् ६३ ॥ इति सनत्कुमारसंहितायां कोजागरव्रतं संपूर्णम् ॥ ॥ अथ का
र्तिकपौर्णमास्यां त्रिपुरोत्सवः ॥ स च प्रदोषव्यापिन्यां कार्यः । वालखिल्या ऊचुः । कार्तिके पौर्णिमायां तु कुर्यात्त्रिपुरमुत्सवम् । दी
पो देयोऽवश्यमेव सायंकाले शिवालये १ त्रिपुरो नाम दैत्येन्द्रः प्रयागे तप आस्थितः । लक्षवर्षं तपस्तस्य त्रैलोक्यं सचराचरम् २ तत्त
पस्तेजसा जग्धुमारब्धं भुवनत्रयम् । नानादेवांगना देवैः प्रेषितास्तं विमोहितुम् ३ न तासां वशगः सोऽभूत्कंदर्पेणापि चर्पिताः । न
क्रोधमोहलोभानां वशो दैत्यो हि जायते ४ वरं दातुं ययौ ब्रह्मा नारदादिभिरन्वितः ५ ब्रह्मोवाच । वरं वरय भद्र ते संतुष्टोऽहं पिताम-
हः । तपसस्तु फले सिद्धे कः क्लेशं कुरुते जनः ६ त्रिपुर उवाच । अमरं कुरु मां ब्रह्मन् करोमि ह्यन्यथा तपः । दातुं शक्नोसि चेद्ब्रूहि
नो यथा गच्छ सत्वरम् ७ ब्रह्मोवाच । मयापि बाल मर्तव्यं इतरेषां तु का कथा । अवश्यं देहिनो मृत्युः संभाव्यं याचयस्व मे ८ त्रि
पुर उवाच । न मे मृत्युर्देवताभ्यो मनुष्येभ्यो निशाचरात् । न स्त्रीभ्यो न च रोगेण देहेनं वरमुत्तमम् ९ ब्रह्मापि वै तथेत्युक्त्वा सत्यलोकं
जगाम सः । एवं लब्धवरं ज्ञात्वा नानादैत्याः समाययुः १० तान्दैत्यानागतान्दृष्ट्वा आज्ञापयत दानवान् । अस्मद्विरोधिनो देवा हंतव्याः स-

रो दत्तो ह्युन्मत्तो ऽसौऽभवत्ततः४८ प्रददासि वरं कस्मात्पुनर्मारयसे कुतः । मदीयं नाशितंनैव कस्माद्वध्यो मयाऽसुरः४९ इति रुद्रवचः श्रुत्वा हताशास्ते सुरास्तदा । विषण्णांस्तान्सुरान्दृष्ट्वा विष्णुर्वचनमब्रवीत् ५० विष्णुरुवाच । त्वया प्रतिज्ञा लोकानां पालनाय सदाशिव । कृता ततः समायाताः शरणं सर्वदेवताः ५१ मया नानाविधं दुःखं ह्रीयते तु सदाशिव । एतद्दुःखं मया शक्यमपनेतुं यतो नहि ॥ अतस्त्वां याचयाम्यद्य देवान्बंधाद्विमोचय ५२ शिव उवाच । तव वाक्यं करिष्यामि सामग्री नास्ति मे हरे। ममापराधसहितं हनिष्यामि हि दानवम् ५३ विष्णुरुवाच । सामग्रीं हि करिष्यामि संग्रामार्थं सदाशिव । करिष्यति कथं दैत्यः शंभोरन्यायमेव सः ५४ इति विष्णुवचः श्रुत्वा हाकष्टमिति चाब्रुवन् । अत्रागतांश्च सोऽस्मान्हि शृणुयात्त्रिपुरासुरः ५५ न विलंबं मृतौ कुर्यात्किमिदानीं विधीयताम् । सुरान्म्लानमुखान्दृष्ट्वा नारदो वाक्यमब्रवीत् ५६ नारद उवाच । सामग्री क्रियतां शीघ्रमायाति त्रिपुरासुरः । विष्णुं पलायितं ज्ञात्वा क्व रुद्रोऽस्तीति लोकयन् ५७ शिव उवाच । मया न नाशितं तस्य यदि स्थास्यति मत्स्थले। योद्धुं तदावश्यमेव मया मार्यः सुदुर्मदः ५८ इति रुद्र वच श्रुत्वा समाश्वस्तास्तु देवताः । सामग्रीं विष्णुरकरोद्युद्धार्थं स तु धूर्जटेः ५९ बाणः स्वयं बभूवास्य वह्निः शल्यं बभूव ह । वायुस्तु-पुंखरूपो ऽभून्मैनाकश्च धनुस्ततः ६० स्यंदनं धरणी जाता वेदा जाता हयोत्तमाः । विधाता सारथिर्जातः पताका च दिवाकरः ६१ आतपत्रं च चंद्रोऽभूद्गणेशाद्याः पदातयः। ततो वेगात्समुत्पत्य नारदस्त्रिपुरं ययौ ६२ दृष्ट्वा नारदमायातं सत्कारैरर्चयच्च तम् । मुने पुराणि मे पश्य संत्यक्तानि सुरासुरैः। त्रैलोक्ये चाधुना जातं त्वत्कृपातो यशो मम ६३ इति तस्य वचः श्रुत्वा ललाटं कुट्टयन्मुनिः । तूष्णीमासीद्धसित्वैतद्वलोक्यासुरोऽब्रवीत् ६४ त्रिपुर उवाच। किमर्थमीदृशी चेष्टा मुने चाद्य कृता त्वया। मद्भाग्यसमभाग्यश्चेदस्ति कश्चिन्निगद्यताम् ६५ नारद उवा

पंचलक्षाणि सर्वेलोका उपद्रुताः । तदा देवान्समागम्य नारदो वाक्यमब्रवीत् २० नारद उवाच । पराक्रमं तु धिक्केस्तु देवेंद्र धिक् च ते
श्रिये । विचरंतु च भो देवा वधाय त्रिपुरस्य च २१ इत्थं मुनिवचः श्रुत्वा सलज्जो ऽभूदधोमुखः । पुनस्तं नारदः प्राह ब्रह्माणं शरणं व्रज
२२ तत उत्थाय देवेंद्रो गूढो देवगणैः सह । नारदेन समायुक्तः सत्यलोकं जगाम सः २३ तत्रापश्यत्स धातारमुवाच करुणं वचः २४
इंद्र उवाच । धातरस्मान् गतिर्नास्ति हननीयास्त्वया वयम् । नासाग्रसंस्थिताः प्राणास्त्रिपुरस्य तु शासनात् २५ इतींद्रस्य वचः श्रुत्वा ब्र-
ह्मा सेंद्रमुनीश्वरैः । युक्तो वैकुंठमगमद्यत्रास्ते मधुसूदनः २६ तत्र गत्वा महाविष्णुं प्रणिपत्य स्थिताः सुराः । अनुगृहीता दृक्पाताच्च ब्रह्मा
वाक्यमब्रवीत् २७ ब्रह्मोवाच । भगवन्देवदेवेश देवा याता विनाशकम् । त्रिपुरासुरनिर्दग्धान् किं देवांस्त्वमुपेक्षसे २८ विष्णुरुवाच ।
त्वयैव नाशित ब्रह्मन्दत्त्वा नानाविधा वराः । देवादिभ्य कथं तस्य मृत्युः संभाव्यते ऽधुना २९ न भासते विचारो मे तस्य मृत्योः सुरेश्व
राः । अस्ति कश्चिद्वधोपायो विचार्य करवाण्यहम् ४० इति श्रुत्वा वचो विष्णोः सर्वे क्षुब्धा तु कुंठिताः । यदा नोचुर्वचः किंचिन्नारदो वा
क्यमब्रवीत् ४१ नारद उवाच । देवाः कुरुत मा खेदमुपाय कथ्यते मया । एको [illegible] सृष्टिमध्ये न देवो न च मानुषः ४२ न राक्षसो
नैव दैत्यो न भूतो न पिशाचकः । नासौ पुमान्न च स्त्री स न जडो न च पंडितः ४३ नास्य तातो न वा माता न भ्राता भगिनी न
च । न चैव यस्य संतान स एनं मारयिष्यति ४४ ब्रह्मोवाच । एतादृशः क दृष्टोऽसौ सत्ये वाऽलीकमेव वा । इति ब्रह्मवचः श्रुत्वा प्रो
वाच जगदीश्वरः ४५ विष्णुरुवाच । अहो त्रैलोक्यकर्ता यो महादेवो वृषध्वजः । ब्रह्मन्कथ विस्मृतो ऽसौ स नः कार्यं करिष्यति ४६
इत्युक्त्वा सर्वे एवैते शंकरं शरणं ययुः।देवदेव महादेव दुष्टदैत्यनिबर्हण४७त्वामेव शरणं प्राप्ताः।त्रिपुरेण प्रतापिताः।।शिव उवाच।।ब्रह्मंस्त्वया च

दा । प्रदोषसमये राजन्न स दारिद्र्यमाप्नुयात् ॥ कार्तिक्या कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् । सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ।एतानि कार्तिके मासि नरः कुर्याद्व्रतानि च । इहलोके शरीरं स्वं क्लेशयित्वा फलं लभेत् ॥ न कार्तिकसमो मासो विष्णुसंतुष्टिकारकः । स्वल्पक्लेशैर्विष्णुलोकप्राप्तिकृन्नापरो भवेत् ॥ सनत्कुमार उवाच । इत्थं ते नैमिषारण्ये वालखिल्यैरुदाहृतम् । भास्करस्य मुखाच्छ्रुत्वा ततस्तानभिवाद्य च ॥ ययुः सूर्यस्य निकटे गायंतो भास्करस्तुतिम् । इत्येतत्सर्वमाख्यातं कार्तिकस्य व्रतोत्तमम् ॥ इति कार्तिकमासोद्यापनम् ॥ ॥ अथ बत्तिशीपौर्णिमाव्रतम् ॥ तत्र । मार्गशीर्ष सिते पक्षे पौर्णमास्यां शुचिव्रता । प्रातः शुक्लतिलैः स्नात्वा परिधायांबरं सती ॥ पूजासंभारमासाद्य पिष्टदीपं विधाय च । पुत्रसौभाग्यप्राप्त्यर्थं मध्याह्ने पूजयेच्छिवम् ॥ सा च मार्गशीर्षपौर्णिमा मध्याह्नव्यापिनी ग्राह्या । तिथ्यादि संकीर्त्य ममेहजन्मनि जन्मांतरे चाखंडसौभाग्यपुत्रपौत्रप्राप्त्यर्थं बत्तिशीपौर्णिमाव्रतं करिष्ये । तत्र निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं कलशाराधनं करिष्ये इति संकल्प्य पंचवक्त्रं त्रिनेत्रं च जटाखंडेंदुमंडितम् । व्यालयज्ञोपवीतं च भक्तानां वरदं शिवम् । ध्यानम् ॥ आगच्छ भगवन् शंभो सर्वालंकारभूषित । यावद्व्रतं समाप्येत तावत्त्वं सन्निधौ भव । आवाहनम् ॥ सिंहासनं स्वर्णपीठं नानारत्नोपशोभितम् । अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् । आसनम् ॥ त्रिपुरांतक देवेश सृष्टिसंहारकारक । पाद्यं गृहाण देवेश मया दत्तं हि भक्तितः । पाद्यम् ॥ चंदनाक्षतसंयुक्तं नानापुष्पसमन्वितम् । गृहाणार्घ्यं मया दत्तं ईश्वरः प्रति० । अर्घ्यम् ॥ तोयमेतत्सुखस्पर्शं कर्पूरेण समन्वितम् । शंभो शंकर सर्वेश गृहाणाचमनीयकम् । आचमनीयम् ॥ पयो दधि घृतं चैव मधु शर्करयायुतम् । पंचामृतेन स्नपनं करिष्ये भक्तवत्सल । पंचामृतस्नानम् ॥ मयानीतानि तोयानि गंगादीनां च हेमजैः । स्नानं तैः कुरु देवेश मम शांति-

च। कैलासे तु गतस्वाहं दैत्येंद्र शृणु वैभवं । महेश्वरस्य किं वाच्यं तल्लक्षांशोपि न त्वयि ६६ इति तद्वचनं श्रुत्वा नारदस्तु विदायितः । गृहीत्वा दैत्यसर्वास्तान्कैलासं त्रिपुरो ययौ ६७तत्र देवैर्महद्युद्धं जातं तत्र दिनत्रयं । पश्चाद्धरेण निहतस्त्रिपुरश्चैकबाणतः६८कार्तिक्यां पौर्णमास्यां तु स र्वे देवाः प्रतुष्टुवुः। तस्मिन्दिने सर्वदेवैर्दीपो दत्तो हराय च ६९ सर्वथैव प्रदेयोस्यां दीपस्तु हरतुष्टये । विंशतिसप्तशतकसहिता दीपवर्तयः७० दद्यादीपं पौर्णमास्यां सर्वपापैः प्रमुच्यते । पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रैपुरोत्सवः । दद्यादनेन मंत्रेण प्रदीपांश्च सुरालये ७१ कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरंति जीवाः । दृष्ट्वा प्रदीपं न च जन्मभागिनो भवंति नित्यं श्वपचा हि विप्राः ७२ कार्यस्तस्मात् पौर्णिमायां त्रिपुरस्य महोत्सवः । कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ७३ सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ७४ कार्तिक्यां तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम् ७५ ॥ इति सनत्कुमारसंहितायां कार्तिकपौर्णमास्यां त्रिपुरोत्सवकथा संपूर्णा ॥ ॥ अथ कार्तिकमासोद्यापनम् ॥ वालखिल्या ऊचुः । अथोर्जव्रतिनः सम्यगुद्यापनमथोच्यते । कृते उद्यापने सांगं व्रतं भवति निश्चितम् ॥ ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती । तुलस्या उपरिष्टात्तु कुर्यान्मंडपिकां शुभाम् । तुलसीमूलदेशे तु सर्वतोभद्रमेव च । तस्योपरिष्टात्कलशं पंचरत्नसमन्वितम् ॥ पूजयेत्तत्र देवेशं सौवर्णं गुर्वनुज्ञया । रात्रौ जागरणं कुर्याद्गीतवाद्यादिमंगलैः । ततस्तु पौर्णमास्यां वै सपत्नीकान् द्विजोत्तमान् । त्रिंशन्मितानथैकं वा स्वशक्त्या विनिमंत्रयेत् ॥ अतो देवा इति द्वाभ्यां होमयेत्तिलपायसम् । ततो गां कपिलां दद्यात्पूजयेद्विधिवद्गुरुम् ॥ एवमुद्यापनं कृत्वा सम्यग्व्रतफलं लभेत् । पद्मा तु पौर्णमास्यत्र यात्रायां पुष्करस्य च ॥ राधान्द्स्त्वा यतो विष्णुर्मत्स्यरूपोऽभवत्ततः । तस्यां दत्तं हुतं जप्तं तदक्षय्यफलं स्मृतम् ॥ कार्तिक्यां पौर्णिमायां तु विष्णुं नीराजयेत्स

द्विजवर्याय सहिरण्यं ददाम्यहम् । वायनम् ॥ अस्य व्रतस्य सिद्ध्यर्थं हिरण्यं पापनाशनम् । ददामि तुभ्यं विप्रेंद्र प्रणतोस्मि प्रगृह्यताम् ।
दक्षिणाम् ॥ महात्मन् गच्छ कैलासं वृषारूढो गणैर्युतः । आहूतस्तत्क्षमस्व त्वं प्रसीद सुमुखो भव । विसर्जनम् ॥ इति पूजाविधिः ॥
अथ कथा ॥ यशोदोवाच । कृष्ण त्वं सर्वदेवानां स्थितिसंहारकारकः । अवैधव्यकरं स्त्रीणां यथार्थं वद तद्व्रतम् १ श्रीकृष्ण उवाच ।
यशोदे साधु पृष्टोहं सौभाग्यप्राप्तये स्त्रियः । बत्तिशीनामविख्यातं पौर्णमास्यां व्रतं भवेत् २ तद्व्रतस्य प्रभावेण स्त्रीणां सौभाग्यदं भवेत् ।
अवैधव्यकरं नाम शिवप्रीतिकरं महत् ३ यशोदोवाच । केन चीर्णं व्रतमिदं मृत्युलोके कदा वद । विधानं कीदृशं देव येन शंभुः प्रसी-
दति ४ श्रीकृष्ण उवाच । कांतिकानाम नगरी प्रसिद्धा भुविमंडले । अनेकरत्नसंपूर्णा चंद्रहासेन पालिता ५ तत्रैवासीद्द्विजः कश्चिद्धनेश्वरे-
ति नामतः । तस्य भार्या शुभाचारा नाम्ना रूपवती सती ६ अनपत्यौ महाभागावुभौ तौ दुःखितौ सदा । तन्नगर्यां द्विजः कश्चिद्योगारूढो
द्विजो जटी ७ भिक्षां चकार सर्वज्ञस्तद्गृहं चाप्यवर्जयत् । तद्गृहे नैव भिक्षां स रूपवत्या समर्पिताम् ८ ययौ तटाकतीरं स भिक्षां प्रक्षाल्य-
त्पुनः । धनेश्वरेण तद्दृष्टं योगिना यत्कृतं शुभम् ९ धनेश्वर उवाच । भिक्षां गृह्णासि सर्वेषां गृहस्थानां द्विजोत्तम । कदापि मद्गृहे विप्र नायासि
वद कारणम् १० योग्युवाच । अपुत्रस्य गृहस्थस्य यदन्नमुपभुज्यते । पतितान्नसमं तत्तु न भोक्तव्यं कदाचन ११ धनेश्वरेण श्रुत्वैतदात्मानं
गर्हयन्बहु । धनधान्यसमृद्धिं च पुत्रहीनस्त्वहं प्रभो १२ इत्युक्तोऽसौ जटी प्राह गच्छाराधय चंडिकाम् । तस्य तद्वचनं गेहे भार्यायां वि-
निवेद्य च १३ तपसे निर्जगामासौ चंड्याराधनमाचरत् । उपवासैः षोडशभिः स्वप्ने चैवाह चंडिका १४ भो धनेश्वर गच्छ त्वं तव पु-

१ अत्र न जग्राहेति शेषः । २ धनधान्यसमृद्धिं च गर्हयन्निति पूर्वार्धेनान्वयः । पुत्रहीन इतीयं धनेश्वरोक्तिः ।

र्गृह्यताम् । स्नानम् ॥ श्वेतांबरयुगं देव सर्वकामार्थसिद्धये । अविकाकात देवेश मया दत्तं प्रगृह्यताम् । वस्त्रम् ॥ कुंकुमाक्तं सुरश्रेष्ठ क्षौम सूत्रविनिर्मितम् । उपवीतं मया देव भक्त्या दत्तं प्रगृह्यताम् । उपवीतम् ॥ काश्मीरजेन संयुक्तं कर्पूरागरुमिश्रितम् । कस्तूरिकासमायुक्तं चंदनं प्रतिगृह्यताम् ॥ चंदनम् ॥ प्रक्षालिताश्च धौताश्च तंदुलाश्च शिवप्रियाः । मया निवेदिता भक्त्या गृहाण जगदीश्वर । अक्षतान् । कमलैर्मालतीपुष्पैश्चंपकैर्जातिसंभवैः । बिल्वपत्रैर्महादेव करिष्ये तव पूजनम् । पुष्पाणि ॥ दशांगो गुग्गुलोद्भूतः सुगंधिश्च मनोहरः । आघ्रेयतामयं धूपो देवदेव दयानिधे । धूपम् ॥ कार्पासवर्तिनिर्मीतं घृताक्तं तिमिरापहम् । भक्त्या समाहृतं दीपं मया दत्तं प्रगृह्यताम् । दीपम् ॥ नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं च वरं देहि परत्र च परां गतिम् । नैवेद्यम् ॥ नैवेद्यमध्येपानीयम् । उत्तरापोशनम् । हस्तप्रक्षालनम् । पूगीफलमिति तांबूलम् ॥ इदंफलमिति फलम् ॥ वक्ष्यमाणषोडशनामभिः पूजयेत् । शंकराय त्रिनेत्राय कालरूपाय शंभवे । महादेवाय रुद्राय शर्वाय च मृडाय च । ईश्वराय शिवायेति भूतेशाय कपर्दिने । मृत्युंजयाय सोमाय शितिकंठाय शूलिने । दूर्वाः ॥ तेजोमयं सलक्ष्मीकं देवानामपि दुर्लभम् । हिरण्यं पार्वतीनाथ मया दत्तं प्रगृह्यताम् । दक्षिणाम् ॥ प्रसीद देवदेवेश चराचरजगत्प्रभो । वृषध्वज महादेव त्रिनेत्राय नमो नमः । नीराजनम् ॥ यानि कानि च पापानीति प्रदक्षिणा ॥ इमानि बिल्वपत्राणि पुष्पाणि विविधानि च । मया दत्तानि विश्वेश गृहाण वरदो भव । पुष्पांजलिम् ॥ नमोस्त्वनंताय सहस्रमू० । नमस्कारम् ॥ भवाय भयनाशाय महादेवाय धीमते । रुद्राय नीलकंठाय शर्वाय च नमो नमः । ईशानाय नमस्तुभ्यं पशूनां पतये नमः । गुणत्रयात्मने तुभ्यं गुणातीताय ते नमः । नमः प्रसीद देवेश सर्वकामांश्च देहि मे । त्वमेव शरणं नाथ क्षमस्व मयि शंकर । प्रार्थनाम् ॥ वायनं तु-उपायनमिदं तुभ्यं व्रतसंपूर्णहेतवे । वायनक

स च नोत्सहितः शिशुः ३३ उत्तिष्ठामीति संचिंत्य कस्य-भार्या भवेदियम् । ततस्त्वेकांतसमये निश्वासान्मुमुचे बहून् ३४ साऽब्रवीत्कथमेतस्मादन्यथा ब्रह्मसूत्रता । त्वं मे पतिरहं पत्नी देवाग्निद्विजसन्निधौ ३५ सोऽब्रवीन्मा कुरुष्वेदं ममायुः स्वल्पमेव च ॥ कन्योवाच । यथा तेपि गतिर्भूयात्सेयं मह्यं भवेदिति ३६ उत्तिष्ठ भो नमो नाथ क्षुधितोसि न संशयः ३७ प्रीत्या प्रीतिं तया सार्द्धं भुक्तवान्स द्विजस्तथा । अंगुलीयं ददौ तस्याः स्थानत्रयविभूषितम् ३८ देवदास उवाच । नवरत्नमयीं मुद्रां गृहीत्वाप्यंशुकं च सा । इति संकेतकं कृत्वा मद्वचः कुरु मे प्रिये ३९ मम संजीवनार्थाय कुरु जात्यादिवाटिकाम् । मनोरमाः पुष्पजातिसुगंधिनवमल्लिकाः ४० सिंच सिंच प्रतिदिनं क्रीडां कुरु यथासुखम् । यस्मिन्दिने तु मत्प्राणवियोगः समजायते ४१ तदा पुष्पाणां जातीनां प्राणत्यागो भविष्यति । पुनः संजीवितास्ताश्चेत्तर्ह्यहं जीवितो दृढम् ४२ कृष्ण उवाच । ततो ब्राह्मे मुहूर्ते तु निर्जगाम वरः पथि । अथ प्रभातसमये वाद्यनादो बभूव ह ४३ आकारिता च सा कन्या ब्रूते नायं पतिर्मम । यदि चायं पतिस्तात ब्रूयादेव मयार्पितम् ४४ मधुपर्के तथा कन्यादाने यद्भूषणादिकम् । कथयिष्यति चेत्तर्हि वृत्तांतं रात्रिभाषितम् ४५ इति कन्यावच श्रुत्वा उवाच स वरस्तदा । नैव जानामि तद्वक्तुं व्रीडितो निर्जगाम ह ४६ ततस्तु बालकः काशीमध्ययनार्थं गतः सुधीः । दिनानि कतिचिज्जग्मुः कालस्य वशमागतः ४७ ततः कृष्णो महानागो रात्रौ भक्षितुमागतः । परितः शयनात्तस्य दीपज्वालाभिरावृतः ४८ नैव शक्तस्तमत्तुं वै व्रतराजप्रभावतः । तन्मात्रा बत्तिशीनामपूर्णिमायां व्रतं कृतम् ४९ ततो मध्याह्नसमये काल एवागमत्स्वयम् । ततस्तु कालसंविद्धस्त्वर्धोदकनियुंजितः ५० शंकरोऽप्यगमत्तत्र भवान्या सह एव च । भवानी प्रार्थयामास दृष्ट्वाऽवस्थां तु तस्य ताम् ५१ भवान्युवाच । अस्य मात्रा कृतं पूर्वं बत्तिशीव्रतमुत्तमम् । तस्य प्रभावतः सो वै बालोऽयं जीव्यतां

ग्रो भविष्यति । स्वसामर्थ्यवशाद्देया दीपा वै पिष्टसंभवाः १५ एकैकवृद्ध्या दातव्या षोडशाद्वयपौर्णिमाः । इदं व्रतं स्वपत्न्यै त्वं कथय स्व यथास्थितम् १६ आरोह चाम्रमाशु त्वं फलमादाय सत्वरम् । स्वगृहं गच्छ भार्यायै देहि गर्भो भविष्यति १७ ततः प्रभातसमये सहकारमपश्यत । आरोढुं नैव शक्तः स चिन्ताव्याकुलमानसः १८ स्तुतिं चक्रे गणेशस्य दयां कुरु दयानिधे । मनोरथो ममैवास्तु त्वत्प्रसादाद्दयानिधे १९ इत्युक्त्वा च ततः शीघ्रं फलमादाय वेगतः । त्रिवारमावृत्तिं कृत्वा फलमेकं ददर्श सः २० वराल्लब्धं तदेवासीन्नान्यत्स्यादर्थनिश्चयः । आगत्य कथितं तच्च भार्यायै दत्तवान्फलम् २१ यदा तदा रूपवत्या भक्षितं गर्भमादधे । तदा देव्या प्रसादेन रूपौदार्यगुणान्वितः २२ तस्यास्तदाऽभवत्पुत्रो देवदासेति नामतः । व्रतवर्षं ततश्चक्रे विवाहं न करोति सः २३ मात्रा चाग्रहतः पृष्टो सोऽवदत्सर्वचेष्टितम् । ततस्तु देवयोगेन काश्यां नेयो मया शिशुः २४ इति बुद्धिस्तदा जाता तदाचक्रे धनेश्वरः । तमेषयन् सहाश्वेन मातुलेन सहैव च २५ कियति समतीतानि दिनानि पथि गच्छता । गच्छन्काशीपुरीं प्राप्तो भागिनेयेन संयुतः २६ कस्यचित्तत्र विप्रस्य मण्डपे प्राप्तवान्निशि । तस्मिन्दिने गृहस्वामी कन्यामुद्वाहयन्कृती । तैलादिरोपणं चक्रे कृत्वा वरनिवेशनम् २७ लग्नस्य समये प्राप्ते धनुर्वातयुतो नरः । वरपित्रादिभिर्येन विचार्य च पुनः पुनः २८ असौ कार्पटिको बालः सुंदरो मे सुतो यथा । सार्धं त्वनेन लग्नं वै करिष्यामः क्रमेण तु २९ इति निर्धार्य मनसा प्रार्थयामास मातुलम् । घटिकाद्वयपर्यंतं देहि त्वं भगिनीसुतम् ३० मातुल उवाच । मधुपर्के तथा कन्यादाने यद्यत्प्रदीयते । तदस्माकं यदि भवेच्चर्यसौ भवतां वरः ३१ यथा भवतु तेनोक्ता विधिर्वैवाहिकोऽभवत् । पाणिं जग्राहयामास वरेण च यथाविधि ३२ बभ्रा सार्धं [1] तथा भोक्तु

[1] परस्परं भक्तितोषयामासतुः ।

स च नोत्सहितः शिशुः ३३ उत्तिष्ठामीति संचिंत्य कस्य भार्या भवेदियम् । ततस्त्वेकांतसमये निश्वासान्मुमुचे बहून् ३४ साऽब्रवीत्कथमेतस्मादन्यथा ब्रह्मसूत्रता । त्वं मे पतिरहं पत्नी देवाग्निद्विजसन्निधौ ३५ सोऽब्रवीन्मा कुरुष्वेदं ममायुः स्वल्पमेव च ॥ कन्योवाच । यथा तेपि गतिर्भूयात्सेयं मह्यं भवेदिति ३६ उत्तिष्ठ भो नमो नाथ क्षुधितोसि न संशयः ३७ प्रीत्या प्रीतिं तया सार्द्धं भुक्तवान्स द्विजस्तथा । अंगुलीयं ददौ तस्याः स्थानत्रयविभूषितम् ३८ देवदास उवाच । नवरत्नमयीं मुद्रां गृहीत्वाप्यंशुकं च सा । इति संकेतकं कृत्वा मद्वचः कुरु मे प्रिये ३९ मम संजीवनार्थाय कुरु जात्या दिवाटिकाम् । मनोरमाः पुष्पजातिसुगंधिनवमल्लिकाः ४० सिंच सिंच प्रतिदिनं क्रीडां कुरु यथासुखम् । यस्मिन्दिने तु मत्प्राणवियोगः समजायते ४१ तदा पुष्पाणां जातीनां प्राणत्यागो भविष्यति । पुनः संजीवितास्ताश्चेत्तर्ह्यहं जीवितो दृढम् ४२ कृष्ण उवाच । ततो ब्राह्मे मुहूर्ते तु निर्जगाम वरः पथि । अथ प्रभातसमये वाद्यनादो बभूव ह ४३ आकारिता च सा कन्या ब्रूते नायं पतिर्मम । यदि चायं पतिस्तात ब्रूयादेव मयार्पितम् ४४ मधुपर्के तथा कन्यादाने यद्भूषणादिकम् । कथयिष्यति चेत्तर्हि वृत्तांतं रात्रिभाषितम् ४५ इति कन्यावच श्रुत्वा उवाच स वरस्तदा । नैव जानामि तद्वक्तुं व्रीडितो निर्जगाम ह ४६ ततस्तु बालकः काशीमध्ययनार्थं गतः सुधीः । दिनानि कतिचिज्जग्मुः कालस्य वशमागतः ४७ ततः कृष्णो महानागो रात्रौ भक्षितुमागतः । परितः शयनात्तस्य दीपज्वालाभिरावृतः ४८ नैव शक्तस्तमत्तुं वै व्रतराजप्रभावतः । तन्मात्रा वत्तिशीनामपूर्णिमायां व्रतं कृतम् ४९ ततो मध्याह्नसमये काल एवागमत्स्वयम् । ततस्तु कालसंविद्धस्त्वर्यौदकनियुंजितः ५० शंकरोऽप्यगमत्तत्र भवान्या सह एव च । भवानी प्रार्थयामास दृष्ट्वाऽवस्थां तु तस्य ताम् ५१ भवान्युवाच । अस्य मात्रा कृतं पूर्वं वत्तिशीव्रतमुत्तमम् । तस्य प्रभावतः सो वै बालोऽयं जीव्यतां

प्रभो ५२ तथैव कृतवास्तत्र भवानीप्रेमवत्सलः । तद्व्रतस्य प्रभावेण मृत्युनाऽपि निराकृतः ५३ आत्यादिपुष्पवाटिकां पत्रपुष्पविवर्जिता
म् । पुनः सजीवितां दृष्ट्वा पितरं कन्यकाऽब्रवीत् ५४ अनसत्र कुरुष्व त्वं जीवितस्य गवेषणे । पत्यर्थं कुरु भो तात काशीतो निरगात्तु
सः ५५ पुनस्तत्रैव संयातो यत्रोद्वाहोऽभवत्तदा । ज्ञात्वा च परमप्रीत्या देवदत्तोनयद्गृहम् ५६ ततो जनपदाः सर्वे इति ब्रूयुः परस्परम् ५७
जामाता देवदत्तस्य अयमेव न संशयः । बालया च तथा ज्ञातः सोपि संकेतमागतः ५८ प्रीत्या प्रचुरततः सर्वे साधु साधु समन्वितम् । उ
त्साहो ह्यभवत्तत्र निर्जगामाथ तत्पुरात् ५९ श्वशुरेण तथा वध्वा मातुलेन समन्वितः । स पितुः प्रेषयामास भवत्पुत्रः समागतः ६० ता
वूचतुः कुतोऽस्माकं दुर्भगानां तु पुत्रकः । कथितोऽन्यैरपि जनैस्ततः संहृष्टमानसः ६१ सुहृद्भिर्बान्धवैः सर्वैरानयामास बालकम् । ततो महो
त्सवं कृत्वा दत्त्वा च बहुदक्षिणाम् ६२ एवं स पुत्रवान् जातो धर्षिशीव्रतसेवया ६३ या कुर्वंति व्रतमिदं विधवा न भवति ता । ज-
न्मजन्मनि सौभाग्यं प्राप्स्यंति च वचो मम ६४ एतत्ते कथितं सर्वं पुत्रपौत्रप्रवर्द्धनम् । यं यं चिंतयते कामं तं तं प्राप्नोति निश्चितम्
६५ यशोदोवाच । उद्यापनविधिं ब्रूहि पूर्णिमायाः सुरेश्वर । भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे६६ कृष्ण उवाच । पौर्णिमामार्गशीर्ष
स्य माघवैशाखयोस्तथा । व्रतं प्रारभते तस्याः पौषमासे तु वर्जयेत् ६७उमया सहितो देवः पूजनीयो वृषध्वजः । उपचारैः षोडशभिरागमोक्तविधा
नतः ६८एकैकं दीपकं कृत्वा मासिमासि च दापयेत् ६९ एवं सार्द्धवर्षं सर्वं द्विमासावधि आचरेत् । ज्येष्ठस्य पूर्णिमायां च कुर्यादुद्यापनंततः ७० अ
थवाशुभमासस्य पूर्णिमायां समाचरेत्७१चतुर्दश्यामुपवसेद्रात्रौ पूजनमाचरेत् । अष्टहस्तप्रमाणेन मंडपं कारयेत्ततः ७२तन्मध्ये स्थापयेत्कुम्भम
व्रणं मृन्मयं नवं । तस्योपरि न्यसेत्पात्रं वैणवं वस्त्रवेष्टितं७३माषमात्रसुवर्णेन प्रतिमां कारयेत्सुधीः । तदर्धार्धेन वा कुर्या...

कृत्वा रूपं प्रयत्नेन पार्वत्याश्च हरस्य च । तत्पात्रे प्रतिमे स्थाप्य वृषभेण समन्विते ७५ पूर्वोक्तेन विधानेन सुपुष्पैश्चैव पूजयेत् ७६ धूपैर्दीपैश्च नैवेद्यैः फलैश्च विविधैः शुभैः । एवं पूजा प्रकर्तव्या रात्रौ जागरणं चरेत् ७७ गीतनृत्यादिसंयुक्तं कथापुस्तकसंयुतम् । ततः प्रभातसमये कृत्वा दानादिकाः क्रियाः ७८ पूर्ववदर्चयेद्देवं पश्चाद्धोमं प्रकल्पयेत् । स्वगृह्योक्तविधानेन कृत्वाऽग्निस्थापनं बुधः ७९ प्रारभेच्च ततो होमं पंचाक्षरमनुः स्मृतः । तिलैर्यवैस्तथाज्येन पृथगष्टोत्तरं शतम् ८० नमः शिवाय मंत्रेण उमाया इति नामतः । एवं समाप्य होमं तु आचार्यादीन्प्रपूजयेत् ८१ द्वात्रिंशद्वंधनैर्युक्तं वंशपात्रं मनोरमम् । द्वात्रिंशच्च महादीपैर्द्वात्रिंशच्च महाफलैः ८२ मातुर्लिंगं नारिकेलं जंबीरं खर्जुरीफलम् । अक्रोडं दाडिमं निंबं नारंगादिशुभानि च ८३ कर्कट्यादिशुभैः सर्वैर्ऋतुकालोद्भवैः शुभैः । द्वात्रिंशद्भिः फलैर्युक्तं सदीपं वस्त्रवेष्टितम् ८४ व्रीहीणामुपरि स्थाप्य आचार्याय निवेदयेत् । वाणकं तव तुष्ट्यर्थं ददामि गिरिजापते ८५ तत्र मंत्रः—महेशः प्रतिगृह्णातिमहेशोवैददाति च । महेशस्तारकोभाभ्यांमहेशायनमोनमः ८६ द्वात्रिंशद्ब्राह्मणांश्चैव द्वात्रिंशद्योषितस्तथा । अन्येभ्यो ब्राह्मणेभ्यश्च भोजनं षड्रसैः सह ८७ पुमान्वत्सयुतां धेनुमाचार्याय निवेदयेत् । पश्चात्पूर्णाहुतिं कृत्वा होमशेषं समापयेत् ८८ पश्चाद्भुंजीत यच्छेषं यद्देवब्राह्मणार्पितम् । इत्येवं पूर्णिमायास्तु उद्यापनविधिः स्मृतः ८९ इत्येतत्कथितं सर्वं व्रतस्योद्यापनं मया । याः कुर्वंति व्रतमिदं विधवा न भवंति ताः ९० इह भुक्त्वा तु विपुलान्कामान्सर्वान्मनोगतान् । स्वर्गमंते गमिष्यंति कुलकोटिशतैरपि ९१ इति भविष्यपु० कृष्णयशोदासंवादे द्वात्रिंशत्पूर्णिमाव्रतकथा सं० ॥ अथोद्यापनसंकल्पः ॥ तिथ्यादिसंकीर्त्य ममात्मनः इहजन्मनि जन्मांतरे च सकलसौभाग्यपुत्रपौत्रादिप्राप्त्यर्थं द्वात्रिंशत्पौर्णमास्याचरितव्रतस्य घृताक्तव्रीहियमदीपप्रज्वलनस्य संपूर्णफलावाप्त्यर्थं तदुद्यापनं करिष्ये । तदंगं गणपतिपूजनं स्वस्तिपुण्याहवाचन-

पापापवरण च करिष्य इति सङ्कल्पः ॥ ॥ अथ फाल्गुनपौर्णमास्या होळिकोत्सवः ॥ नृपमति नारदवचो भविष्ये— । नारद उवाच ।
अथ पञ्चदशी शुक्ला फाल्गुनस्य नराधिप । अभयं चैव लोकानां दीयतां परमेश्वर ॥ यथा ह्यशंकिनो लोका रमंति च हसंति च । दारुजानि
च खङ्गानि गृहीत्वा तु समुत्सुकाः ॥ योधा इव विनिर्यान्तु शिशवः संप्रहर्षिताः । सञ्चयं शुष्ककाष्ठानामुपलानां च सञ्चयम् ॥ तत्राग्निं वि-
धिवद्धुत्वा महामंत्रैश्च विस्तरैः । ततः किलकिलाशब्दैस्तालशब्दैर्मनोहरैः । तत्रे शब्देन सा पापा होमेन च समाकृता ॥-सा ढुंढारूपा राक्षसी ।
तत्रैव । सर्वदुष्टापहो होमः सर्वरोगोपशांतये । क्रियते ऽस्यां द्विजैः पार्थ तेन सा होळिका स्मृता ॥ तमग्निं त्रिःपरिक्रम्य गायंति च ह
संति च । जल्पंति स्वेच्छया लोका निश्शंकाः यस्य यन्मनः ॥ तत्र पौर्णिमा प्रदोषव्यापिनी ग्राह्या । तथा च पौर्णिमास्यां तु रजन्यां होळि
कोत्सवः । प्रतिपद्भूतभद्रासु याऽर्चिता होळिका दिवा ॥ संवत्सरं च तद्राष्ट्रं पुरं दहति सा द्रुतम् । प्रदोषव्यापिनी ग्राह्या पौर्णिमा फाल्गुनी सदा ॥
तस्यां भद्रामुखं त्यक्त्वा पूज्या होळी निशामुखे । निशागमेन पूज्येव होळिका सर्वथा जनैः ॥ दिनद्वये प्रदोषे तु व्याप्ता सा तु परैव हि । भद्रा-
यां दीपिता होळी राष्ट्रभंगं करोति वै ॥ नगरस्य च नैवेद्य तस्मात्तां परिवर्जयेत् ॥ दिनार्धात्परतो या स्यात्फाल्गुनी पौर्णिमा यदि । रात्रौ भद्रा-
वसाने तु होळिकां तत्र दीपयेत् ॥ राकायामह्न्यपूर्व्वे चतुर्दश्यां यदा भवेत् । होळीं भद्रावसाने तु निशीथेतिपि दीपयेत्–इति पुराणसमुच्च
याच्च । यत्तु–भद्रायां विहित कार्यं होळिकायाः प्रपूजनम् । गंधपुष्पैर्धूपदीपैर्नैवेद्यैर्दक्षिणाफलैः ॥ होळां तु नाममंत्रेण पूजयेच्च यथाविधि ॥योनि
नाम्ना च मन्त्रेण महाशब्दं तु कारयेत् ॥ तत्र किलकिलाशब्दैरन्योन्यमुच्चरेत्ततः । योषितानां श्रमं कुर्याद्योनिमंत्रेण पूर्वकम् ॥ योनिना मेव
मन्त्रं तु यो नरः पठ्यते सदा । न भवेत् तदा पीडा आयर्ष तु सम भवेत् ॥ मध्यरात्रिमतिक्रम्य निष्टेः पुच्छं यदा भवेत् । प्रदोषे व्याळये

वृद्धिं सुखसौभाग्यदायिनम् ॥ प्रदोषमध्यरात्र्यंतं होलिकापूजनं शुभम् । यदा तु पूर्वरात्रौ प्रदोषव्याप्त्यभावस्तत्सत्त्वं वा भद्रारहितकालो न प्राप्यते उत्तरदिने च प्रदोषे पौर्णिमाभावस्तदा पुच्छे कार्यम् । तथा लल्लः– पृथिव्यां यानि कार्याणि शुभानि ह्यशुभानि च । तानि सर्वाणि सिद्ध्यंति विष्टिपुच्छे न संशयः ॥ अस्मिन्नेव विषये उत्तरदिने पूर्णिमा सार्द्धयामत्रयमिता ततोधिका वा प्रतिपदश्च वृद्धिस्तदा पौर्णिमोत्तरं प्रतिपदि होलिका कार्या । नतु पूर्वेद्युर्विष्टिपुच्छे ॥ सार्द्धयामत्रयं पूर्णा द्वितीयदिवसे यदा । प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता – इति भविष्योक्तेः ॥ सा उत्तरदिने प्रदोषे एकदेशव्यापिन्यस्ति पूर्वरात्रौ च भद्रारहिता नैव लभ्यते तदोत्तरैव । यदा-पूर्वरात्रिर्भद्राव्याप्ता उत्तरे प्रदोषे च चंद्रग्रहणं तदा तत्र स्नात्वा कार्या ॥ सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत सुतकान्नं विवर्जयेत् ॥ फाल्गुनो मलमासश्चेच्छुद्धे मासि च होलिका ॥ पूजामंत्रस्तु– अस्टक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः । अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव ॥ इति होलिकानिर्णयः ॥ ॥ इति पौर्णिमाव्रतानि समाप्तानि ॥ ॥ छ ॥ अथामावास्याव्रतानि लिख्यंते ॥ ॥ तत्र भाद्रपदामावास्यायां कुशग्रहणम् । हेमाद्रौ उक्तं हारीतेन– मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः । अयातयामास्ते दर्भा नियोज्याश्च पुनः पुनः ॥ - नभः श्रावणः । दर्शांतपक्षेणेदम् । मदनरत्ने तु–मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ॥ इति कुशग्रहणी अमा ॥ ॥ अत्रैवामावास्यायां पिठोरीव्रतम् ॥ मध्यदेशे तु पोळाइति प्रसिद्धम् ॥ सा प्रदोषव्यापिनी ग्राह्या । यदा पूर्वरात्रौ प्रदोषव्याप्त्यभावस्तदा परा कार्या ॥ अथ व्रतविधिः ॥ प्रातः नित्यकृत्यं विधाय मासपक्षाद्युल्लिख्य ममेहजन्मनि ज-

१ मासे नभस्येऽमावास्या तस्यामिति च पाठांतरोपलब्धिः । तत्र, नभस्यः भाद्रपदः ।

न्मांतरे वा पुत्रपौत्रफलावाप्त्यर्थं पिठोरीव्रतं करिष्ये इति संकल्प्य संध्याकाले स्नात्वा प्रदोषसमये देवीं संपूज्य षोडशोपचारैर्ब्राह्मणं सुवासिनीं संभोज्य पश्चात्स्वयं भुंजीत ॥ इति विधिः ॥ नमोदेव्यै इति मंत्रेण षोडशोपचारैः पूजनं कुर्यात् ॥ अथ कथा ॥ इंद्राण्युवाच । अपुत्रा लभते पुत्रं परत्र च महत्फलम् । व्रतानां परमं श्रेष्ठं कथय त्वं हि पार्वति १ पार्वत्युवाच । प्राचीनः श्रीधरो विप्र अष्टपुत्रो धनेश्वरः । तस्य भार्या सुमित्रा च गृहधर्मेण वर्तते २ श्रीधरस्य सुतो ज्येष्ठः शंकरो नाम नामतः । तस्य भार्या विदेहा च मृतापत्याऽभवत्तदा ३ श्रीधरस्य पितुः श्राद्धे विदेहा च प्रसूयते । दुःखयुक्ता सुमित्रा च विदेहां परिवर्जयत् ४ दुःखयुक्ता वनं प्राप्ता मठमेकं ददर्श सा । सरित्प्रवाहा यत्र विदेहा तत्र सा गता ५ मठमध्ये स्थिता नारी पश्यंती च पुनःपुनः । कस्त्वेयमधुना प्राप्ता लक्षणान्वितसुंदरी ६ मठाधिपा विचार्यैवं विदेहामाह सत्वरम् । झोटिंगैर्यक्षवेतालैरनेकैः स्थीयते शुभे ७ त्वां ग्रसिष्यंति सकला गच्छ शीघ्रं यथागतम् ॥ विदेहोवाच । दुःखयुक्तां च मां चात्र भ्रमंतीं च वनांतरम् । मां ग्रसेयुस्तु पिशाचाः क्षेमं मम भवेत्कथम् ८ मठनार्युवाच । अत्रागत्य चतुःषष्टिदिव्ययोग्यादयस्त्विमाः । पूजनार्थं समायाता निशामध्ये शुभाः स्थिताः ९ तव कार्यं प्रकुर्वंति जीविष्यंति च बालकाः । बिल्वपत्रेषु गुप्ता त्वमधुना भव भामिनि १० छन्ना तत्र विदेहा च बिल्वपत्रेषु संस्थिता । क्षणेनैकेन झोटिंगा मठमध्ये समागताः ११ ज्ञात्वा मनुष्यगंधं च मठनारीमपृच्छत । कुतो मनुष्यगंधश्च मठगेहे समाश्रितः १२ निशामध्ये चतुःषष्टिदेव्यस्तत्र समागताः । अनेकैश्च महारत्नैः फलैर्नानाविधैरपि १३ निविष्टा मठदेवीं तामाख्यानं कुर्वंतेस्म हि । श्रावणस्य तु मासस्य कृष्णपक्षे कुहूतिथौ १४ पूजां कृत्वा चतुःषष्टिरतिथीन्पृच्छतेस्म हि । वदंतेस्म मनुष्या सा लता5थ प्रकटाऽभवत् १५ ममाद्यपितृमापन्नं मातमें ना

लकं मृतम् । तवाग्रे मृतमादाय स्थितास्मीति च बालकम् १६ मम गर्भाश्चतुःषष्टि सजीवाश्च भवंत्वितः । चतुःषष्टिस्ततस्तुष्टा ददुस्त-
स्यै शुभं वरम् १७ देव्य ऊचुः । श्रीधरस्य स्नुषा त्वं हि शंकरस्य च वल्लभा । पुत्रपौत्रयुता राज्यं भुक्त्वा पूज्या सुरालये १८ अष्टपुत्रा
भ वंत्वाशु विदेहे गम्यतां पुरम् । तत्र स्थितं च नैवेद्यं नारी त्वं प्रतिगृह्यताम् १९ आगता येन मार्गेण तेनैव पुनरेव हि । पुरांतरं स्थि-
ता गत्वा प्रविवेश स्वमंदिरम् २० श्रीधरश्च सुमित्रा च शंकरो बांधवैः सह । विदेहा चाष्टपुत्रैश्च युक्ता सा मंगलोत्सवैः २१ प्रापुर्मुदं म-
हाभागा देवीनां च प्रसादतः । द्विजमंत्रादिनिर्घोषैर्दुंदुभीपटहध्वनैः २२ मृगाक्षिमंगलाचारैर्मृदंगैर्नृत्यघोषकैः । तया संपूजिता देव्यश्चतुः
षष्टिः प्रकीर्तिताः २३ तद्व्रतं शृणु चेंद्राणि पिठोराख्यं कहूतिथौ । तासां स्मरणमात्रेण पुत्रपौत्रधनान्विता । नारी भवति चेंद्राणि शृणु
त्वं नामपूजनम् २४ दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी । प्रेताक्षी डाकिनी काली कालरात्रिर्निशाचरी २५ झंकरी रौद्रवेताली
भूतली भूतडांबरी । ऊर्ध्वकेशी विरूपाक्षी शुष्कांगी नरभोजनी २६ भट्टारी वीरभद्रा च धूम्राक्षी कलहप्रिया । राक्षसी घोररक्ताक्षी वि-
श्वरूपा भयंकरी २७ चंडिका वीरकौमारी वाराही मुंडधारिणी । सासुरी रौद्रझंकारी भाषिणी त्रिपुरांतका २८ भैरवी ध्वंसिनी क्रोधी
दुर्मुखी प्रेतवाहिनी । खट्वांगी दीर्घलंबोष्ठी मालिनी मंत्रयोगिनी २९ कालाग्निग्रहणी चक्री कंकाली भुवनेश्वरी । कटकी कीटिनी रौ-
द्री यमदूती करालिनी ३० घोराक्षी कार्मुकी चैव काकदृष्टिरधोमुखी । मुंडाग्रधारिणी व्याघ्री किंकिणी प्रेतभाषिणी ३१ कालरूपा च
कामाख्या उष्ट्राणी योगिपिठिका । महालक्ष्मी एकवीरा कालरात्री च पीठिका ३२ नमोस्तु वश्चतुःषष्टीदेवीभ्यः शरणं व्रजे । पुत्रश्री-
वृद्धिकामाहं भक्त्या संपूजिताः शुभाः ३३ एवमिंद्राणि कथितं पिठोराख्यं महाव्रतम् । भक्त्या कुर्वंति या नार्यः कृतकृत्या भवंति

ता ३४ सुखसौभाग्यसंयुक्तामतुःपश्यनाः प्रसादतः ३५ ॥ इति भविष्यपु० पिठोरीव्रतम् ॥ ॥ अथाश्विनकृष्णामायां गजच्छायापर्व ॥
अपरार्के यमः— हंसे करस्थिते या तु अमावास्या करान्विता । सा ज्ञेया कुंजरच्छाया इति बौधायनोऽब्रवीत् ।–हंसे सूर्ये, करे हस्ते, स्थि
ते सूर्ये सति ॥ तत्र स्नानं हुतं जप्तं दानं दद्यात्प्रयत्नतः । पितृभिः संप्रदास्यामि अक्षय्यमुपतिष्ठतु ॥ इति गजच्छाया ॥ ॥ अथ कार्तिकामा
वास्यायां लक्ष्मीव्रतम् ॥ वालखिल्या ऊचुः स्नात्वा प्रभातसमये ह्यमायां च मुनीश्वराः । नत्वा देवान्पितॄन् भक्त्या संपूज्याऽथ प्रणम्य च १
कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः । भोज्यैर्नानाविधैर्विप्रान् भोजयित्वा क्षमापयेत् २ दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् । ततः प्र
दोषसमये पूजयेदिंदिरां शुभाम् ३ कुर्यान्नानाविधैर्वस्त्रैः स्वच्छं लक्ष्म्याश्च मंडपम् । नानापुष्पैः पल्लवैश्च चित्रैश्चापि विचित्रितम् ४ तत्र संपूजये-
ल्लक्ष्मीं देवांश्चापि प्रपूजयेत् । संपूज्या देवनार्योऽपि बहुभिश्चोपचारकैः ५ पादसंवाहनं कुर्याल्लक्ष्म्यादीनां तु भक्तितः । अस्मिन्नहनि सर्वेऽपि विष्णु
नामोचिताः पुरा ६ बलिकारागृहाद्देवा लक्ष्मीश्चापि विमोचिता । लक्ष्म्या सार्धं ततो देवा जग्मुः क्षीरोदधौ पुनः ७ प्रसुप्ता बहुकालं ते सुखं
तस्मा मुनीश्वराः । रचनीयाः सूत्रगर्भाः पर्यंकाश्च सतूलिकाः ८ दुग्धफेनोपमैर्वस्त्रैरास्तृताश्च यथादिशम् । स्वापयेच्चान्सुरान्लक्ष्मीं वेदघो-
षसमन्वितः ९ लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्तांबुजोदरे । अतश्च विधिवत्कार्या तुष्ट्यै तु सुखसुप्तिका १० तदाऽस्य पद्मशय्यां यः पद्मसौ
ख्यविवृद्धये । कुर्यात्तस्य गृहं मुक्त्वा तत्पद्मा क्वापि न व्रजेत् ११ न कुर्वंति नरा ह्यत्र लक्ष्म्या ये सुखसुप्तिकाम् । धनचिंताविहीना
स्ते कथं रात्रौ स्वपंति हि १२ तस्मात्सर्वप्रयत्नेन लक्ष्मीं सुस्वापयेन्नरः । दुःखदारिद्र्यनिर्मुक्तः स्वजातौ स्यात्प्रतिष्ठितः १३ जातीपत्रं लवं
गैलाफलकर्पूरसंयुतम् । पाययित्वा गव्यदुग्धं सीतां दत्त्वा यथोचिताम् १४ लड्डुकांस्तस्य कुर्वीत तांश्च लक्ष्म्यै समर्पयेत् । अन्यच्चतुर्विधं

भक्ष्यं देशकालादिसंभवम् १५ सर्वं निवेदयेल्लक्ष्म्यै मम श्रीःप्रीयतामिति । दीपदानं ततः कुर्यात्प्रदोषे च ततोल्पकम् १६ भ्रामयन्स्वस्य शिरसि सर्वारिष्टनिवारणम् । दीपवृक्षास्तथा कार्याः शक्त्या देवगृहादिषु १७ चतुष्पथे स्मशाने च नदीपर्वतवेश्मसु ।वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च १८ वस्त्रैः पुष्पैः शोभितव्या राजमार्गस्य भूमयः । गृहेषु स्थापयेन्नानापक्वान्नानि फलानि च १९ नागवल्लीदलादीनि रचयित्वा च निक्षिपेत् । शोभां कुर्याद्राजमार्गे कमलैश्च विशेषतः २० तदभावेंबरादीनां कृत्वा तानि च शोभयेत् । एवं पुरमलंकृत्य प्रदोषे तदनंतरम् २१ ब्राह्मणान्भोजयित्वादौ संभोज्य च बुभुक्षितान् । लड्डूकापूपमंडाद्यैः शष्कुलीपूरिकादिकैः २२ अलंकृतेन गोक्तव्यं नववस्त्रोपशोभिना । ततोऽपराह्णसमये घोषयेन्नगरं नृप २३ अद्य राज्यं बलेर्लोका यथेच्छं क्रीड्यतामिति । यथेच्छं क्रीड्यतां बाला इत्यादेश्यं नृपेण तु २४ विलोक्य बालकक्रीडा नानासामग्रिसंयुताः । तेभ्यो दद्यात्क्रीडनकं ततः पश्येच्छुभाशुभम् २५ तैश्चेत्प्रदीपितो वह्निर्न ज्वालां मुच्यते यदा । महामारीभयं घोरं दुर्भिक्षं वाथ जायते २६ बालशोके राजशोकस्तेषां हृष्टे नृपे सुखम् । बालयुद्धे राजयुद्धं रोदने बालकैः कृते । अवश्यमेव भवति वर्षाद्राष्ट्रविनाशनम् २७ यष्टिकादिकृतानश्वान्यदा रोहंति बालकाः । तदा राज्ञो जयो वाच्यः परराष्ट्रं विमर्दयेत् २८ यदा क्रीडंति बालाश्चेल्लिंगं धृत्वा करादिषु । तदा प्रसिद्धनारीणां व्यभिचारः प्रजायते २९ अन्नं यदा गोपयंति क्रीडने बालका जलम् । दुर्भिक्षं वृष्ट्यभावश्च शीघ्रमेव प्रजायते ३० एवं बालकृतां चेष्टां बुध्वा चास्य फलं वदेत् । लोकैश्चापि पुरे रम्ये सुधाधवलिताजिरे ३१ गीतवादित्रसंजुष्टे प्रज्वालितसुदीपके । अन्योन्यप्रीतिसंयुक्ते दत्ततालनके जने ३२ तांबूलहृष्टहृदये कुंकुमाक्षतचर्चिते । दुकूलपट्टवसनैर्नैपथ्यैः स्वर्गहीरजैः ३३ मित्रस्वजनसंबंधिस्वज्ञातींश्च प्रपूजयेत् । बलिराज्ये प्रकर्तव्यं नरैर्वारांगनादिक-

म् ३४ अक्षक्रीडनकं चेतद्बलिराज्ये न दोषभाक् । आत्मनो यस्य सौख्यार्थं परदुःखाकरं कृतम् ३५ वारांगनादिगमनं स्पृश्यास्पृश्यादिभक्षणम् । अन्यांबरधृतिश्चापि धूताद्य च न दुष्यति ३६ एवं तु सर्वथा कार्यो बलिराज्ये महोत्सवः । जीवहिंसासुरापानमगम्यगमनं तथा ३७ चौर्यं विश्वासघातश्च पंचैतानि मुनीश्वराः । बलिराज्ये तु नरकद्वाराण्युक्तान्यतस्त्यजेत् ३८ ततोऽर्द्धरात्रसमये स्वयं राजा व्रजेत्पुरम् । अवलोकयितुं रम्यां पद्भ्यामेव शनैः शनैः ३९ महतातूर्यघोषेण ज्वलद्भिर्हस्तदीपकैः । हर्म्यशोभाघ्रस्त पावत्कृतकेरम्बकैर्नरैः ४० बलिराज्यप्रमोदं च दृष्ट्वा सपुरमाव्रजेत् । एवं गते निशीथे च जने निद्रार्द्धलोचने ४१ तावन्नगरनारीभिः शूर्पडिंडिमवादनैः । निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगणात् ४२ ये वैष्णवा वैष्णवा वा बलिराज्योत्सवं नराः । न कुर्वंति वृथा तेषां धर्माः स्युर्नात्र संशयः ४३ दर्शैकरजनीयोगे दर्शः स्यात्तु परेहनि । तदा विहाय पूर्वेद्युः परेह्नि सुखरात्रिका ४४ इति लक्ष्मीव्रतं संपूर्णम् ॥ अथ मार्गशीर्षामावास्यायां गौरीतपोव्रतम् ॥ सूत उवाच । इंद्राणी प्रांजलिर्भूत्वा स्वपतिं वाक्यमब्रवीत् । एकव्रतं समाचक्ष्व पुत्रपौत्रसुखप्रदम् । इति वाक्यं तदा श्रुत्वा उवाच वचनं शचीम् । शृणु चार्वंगि सकलं यन्मया सुकृतं कृतम् ॥ बृहस्पतेस्तु जनकः श्रेष्ठ माहांगिराः सुधीः । तद्व्रतं कथयाम्यद्य सद्यः सुखकरं परम् ॥ पतिपुत्रसुखावाप्तिर्जायते जगति स्थिरा । गौरीप्रीत्यर्थमेवादौ स्त्रीभिर्यत्क्रियते तपः ॥ गौरीतप इति ख्यातं तस्मात्तद्व्रतमुत्तमम् । तस्मात्स्त्रिया तपोभिश्च तोषणीया शिवप्रिया ॥ आदौ मार्गशिरे मासि ह्यमावास्यादिने शुभे । गृह्णीयान्नियमं मंत्र दंतधावनपूर्वकम् । उपवासस्य नक्तस्य गौरीशप्रीतये मुदा ॥ हे शार्ङ्गांगस्थिते देवि करिष्येहं व्रतं तव । पतिपुत्रसुखावाप्तिं देहि देवि नमोस्तु ते– नियममंत्रः ॥ ततो मध्याह्नसमये स्नात्वा नद्यादिषु व्रती । सूर्यायार्घ्यं ततो दत्त्वा ध्यात्वा गौरीश्वरं हरम् ॥ अहं देव व्रतमिदं कर्तुमिच्छामि शाश्वतम् । तवाज्ञया महादेव तत्र निर्वहणं

कुरु ॥ उक्त्वैवं नियमं गृह्णन्वर्षाण्येव तु षोडश । गृहमागत्य पूजार्थमुपचारान्प्रकल्पयेत् ॥ शिवालयं ततो गत्वा शिवं संपूजयेत्सुधीः ।
गौरीमभ्यर्चयेत्पश्चाद्विधिना येन तं शृणु ॥ पार्वती तु ततः पादौ जान्वोर्डैमवतीति च । जंघयोरंबिकेत्येवं गुह्यं गिरिशवल्लभा ॥ नाभिं गंभी-
रनाभीति अपर्णेत्युदरं पुनः । महादेवीति हृदये कंठे श्रीकंठकामिनी ॥ मुखे षण्मुखमातेति ललाटे लोकमोहिनी । मेनकाकुक्षौ रक्षेति शि-
रस्यभ्यर्चयेत्ततः ॥ दक्षिणे गणपः पूज्यो वामे स्कंदः सवाहनः । धूपदीपादिनैवेद्यं कृत्वा नत्वा प्रदक्षिणाम् ॥ फलेनार्घ्यं ततो दत्त्वा-
ध्यात्वा देवीं महेश्वरीम् । कृत्वा ताम्रमयं पात्रं मृन्मयं वैणवं तथा ॥ अष्टतंतुमयीं वर्तीं तस्मिन्पात्रे निवेशयेत् । घृतेनापूर्य गव्येन तत्पा-
त्रं विमलेन च ॥ दीपमुज्ज्वालयेत्पश्चाद्यावत्सूर्योदयो भवेत् । एवं संक्षिप्य तां रात्रीं जागरेण समन्वितान् ॥ ब्राह्मे मुहूर्ते चोत्थाय पूजये-
द्द्विजदंपती । कुर्याद्दौर्भाग्यदलिनीं पापाग्निशमनी तदा ॥ पक्वान्नेन गुडान्नाद्यैः पूर्णापूर्णफलप्रदाम् । ऋतूद्भवैः फलैश्चैव पूरिकातिलतंडु-
लैः ॥ सौभाग्याष्टकसंयुक्तं पात्रं कुर्याच्च धातुकम् । तस्योपरि स्थितं दीपं पूजयेत्तिथिनामतः ॥ सुवासिनी वचो ग्राह्यं दीपं सूर्याय दर्श-
येत् ॥ यावत्कलकलाशब्दं कुर्वते बककाककाः । तावत्पुरस्तात्कर्तव्यं कीर्तनं च तदग्रतः ॥ उत्तिष्ठंते यदि नगाद्विहंगाश्चारुलोचने । तदा-
कर्णनमात्रेण सौभाग्यं व्रजति स्त्रियाः ॥ अतएव व्रते नारी पश्चादुत्थापयेच्च तान् । तिथिमेकां समाप्यैवं दंपती भोज्य शक्तितः ॥ परिधा-
य स्वलंकृत्य वासोभिर्भूषणांजनैः । माल्यैः सुगंधैर्विविधैः फलसिंदूरकुंकुमैः ॥ संतोष्य समनुज्ञाप्य स्वयं भुंजीत बंधुभिः । एवं द्वितीये
वर्षे च नंदाद्याश्च चरेत्तिथिः ॥ वर्षे वर्षे क्रमादेवं द्वीतीयादिषु चाचरेत् । एवं षोडश वर्षाणि कृत्वैतद्व्रतमुत्तमम् ॥ पश्चादुद्यापनं कुर्याद्व्रतसंपूर्ण-
हेतवे ॥ मार्गशीर्षेथ संप्राप्ते मासे गौरीश्वरप्रिये । पौर्णमास्यां दिने रम्ये निमंत्र्य द्व्यष्टदंपतीन् । मध्याह्नेष्टदले पद्मे गौरीं नारीसमर्चयेत । यथोक्तेन

विधानेन पुष्पधूपादिभिस्तथा । सोहलीभिश्च कासारैः पूपापूपैश्च भामिनि । पायसेन घृतेनापि शर्करामोदकैस्तथा । पूरयित्वार्धेष्टसख्यान् धातुमृन्मयसंकटान् । दंपतीन्भोजयित्वा तु तेभ्यो दद्याद्यथाविधि ॥ अलंकृत्य यथाशक्त्या गौरीमेमीयतामिति । गुरवे दक्षिणोपेतां गौरीं कनकनिर्मिताम् ॥ दद्याद्धेनु सवत्सां च दक्षिणावस्त्रसंयुताम् । अन्यान्यपि यथाशक्त्या दद्याद्दानानि भामिनि ॥ यद्यदिष्टतमं लोके तत्तद्देयं द्विजन्मने । चापल्यं मानुषो ज्ञात्वा सपत्स्वपि च सुदरि । षोडशाब्दव्रतमिदं कुर्यादर्थे हि भक्तितः ॥ गौरीतपोव्रतमिदं या करोतीह भामिनी । बाल्ये यौवनकाले वा वार्धके वा हरिप्रिये ॥ तस्याः सौभाग्यमतुलं धनधान्यसुतान्वितम् । भवेदव्याहतैश्वर्यं भर्तृसौख्यं न संशयः ॥ दुर्लभं मानुषं जन्म तत्रापि द्विजजन्मता । सदाचारपरत्वं च तत्रापि तु विशिष्यते ॥ एवं चारत्रय या स्त्री कुरुते व्रतमुत्तमम् । मातापित्रोः प्रिया चापि प्राप्नुयात्कुलवंशताम् ॥ निर्मलं जन्मनो वापि मनसश्चापि संपदः । लभते शुभतेजश्च पतिपुत्रसमन्विता । इह भोगान्यथाकामं भुक्त्वा स्वर्गमवाप्नुयात् ॥ इत्यगिरोवचनमाप्यपुरा पुराणं गौरीतपोव्रतमिदं विदधे यथेच्छम् । तस्य प्रभाववशतः सुलभं स्वराज्यं सौख्यं हि सर्वमतुलं पतिपुत्रयुक्तम्—इति ॥ निलाद उवाच । उद्यापनविधिं वक्ष्ये व्रत सांगं मवेद्यथा । सुरासुरमुनीनां च दुर्लभं तद्विधिं शृणु ॥ पर्वण्याश्वयुजस्यांते पायसं च घृतप्लुतम् ॥ नक्तं भुंजीत शुद्धात्मा ओदनं चैक्षवान्वितम् ॥ आश्वयुजस्यांते कार्तिके पर्वणि, अमावास्यायां कार्तिकति दर्शे इत्यर्थः, ऐक्षवं इक्षुरसः ॥ शर्वर्यंते शुचिर्भूत्वा बिल्ववनं दंतधावनम् । भुक्त्वा चैतन्महादेवं नत्वा भक्तियुतो व्रती ॥ अहं देवव्रतमिदं कर्तुमिच्छामि शाश्वतम् । तवाज्ञया महादेव तत्र निर्वहणं कुरु ॥

१ पमार्के तु मत्रेव गौरीतपोव्रतसमाप्तिः, अतःपरं निलादोक्तया महाव्रतापरनामकं व्रतमुक्तं तत्र निलादोक्ती महाव्रतमहोबस्येनारोहविस्तरमिति विशेषो ग्रन्थदे ।

उक्त्वैवं नियमं गृह्णन्वर्षाण्येव तु षोडश । तिथीः प्रतिपदाद्यास्तु पारयिष्याम्यनुत्तमाः ॥ ततो मार्गशिरे मासि प्रतिपद्यपरे ऽहनि । उपवसेद्गुरुं पृष्ट्वा महादेवं स्मरन्मुहुः । महादेवं स्मरन्विप्रान्नभरेच्छान्नविग्रहान् । षोडशाष्टौ तदर्धं वा दंपतीश्च निमंत्रयेत् ॥ देवं च नक्तमासाद्य दीपान्प्रज्वाल्य षोडश । पशुनाथं महादेवं भक्त्या नत्वा निवेदयेत् ॥ आचम्य च गृहं गत्वा महादेवं स्मरन्क्षितौ । शुचिवस्त्रास्तृतायां तु निराहारो निशि स्वपेत् । अथोदये सहस्रांशोः स्नात्वा चादाय दीपकान् । नैवेद्यं स्नपनार्थं च गृह्य गच्छेच्छिवालयम् ॥ स्नापयेत्पंचगव्येन घृतेन तदनंतरम् । मधुना च तथा दध्ना भूयश्च पयसा तथा ॥ रसेन चाथ खंडेन फलैश्च स्नापयेत्पुनः । तिलांबुना ततः स्नाप्य पश्चादुष्णेन वारिणा ॥ लेपयेत्सुघनं पश्चात्कर्पूरागरुचंदनैः । एवं संपूज्य तं भक्त्या हेम प्रख्यैर्व्रजेद्गृहम् । -हेम सुवर्णपुष्पम् ॥ नानाफलैश्च संपूज्य दद्यान्नैवेद्यमेव हि । गृहं गत्वा यथान्यायं हिरण्यरेतसं विभुम् ॥ जातवेदं समाधाय तर्पयेत्तिलसर्पिषा । व्रतिनश्च तथाचार्यं मिथुनानि च भोजयेत् ॥ हेमवस्त्रादिदानानि यथाशक्त्या तु दापयेत् । एवं विसृज्य तान्सर्वान्सार्द्धं बंधुजनैः सह ॥ पीत्वादौ पंचगव्यं च हृष्टो भुंजीत वाग्यतः । यत्किंचिदेतदुद्दिष्टं महादेवमुदीरयेत् ॥ प्रारंभे च विधिं कुर्याद्दरिद्रो वा धनेश्वरः । वित्तसामर्थ्यतश्चैव प्रतिमासं ततश्चरेत् ॥ स्वल्पवित्तो ऽथवा कंश्चित्पुष्पादौ कार्तिकावधि । नक्तं कृत्वा त्वमावास्यां प्रागुक्तविधिना ततः ॥ प्रतिपद्यामुपोष्यैवं पंचगव्यं पिबेच्छुचिः । महादेवं स्मरन्सार्द्धं भक्त्या भुंजीत लिंगिभिः ॥ मासस्य कार्तिकस्यांते कृत्स्नं प्राग्विधिनाचरेत् । नंदायां च द्वितीयायां शुभतिथ्यामुपोषयेत् ॥ एवं पौषे तु संप्राप्ते प्रतिपन्नक्तमाचरेत् । द्वितीयाब्दे द्वितीयायामुपवासं समाचरेत् ॥ आददीत तिथिं चैकां मासे मासे तथापरम् । पूर्ववत्संत्यजेत्पौषं प्रत्यब्दं चैवमाचरेत् ॥ एवं षोडशवर्षे तु क्रमेणैवमुपोषयेत् । पूर्ववद्दे-

वमभ्यर्च्य कृशानु चाग्नि तर्पयेत् ॥ उमामहेश्वरप्रीत्यै दद्यात्तौ च द्विजाय च । संपूज्य हेमवस्त्राद्यैर्यथाशक्त्या तु दक्षिणाम् ॥ छत्रोपानहकुंभांश्च दद्यात्तेभ्यः पृथक्पृथक् । भोजयेत्तान्विसृज्यैव मिथुनानि च षोडश ॥ ब्राह्मणांश्च यथाशक्त्या भोजयेद्वेदपारगान् । एवं महाव्रत चैव ब्रह्मव्रस्याघमर्पणम् ॥ वाचकाः भावकाश्चैव श्रोतारो व्रतिनश्च ये । भवंति पुण्यसंयुक्तास्तद्भूताभिमुखाश्च ये ॥ इति श्रीहेमाद्रौ कालिकापुराणे गौरीतपोव्रत सोद्यापन संपूर्णम् ॥ ॥ अथ सोमवत्यमावास्याव्रतम् ॥ शस्तः—अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते । तीर्थे कपिलधारे ऽस्मिन् गंगायां पुष्करे तथा ॥ दिव्यांतरिक्षभौमानि यानि तीर्थानि सर्वश । तान्यत्र निवसिष्यंति दर्शे सोमदिनान्विते ॥ अमावास्या तु सोमेन सप्तमी भानुना सह । चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥ चतस्रस्तिथयः कृष्णा सूर्यग्रहणसन्निभाः । स्नानं दानं तथा श्राद्धं सर्वतत्राक्षय भवेत् ॥ तिथिवासरयोर्योगो यथाकाले भवेद्यदि । भान्वंते वाथ मध्याह्ने पुण्यकालः स नान्यथा ॥ अत्र विष्णुपूजनमुक्तम् । तत्र संकल्पः ॥ तिथ्यादौ संकीर्त्य, ममेहास्यां सोमवत्यमायां सकलपापक्षयार्थं पुत्रपौत्राद्यभिवृद्ध्यर्थं जन्मजन्मन्यवैधव्यसंततिचिरजीवितपरमसौभाग्यप्राप्तिकामा अश्वत्थमूले लक्ष्मीसहितब्रह्मशिवसहितविष्णुपूजां तदंगतया अमासोमपूजनमश्वत्थपूजनं च करिष्ये इति ॥ अथ पूजा ॥ शांताकारमिति ध्यानम् ॥ विश्वव्यापक विश्वेश कृपया दीनवत्सल । मयोपपादितां पूजां गृहाणेमां हि माधव । सहस्रशीर्षेत्यावाहनम् ॥ [ मूलानि ब्रह्मणो यस्य ऋग्वेदांगानि पल्लवाः । फलानि यज्ञशाखा च नारायण दयां कुरु ] सूर्यकोटिप्रभानाथ सर्वव्यापिन् रमापते । आसनं कल्पितं भक्त्या गृहाण पुरुषोत्तम । पुरुषएवेदमित्यासनम् ॥ नारायण जगद्व्यापिन् जगदानंदकारक । विष्णुक्रांतादिसंयुक्तं गृह्ण पाद्यं मयार्पितम् । एतावानस्येति पाद्यम् ॥ फलगंधाक्षतैर्युक्तं पुष्पपूगसमन्वितम् ।

दयां कुरु ] सूर्यकोटिप्रभानाथ ... विष्णुक्रांतादिसंयुक्तं गृह्ण पाद्यं मयार्पितम् । ...
जगव्द्यापिन् जगदानंदकारक ।

अर्घ्यं गृहाण भगवन् विष्णो सर्वफलप्रद । त्रिपादूर्ध्वमित्यर्घ्यम् ॥ कर्पूरैलालवंगादिशीतलं सलिलं प्रभो । रमारमण कृष्ण त्वमाचम्यं प्रतिगृह्यताम् । तस्माद्विराळेत्याचमनीयम् ॥ पंचामृतं मयानीतं पयो दधि घृतं मधु । शर्करागुडसंयुक्तं स्नानार्थं प्रतिगृह्यताम् । पंचामृतस्नानम् ॥ गंगा कृष्णा गौतमी च कावेरी च शतद्रुदा । ताभ्यः पानीयमानीतं स्नानार्थं प्रति० । यत्पुरुषेणेति स्नानम् ॥ पीतवासस्त्वयि विभो मया यत्समुदाहृतम् । वासः प्रीत्या गृहाणेदं पुरुषोत्तम केशव । तंयज्ञमिति वस्त्रम् ॥ उपवीतं सोत्तरीयं मया दत्तं सुशोभनम् । विश्वमूर्त्ते गृहाणेदं नारायण जगत्पते । तस्माद्यज्ञेत्युपवीतम् ॥ अश्वत्थ हुतभुग्वास गोविंदस्य पदाश्रय । अशेषं हर मे पापं वृक्षराज नमोस्तु ते । सूत्रवेष्टनम् ॥ मलयाचलसंभूतं घनसारं मनोहरम् । विलेपनं सुरश्रेष्ठ चंदनं प्रति० । तस्माद्यज्ञात्सर्वहुत इति गंधम् ॥ अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर । अक्षतान् ॥ तुलसीजातिकमलमल्लिकाचंपकानि च । पुष्पाणि हर गोविंद गृहाण परमेश्वर । तस्मादश्वेति पुष्पाणि ॥ वनस्पतिरसोद्भूतो गंधाढ्यो गंध उत्तमः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । यत्पुरुषेणेति धूपम् ॥ चक्षुर्द सर्वदेवानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण जगदीश्वर । ब्राह्मणोस्येति दीपम् ॥ भक्ष्यभोज्यलेह्यपेयचोष्यखाद्यं मयाहृतम् । प्रीतये परमेशस्य दत्तं मे स्वीकुरु प्रभो । चंद्रमामनसइति नैवेद्यम् ॥ मध्ये पानीयम् । उत्तरापोशनम् । इदंफलंमयादेवेति फलम् ॥ पूगीफलमिति तांबूलम् ॥ हिरण्यगर्भेति दक्षिणाम् ॥ त्वद्भासा भासते लोकः कोटिसूर्यसमप्रभ । नीराजयिष्ये त्वां विष्णो कृपां कुरु मम प्रभो । नीराजनम् ॥ मया कायेन मनसा वाचा जन्मशतार्जितम् । पापं प्रशमय श्रीश प्रदक्षिणपदेपदे । नाभ्याआसीति प्रदक्षिणाम् ॥ व्यक्ताव्यक्तस्वरूपाय सृष्टिस्थित्यंतकारिणे । आदिमध्यांतरहित विष्टरश्रवसे

नमः । सप्तास्येति नमस्कारम् ॥ मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे । अग्रतः शिवरूपाय अश्वत्थाय नमो नमः । यज्ञेनयज्ञमिति पुष्पाञ्जलिम् ॥ नाममन्त्रेण अमासोमाश्वत्थपूजा ॥ अमायै च नमस्तुभ्यं सोमाय च नमोस्तु ते । उभयोः संगमे विष्णुपूजाफलमवाप्नुयात् ॥ अनेन षोडशोपचारैः प्रपूजयेत् ॥ ततः मूलतोब्रह्मरूपेतिमन्त्रेण अष्टोत्तरशतप्रदक्षिणा अष्टोत्तरशतरत्नधातुफलाद्यर्पणपूर्वका कार्याः । वायनम्–अमासोमव्रतस्यास्य संपूर्णफलहेतवे । वायनं द्विजवर्याय सहिरण्यं ददाम्यहम् । इतिवायनमंत्रः ॥ यन्मया मनसा वाचा नियमाद्यर्चनं कृतम् । सर्वं संपूर्णतां यातु तद्विष्णोश्च प्रसादतः–इति प्रार्थना ॥ ( इदंविष्णुरिति मंत्रेण पुरुषसूक्तेन वा तथा । षोडशोपचारैश्चाश्वत्थे विष्णुं प्रपूजयेत् ) साधारणपूजायां पौराणमन्त्रः–व्यक्ताव्यक्तस्वरूपाय सृष्टिस्थित्यंतकारिणे । आदिमध्यांतहीनाय विश्वरूपाय ते नमः । मूलतोब्र० नमोनमः ॥ इति मन्त्राभ्यां पूजाकार्या । ततःप्रदक्षिणाःकार्याः १०८ ॥ ॥ अथ कथा ॥ सूत उवाच । शरतल्पेगते भीष्ममुपगम्य युधिष्ठिरः । कृतप्रणामो धर्मात्मा हितं वचनमब्रवीत् १ युधिष्ठिर उवाच । हतेषु कुरुमुख्येषु भीमसेनेन कोपिना । तथा परेषु भूपेषु हतेषु युधि जिष्णुना २ दुर्योधन कुमन्त्रेण जातोऽस्माकं कुलक्षयः । न संति भुवि भूपाला बालवृद्धातुराहते ३ अवशिष्टा वयं पंच वंशे भारतसंज्ञके । एकातपत्रमपि च राज्यं मम न रोचते ४ जीविते मे जुगुप्सा स्यान्मृते न सुगतिः क्वचित् । दृष्ट्वा संततिविच्छेदं संतापो हृदयेनिशम् ५ अश्वत्थामास्त्रनिर्दग्धो ह्युत्तरागर्भसंभवः । अतो मे द्विगुणं दुःखं पितृविच्छेददर्शनात् ६ किं करोमि क्व गच्छामि पितामह यदाधुना । येन संपद्यते सद्यः संततिश्चिरजीविनी ७ भीष्म उवाच । शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । यस्य स्मरणमात्रेण संततिश्चिरजीविनी ८ अमावास्या यदा पार्थ सोमवारयुता भवेत् । तस्यामश्वत्थमागत्य पूजयेच्च जनार्दनम् ९ अष्टोत्तर शतं कार्यंत्रिप्र

न्वृक्षे प्रदक्षिणा । तावत्संख्यान्युपादाय रत्नधातुफलानि च १० व्रतराजमिदं राजन्विष्णोः प्रीतिकरं शुभम् । उत्तरां कारय प्राज्ञ गर्भो जीवमवाप्स्यति ११ भविष्यति गुणी पुत्रस्त्रिषु लोकेषु विश्रुतः । श्रुत्वा पितामहवचः प्रत्युवाच युधिष्ठिरः १२ युधिष्ठिर उवाच । तद्व्रतं व्रतराजाख्यं विस्तरेण प्रकाशय । केन प्रकाशितं मर्त्ये केनेदं विहितं विभो १३ भीष्म उवाच । आस्ते या सर्वविख्याता कांतिसंज्ञा महापुरी । रजताचलसंकाशसौधसंघैर्विराजिता १४ सुवेषैर्नागरजनैर्नारीभिरुपशोभिता । ब्रह्मक्षत्रियविट्शूद्रैः स्वस्वकर्मरतैर्वृता १५ रूपचातुर्यवर्याभिर्वेश्याभिः समलंकृता । अलकेव कुबेरस्य शक्रस्येवामरावती १६ तेजोवतीव रत्नाढ्या पावकस्य महापुरी । तत्र राजा रत्नसेनो बभूवामितविक्रमः १७ तस्मिन्वसति भूपाले जनानंदकरे शुभे । तस्य राज्येऽवसद्विप्रो देवस्वामीति विश्रुतः १८ तस्य स्त्री रूपसंपन्ना नाम्ना धनवती शुभा । यथार्थनामधेया सा लक्ष्मीरिव सविग्रहा १९ तस्यां संजनयामास सप्त पुत्रान्गुणान्वितान् । एकां दुहितरं रम्यां नाम्ना गुणवतीं नृप २० कृतदाराश्च ते पुत्रा विहरंति यथासुखम् । कन्या कुमारिका चासीदनुरूपप्रियार्थिनी २१ अत्रांतरे द्विजः कश्चिद्भिक्षार्थं समुपागतः । दीप्यमानः स्वतेजोभिर्मूर्तिमानिव पावकः २२ द्वारदेशमुपागत्य प्रयुयोजाशिषं तदा । देवस्वामिस्नुषाः सप्त समुत्थाय ससंभ्रमम् २३ भिक्षां प्रत्येकमानिन्युर्ददुस्तस्मै द्विजन्मने । अवैधव्याशिषः प्रादात्ताभ्यः सौभाग्यसंपदम् २४ ततो गुणवती मात्रा प्रहिता सहभिक्षया । विप्राय भिक्षां प्रददौ कृत्वा पादाभिवंदनम् ॥ आशिषं च ददौ विप्रः शुभधर्मवती भव २५ सा वै लक्ष्यं गुणवती श्रुत्वा प्रत्याययौ गृहम् । मात्रे निवेदयामास ह्याशिषं तेन योजिताम् २६ श्रुत्वा धनवती पुत्रीं करे धृत्वा समाययौ । प्रणतिं कारयामास पुनस्तस्मै द्विजन्मने २७ तथैवाशिषमुच्चार्य विप्रस्तामभ्यनंदयत् । श्रुत्वाशिषं धनवती सचिंता प्रत्युवाच ह २८ धनवत्युवाच । प्रसीद भगवन्विप्र वचनं मेऽन्यथा-

रय । स्नुषाभ्यः प्रणताभ्यो या त्वया दत्ता वराशिषः २९ अवैधव्यकराः पुत्रसुखसौभाग्यसाधकाः । सुताया प्रणतायां मे विपरीतं त्वयोदितम् ३० भद्रे धर्मवतीभूय इत्युदीर्य पुनः पुनः । आशीः प्रयुक्ता विप्रर्षे कारणं वद तत्त्वतः ३१ द्विज उवाच । धन्यासि त्वं धनवति प्रख्यातचरिता भुवि । यथायोग्या प्रयुक्तेयं मयाशीर्दुहितुस्तव ३२ इयं सप्तपदीमध्ये वैधव्यत्वमवाप्स्यति । धर्माचरणमत्यर्थं कर्तव्यमनया शुभे ३३ अतो मयाशीर्दत्तेयं शुभधर्मवती भव । श्रुत्वा धनवती वाक्यं चिंताकुलितचेतसा ३४ उवाच वदनं दीनं प्रणिपत्य पुनःपुनः । धनवत्युवाच । उपायं वेत्सि विप्रेंद्र वद शीघ्रं दयां कुरु ३५ ( यथापायस्तु न भवेत्किं करोमि दयानिधे )॥ द्विज उवाच । यदाऽऽगता भवेत्सोमा गृहे वै तव सुंदरि । तस्याः पूजनमात्रेण भवेद्वैधव्यनाशनम् ३६ धनवत्युवाच । का सा सोमा त्वया प्रोक्ता का जातिः कुत्र संस्थितिः । यदागमनमात्रेण भवेद्वैधव्यभंजनम् ॥ एतद्वद महाभाग न कालो विस्तरस्य मे ३७ द्विज उवाच । सोमा सा रजकीजातिः स्थितिस्तस्याश्च सिंहले । सा यदायाति ते वेश्म तदा वैधव्यभंजनम् ३८ इत्युक्त्वा ब्राह्मणोऽन्यत्र गतो भिक्षाप्रतीक्षया । धनवत्यपि पुत्रेभ्यः प्रोवाच वचनं तदा ३९ धनवत्युवाच । इयं दुर्ललिता पुत्रा स्वसा गुणवती शुभा । सोमागमनमात्रेण भवेद्वैधव्यभंजनम् ४० अस्ति यस्य पितुर्भक्तिर्मातुर्वचनगौरवम् । स मयास्तु सहस्वसा सोमामानयितुं द्रुतम् ४१ पुत्रा ऊचुः । ज्ञात मातस्तव स्वांतं पुरीसिंहवशंगतम् । यात देशांतरं पुत्राः प्रख्यापयसि दुर्गमम् ४२ अतरे दुस्तरः सिंधुः शतयोजनविस्तरः । अशक्यं गमनं तत्र न क्षमा गमने वयम् ४३ देवस्वम्युवाच । अपुत्रः सप्तभिः पुत्रैरहं यास्यामि सिंहलम् । आनयिष्यामि तां सोमां पुत्रीवैधव्यनाशिनीम् ४४ एवं-

१ यस्या आगमनमात्रेणापि पवित्रपुरुषः समासः । २ भो पुत्राः दुर्गमं (अपि) देशांतरं यातेति प्रख्यापयसि यथा स्वांतं ( मनोगतं ) ज्ञातमित्यन्वयः ।

वादिनि सक्रोधे देवस्वामिनि तत्क्षणे । शिवस्वामी कनिष्ठस्तु पुत्रः प्रोवाच संमतः ४५ तात मा वद चैवं त्वं रोषावेशवशंगतः । मयि तिष्ठति कः शक्तो गंतुं द्वीपं हि सिंहलम् ४६ इत्युक्त्वा सहसोत्थाय प्रणम्य शिरसा मुदा । प्रतस्थे सहितः स्वस्रा द्वीपं सिंहलसंज्ञितम् ४७ स कियद्भिर्दिनैर्गत्वा तीरं प्राप सरित्पतेः । ततुं तमंबुधिं तत्र प्रयत्नमकरोद्द्विजः ४८ स ददर्श सुविस्तीर्णं न्यग्रोधद्रुममंतिके । तत्कोटरे सुखासीना गृध्रराजस्य बालकाः ४९ तत्पादपतले स्थित्वा ताभ्यां नीतं तु तद्दिनम् । शावकानां कृते गृध्रो गृहीत्वा शिशुभोजनम् ५० शावकास्तु न वै गृध्राद्भोजनं जग्धिरे भृशम् । पप्रच्छ बालकान्गृध्रश्चिंताकुलितमानसान् ५१ गृध्रराज उवाच । कथं न भुंजते पुत्रा भवंतः क्षुधिता अपि । आनीतं कोमलं मांसं भवद्योग्यमिदं मया ५२ शावका ऊचुः । एतद्वृक्षतले तात मानवावत्र तिष्ठतः । अस्वीकृत्य तयोस्तात कथं भुंजामहे वयम् ५३ एतच्छ्रुत्वा स गृध्रस्तु करुणाहृतचेतसः । तयोरंतिकमागत्य वचनं समभाषत ५४ गृध्रराज उवाच । जातस्तु युवयोः कामो वक्तव्योऽत्र मम द्विज । क्रियते सर्वथा विप्र भोजनं कर्तुमर्हसि ५५ द्विज उवाच । सिंहले गंतुकामोऽहं जलधेः पारमद्य वै । सोमागमनमिच्छामि स्वसृवैधव्यनाशनम् ५६ गृध्रराज उवाच । पारमुत्तारयिष्यामि जलधेः प्रातरेव हि । सोमागृहमपि तव दर्शयिष्यामि सिंहले ५७ ततो रात्र्यां व्यतीतायामुदिते तु दिवाकरे । पारमुत्तारितौ तौ तु गृध्रराजेन वेगिना ५८ सिंहलद्वीपमागत्य स्थितौ सोमागृहांतिके । ततः प्रत्यूषसमये संमृज्यांगणमंडलम् ५९ लेपनं चक्रतुस्तस्या दिवसे दिवसे शुभम् । एवं विदधतोस्तत्र पूर्णः संवत्सरो गतः ६० स्नुषाः पुत्रान्समाहूय सोमा पप्रच्छ विस्मिता । मार्जनं लेपनं कोऽत्र करोति मम कथ्यताम् ६१ एकदैवाथ जगदुः सर्वाः कृतमिदं नहि । ततः कदाचिद्रजकी निभृता संस्थिता निशि ६२ ददर्श ब्राह्मणीं कन्यां मार्जयंतीं गृहांगणम् । लिंपंतमंगणं

प्रातं भ्रातरं च श्वचित्रतम् ६३ सोमा पप्रच्छ तौ मत्वा कौ युवां कथ्यतां मम । अथचतुस्तौ तदा सोमामावां ब्राह्मणपुत्रकौ ६४ सोमोवाच । दग्धास्मि घत नष्टास्मि ब्राह्मणौ गृहमागतौ । कां गतिं वत यास्यामि पापादस्मादसशय ६५पापाजातिरहं ख्याता रजकी सर्वथा द्विज। कथं त्वं ब्राह्मणो भूत्वा विरुद्धं मे चिकीर्षसि ६६ शिवस्वाम्युवाच । एषा गुणवती नाम स्वसा मम सुमध्यमा । अस्याः सप्तपदीमध्ये वैधव्यं संभविष्यते ६७ तव सान्निध्यमात्रेण भवेद्वैधव्यभंजनम् । अतो हेतोः सह स्वस्रा दासकर्म करोमि ते ६८ सोमोवाच । अतःपरं न कर्तव्यं यास्यामि तव शासनात् । इत्युक्त्वा गृहमागत्य स्नुषाभ्य प्रत्युवाच ह ६९ यः कश्चिन्मम राज्ये ऽस्मिन्म्रियते मानव कचित् । तथैव रक्षणीयो ऽसौ यावदागम्यते मया ७० कस्यचिद्वचनात्कोपि न दग्धव्यः कथचन । तथेत्युक्त्वा स्नुषाभिः सा सोमा याता महाबुधिम् ७१ पारमुत्तारयामास क्षणेन द्विजपुत्रकौ । स्वयमाकाशमार्गेण सोत्ततार महार्णवम् ७२ प्रासाः कांचीपुरीं सर्वे निमेषात्सप्रमाघतः । सोमां दृष्ट्वा धनवती हृष्टा पूजामथाकरोत् ७३ अत्रांतरे शिवस्वामी तदा देशांतरात्स्वसुः । सदृशं वरमानेतुं जगामोज्जयिनीं प्रति ७४ आनिनाय वरं तत्र देवशर्मसुतं सुधी । ब्राह्मणं रुद्रशर्माणं गुणिनं सदृशं स्वसुः ७५ तत सा रजकी सोमा वैवाहिकमथाकरोत् । सुलग्ने च सुनक्षत्रे देवस्वामी तु कन्यकाम् ७६ ददौ तस्मै गुणवतीं गुणिने रुद्रशर्मणे । ततो वैवाहिकैर्मन्त्रैर्हूयमाने हुताशने ७७ ततः सप्तपदीमध्ये रुद्रशर्मा मृतस्तदा । रुरुदुर्बांधवाः सर्वे स्थिता सोमा निराकुला ७८ आक्रंदश्च महानासीच्छोकानां तत्र पश्यताम् । गुणवत्यै च सा तूर्णं व्रतराजप्रभावजम् ७९ पुण्यं संकल्प्य विधिवद्ददौ मृत्युविनाशनम् । रुद्रशर्मापि तस्माच्च व्रतराजप्रभावतः ८० आससाद तदा जीवं धमवत्सहसोत्थितः । एवं विवाहं निर्वर्त्य जनता जे निवेश्य च ८१ आमंत्र्य तां धनवतीं सोमा माषाहमति । एवं सा रजकी सोमा जी

वयित्वा मृतं द्विजम् ८२ चचाल हर्षसंपूर्णा पूर्णकामा स्वमंदिरम् । अत्रांतरे गृहे तस्याः प्रथमं तनया मृताः ८३ पुनः स्वामी मृतस्तस्या जामाता च ततो मृतः । आगच्छंत्यास्तदा तस्याः सोमवारान्विता तिथिः ८४ अमावास्या बभूवाथ मृतसंजीवनीतिथिः । सा ददर्श जलोपांते वृद्धां कांचित्स्त्रियं तदा ८५ तूलभारभराक्रांतां क्रंदमानां सुदुःखिताम् ॥ वृद्धोवाच । अवतारय मे पुत्रि तूलभारं शिरःस्थितम् ८६ एतद्भारभराक्रांतां क्रंदमानां सुदुःखिताम् ॥ सोमोवाच । अमावास्याद्य हे वृद्धे सोमवारयुतातिथिः ८७ तूलकं न स्पृशाम्यद्य नियमोऽयं मया कृतः । पुनर्ददर्श यांती सा मूलभारवतीं स्त्रियम् ८८ सा उवाच ततः पुत्रि मूलभारो महानिति । अवतीर्य क्षणं तिष्ठ संगे यास्याम्यहं तव ८९ सोमोवाच । अद्य मूलं तथा तूलं न स्पृशामि कदाचन । ततोऽश्वत्थतरुं प्राप्य नदीतीरभवं शुभम् ९० स्नात्वा विष्णुं समभ्यर्च्य शर्कराभिः प्रदक्षिणाम् । सा चकार महाभागा तदैवाष्टोत्तरं शतम् ९१ भीष्म उवाच । यदा प्रदक्षिणां कर्तुं कृतं शर्करहस्तया । तदा जीवितवंतस्ते जामातृपतिपुत्रकाः ९२ नगरं श्रीसमाकीर्णं तद्गृहं च विशेषतः । अथ याता महाभागा सोमा स्वभवनं प्रति ९३ जीवितं वीक्ष्य भर्तारं पुत्राञ्जामातरं तथा । अभिज्ञातान्समासाद्य जगाम कृतकृत्यताम् ९४ प्रणिपत्य स्नुषाः सर्वाः पप्रच्छुस्तां तपस्विनीम् ९५ स्नुषा ऊचुः । मृतास्ते तनया देवि पतिजामातृबांधवाः । जीवितास्ते कथं देवि मृतास्ते च कथं वद ९६ सोमोवाच । गुणवत्यै मया दत्तं व्रतराजस्य पुण्यकम् । मृतास्ते तद्विपाकेन पतिजामातृपुत्रकाः ९७ तूलकं न मया स्पृष्टं मूलकं च तथा स्नुषाः । अश्वत्थे विष्णुमभ्यर्च्य कृतास्तत्र प्रदक्षिणाः ९८ शर्कराहस्तया तत्र कृतमष्टोत्तरं शतम् । जीवितास्तत्प्रभावेण अद्य जामातृपुत्रकाः ९९ सर्वाभिः क्रियतामद्य व्रतराजो विधानतः । भविष्यति न वैधव्यं सौभाग्यं संभविष्यति १०० स्नुषास्ताः कारयामासुस्तथा सोमव्रतेश्वरम् । भुक्त्वा भोगान्बहूंस्तत्र पुत्रपौ-

त्रादिभिः सह १ तैश्च सर्वैः परिवृता विष्णुलोकमवाप सा । इत्येतत्कथितं पार्थ विस्तरेण मया तव । २ युधिष्ठिर उवाच । माहात्म्य व्रतराज
स्य को विधिर्वद विस्तरात् । कर्तव्य केन भीष्मेदं नारीभिः पुरुषेण वा ३ भीष्म उवाच । अमावास्या यदा पार्थ सोमवारान्विता भवेत् ।
तदा पुण्यतमः कालो देवानामपि दुर्लभः ४ प्रातरुत्थाय व्रतिना स्नानं कार्यं जलाशये । स्नात्वा मौनेन कौशेय परिधाय व्रती ततः ५ गत्वा
श्वत्थवृक्षस्य समीपं कुरुनंदन । अश्वत्थमूले कर्तव्या विष्णुपूजा समंत्रका ६ व्यक्ताव्यक्तस्वरूपाय सृष्टिस्थित्यंतकारिणे । आदिमध्यांतही
नाय विष्टरश्रवसे नमः—इति पूजामंत्रः ७ मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे । अग्रतः शिवरूपाय अश्वत्थाय नमो नमः ८ एवं संपूज्य
गोविंद पीतवस्त्राक्षतैः फलैः । कुसुमैर्विविधैश्चैव भक्ष्यभोज्यैस्तथाविधैः ९ अश्वत्थपूजनं कार्यं प्रोक्तमंत्रेण पांडव । अश्वत्थ हुतभुग्वास गोविं
दस्य सदाश्रय । अशेष हर मे पापं वृक्षराज नमोस्तु ते १० एव पूजाविधिं कृत्वा ततः कुर्यात्प्रदक्षिणाः ११ मौक्तिकैः कांचनैरौप्यैर्हीरकैर्म
णिभिस्तथा । कांस्यपात्रैस्ताम्रपात्रैर्भक्ष्यपूर्णैः पृथक्पृथक् १२ गृहीत्वा भ्रमणं कार्यं यावत्सक्रमणं भवेत् । तावत्प्रदक्षिणं कार्यं यावदष्टोत्तरं
शतम् १३ समर्पितं च यद्द्रव्यमर्पयेद्गुरवे शुभम् । सुवासिन्यश्च सपूज्याः सोमा संतुष्टिहेतवे १४ दत्त्वा चान्नं तु विप्रेभ्यो स्वयं भुंजीत वा
ग्यता । एष ते कथितो भूप व्रतराजविधिर्मया १५ द्रौपदी च सुभद्रा च कारयस्व तथोत्तराम् । उत्तरागर्भः स्वस्थस्तु जीवितं लभते चिरात् १६ यु
धिष्ठिर उवाच । या स्वल्पविभवा नारी कांचनाद्यैर्विना कृता । सा कथं लभते पूर्णं व्रतराजफलं वद १७ भीष्म उवाच । फलैः पुष्पैस्तथा भक्ष्यैर्व
स्त्रैरपि पांडव । कुर्यात्प्रदक्षिणावर्तं सापि पूर्णं लभेत्फलम् १८ व्रतमिदमखिलं नरेंद्र विष्णोः श्रुतमनया हि पराक्रमस्त्वया पि । पतिसुतध
नमिच्छती पुरंध्री सपदि करोतु न चात्र चित्रमस्ति १९ शृणु पार्थ प्रवक्ष्यामि उद्यापनविधिं शुभम् । यं विना पूर्णता न स्याद्व्रतराजस्य

वै नृप १२० कारयेत्सर्वतोभद्रं तन्मध्ये कुंभमुत्तमम् । वृक्षराजः सुवर्णस्य पंचरत्नस्य वेदिकाम् २१ तन्मूले प्रतिमां विष्णोः सौवर्णीं च चतुर्भुजाम् । लक्ष्मीवाहनसंयुक्तां माषद्वयपलावधि २२ उपचारैरनेकैश्च यथाविभवविस्तरैः । नैवेद्यैः पुष्पधूपैश्च दीपैश्च परितः स्थितैः २३ रात्रौ जागरणं कुर्यात्प्रभाते होममाचरेत् । समिद्भिः पैप्पलाभिश्च पायसेन तिलैस्तथा २४ इदंविष्णिर्वति मंत्रेण हुत्वा पूर्णाहुतिं चरेत् । आचार्यं पूजयेत्पश्चाद्गां च दद्यात्पयस्विनीम् २५ ब्राह्मणं वस्त्रभूषाद्यैः सदस्यं च प्रपूजयेत् । ऋत्विजो द्वादशयाः पूज्या घृतपायसभोजनैः २६ उपवीतानि वस्त्राणि तेभ्यो दद्याच्चदक्षिणाम् । प्रणम्य दंडवद्भूमौ प्रार्थयित्वा विसर्जयेत् २७ एवं द्वादशवर्षे वा मध्ये चादौ समाचरेत् । कृत्वा ह्युद्यापनं सम्यग्व्रतराजफलं लभेत् २८ सर्वं निवेदयेत्पीठमाचार्याय सदक्षिणम् । अच्छिद्रं वाचयेत्पश्चात्स्वयं भुंजीत वाग्यतः १२९ ॥ इति श्रीभविष्यो० सोमवत्यमावास्याव्रतकथोद्यापनं सं० ॥ ॥ अथ माघअमावास्यायामर्धोदयव्रतम् ॥ अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः । अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥ दिवैवयोगः शस्तोयं न तु रात्रौ कदाचन—इति हेमाद्रौ ॥ अगस्त्य उवाच । भगवंस्त्वत्प्रसादेन श्रुतोयं व्रतविस्तरः । अर्धोदयं तु मे ब्रूहि दुर्लभं सचराचरैः ॥ जीवितं प्राणिनां पुण्यं यदि चेद्वदसि प्रभो । कथं कार्यः कृते किं स्यात्फलं कथय षण्मुख ॥ स्कंद उवाच । श्रूयतां पुण्ययोगोऽयं दुर्लभोऽर्धोदयाह्वयः । तिर्यङ्मनुष्यदेवानां दुष्प्राप्यः सर्वकामदः ॥ माघामायां व्यतीपाते आदित्ये विष्णुदैवते । अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समम् ॥ पुरा कृतं वसिष्ठेन जामदग्न्येन सुव्रत । सनकाद्यैर्मनुष्यैश्च बहुभिर्बहुविश्रुतैः ॥ अन्यैः सहस्रैश्च कृतं भुवि श्रेष्ठं तु कुंभज । दानानां यज्ञतीर्थानां फलं येन कृतं भवेत् ॥ ससागरा धरा तेन सप्तद्वीपसमन्विता । दत्ता स्यात्सर्वभावेन येन त्वर्धोदयः कृतः ॥ गंगागयाप्रयागेषु पुष्कराणां जले तथा । मानसादिषु यत्पु-

ण्य तीर्थेषु स्नानदानतः ॥ तत्सम प्राप्यते विप्र व्रतेनानेन कुम्भज । अश्वमेधयुत पुण्यमिष्टापूर्तेन यद्भवेत् ॥ अर्धोदयः कृतो येस्तु विधिदृष्टेन कर्मणा । याति तस्य गृहे लक्ष्मीः सततिश्चानपायिनी ॥ आयुर्यशोतिविपुल व्रतकर्ता फलं लभेत् । इन्द्राग्नियमलोकेषु नैर्ऋतानामपांपतेः ॥ वायोः कुबेरस्येशस्य लोकेषु चरतो व्रती । वसेच्चन्द्रार्कलोके च लोकपालैश्च सेवितः ॥ गोकोटिदानजं पुण्य सर्वतीर्थनिवासनम् । अर्धोदयस्य पुण्यस्य कलां नार्हति षोडशीम् ॥ भूर्लोकाधिपतिश्चैव भुवर्लोकाधिपस्तु यः । स्वर्लोकेशो जनानां च तपोलोकजनेश्वरः ॥ महर्लोके वसेन्नित्य यावदिन्द्राश्चतुर्दश । ततो हिरण्यगर्भस्य पुरुषो व्रतकारक ॥ सत्यलोकाधिपः साक्षी लोकानां पुरुषोऽव्ययः । अर्धोदयप्रसादेन ब्रह्मलोके वसेत्तु सः ॥ तथा मानेन विष्णुत्वं ब्रह्मा रुद्रस्ततो भवेत् । शिवलोके गणैः पूज्यो देवराजसमन्वितः ॥ वसेच्छक्रस्य लोके तु व्रतस्यास्य प्रभावतः । ततो विष्णुस्वरूपेण त्रैलोक्याधिपतिर्भवेत् ॥ शङ्खचक्रगदाधारी वनमाली हरिः स्वयम् । व्रतप्रभावाल्लक्ष्मीशो देवो नारायणो भवेत् ॥ अगस्त्य उवाच । स्कंद केन विधानेन कर्तव्य व्रतमुत्तमम् । अर्धोदय मनुष्याणां जीवित दुर्लभं भुवि ॥ स्कद उवाच । कृते कृत वसिष्ठेन त्रेतायां रघुणा कृतम् ॥ द्वापरे धर्मराजेन कलौ पूर्णादरेण च । अन्यैर्देवमनुष्यैश्च दैत्यैश्च मुनिसत्तम ॥ कृतमर्धोदयं सम्यक् सर्वकामफलप्रदम् । माघमासे कृष्णपक्षे पंचदश्यां रवेर्दिने ॥ वैष्णवेन तु ऋक्षेण व्यतीपाते सुदुर्लभे । पूर्वाह्ण सगमे स्नात्वा शुचिर्भूत्वा समाहितः । सर्वपापविशुद्ध्यर्थं नियमस्थो भवेन्नरः । त्रिदेवस्य व्रतं देवाः करिष्ये मुक्तिद परम् । भवति सन्निधौ मेद्य त्रयोदेवास्त्रयोऽग्नयः—इतिनियममंत्रः ॥ ब्रह्मविष्णुमहेशानां सौवर्णपलसंख्यया । शय्यायंत्रं ततः कुर्या—

१ वसेच्छ्रक्रेण मानेनेति वा पाठः ।

दुपस्करसमन्वितम् ॥ देवतात्रयमुद्दिश्य कर्तव्यं भक्तिशक्तितः । ब्रह्मविष्णुशिवप्रीत्यै दातव्यं तु गवां त्रयम् ॥ हिरण्यभूमिधान्यादिदानं विभवसारतः । दातव्यमाश्रयोपेतं ब्राह्मणेभ्यस्तु यत्नतः ॥ मध्याह्ने तु नरः स्नात्वा शुचिर्भूत्वा समाहितः । तिलपर्वतमध्यस्थं पूजयेद्देवतात्रयम् ॥ तत्रादौ ब्रह्मपूजा– नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने । देवायदेवपतयेयज्ञानांपतयेनमः ॥ ॐ ब्रह्मणेनमः पादौपूजयामि । ॐ हिरण्यगर्भायन० ऊरूपू० । ॐ परमेष्ठिनेन० जंघेपू० । ॐ वेधसेन० गुह्यंपू० । ॐ पद्मोद्भवाय० नाभिं० । ॐ हंसाय० कटीं० । ॐ शतानंदाय० वक्षःस्थलं० । ॐ सावित्रीपतयेन० बाहू० । ॐ ऋग्वेदाय० नासिकां० । ॐ यजुर्वेदाय० नेत्रे० । ॐ सामवेदाय० । श्रोत्रे० । ॐ अथर्ववेदाय० ललाटं० । ॐ कपिलाय० शिरःपू० ॥ ततो लोकपालान्पूजयेन्नाममंत्रैः ॥ हिरण्यगर्भपुरुषप्रधानव्यक्तरूपक । प्रसीदसुमुखोभूत्वापूजांगृह्णनमोस्तुते– इतिप्रार्थना ॥ विष्णुपूजा– । नारायणजगन्नाथनमस्तेगरुडध्वज । पीतांबरनमस्तुभ्यंजनार्दननमोस्तुते ॥ ॐ अनंतायनमः पादौपू० । विश्वरूपाय० ऊरूपू० । मुकुंदाय० जानुनी० । गोविंदाय० जंघे० । प्रद्युम्नाय० बाहू० । विश्वतोमुखाय० मुखं० । शतसहस्रशिरसेन० शिरःपू० ॥ आदित्यचंद्रनयनदिग्बाहोदैत्यसूदन । पूजादत्तामयाभक्त्यागृहाणकरुणाकर–इतिविष्णुप्रार्थना ॥ महेशपूजा– । महेश्वरमहेशाननमस्तेत्रिपुरांतक । जीमूतकेशायनमोनमस्तेवृषभध्वज ॥ ॐईशानायन० पादौपू० । चंद्रशेखराय० जंघेपू० । पशुपतयेन० जानुनी० । शंकराय० ऊरू० । उमाकांताय० गुह्यं० । नीललोहिताय० नाभिं० । कृत्तिवाससेन० उदरं० । नागयज्ञोपवीतिने० हृदयं० । भुजंगभूषणाय० बाहू० । नीलकंठाय०कंठं । पंचवक्त्राय० मुखंपू० । कपर्दिने० शिरःपू० ॥ महादेवमहाबाहोनमोलोकांतकायच । पूजामयाकृताभक्त्यागृहाणवृषभध्वज–इतिमहेश्वरंप्रार्थयेत् ॥ इति पूजाक्रमः प्रोक्तो

मंत्रैरेते प्रयत्नतः । आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः ॥ हस्तमात्राकर्णमात्रापीठंछत्रकमंडलुम् । श्वेतवस्त्र युगं देयं ब्राह्मणे सर्वमूर्तये ॥ उपवीतं वस्त्रयुग विष्णुलोकहितकरं । पंचामृतेन स्नपनं पूजनं कुसुमैस्ततः ॥ कमलैस्तुलसीपत्रैर्बिल्वपत्रैरखंडितैः । तत्काल-संभवैर्दिव्यैः पूज्या देवा यथाक्रमम् ॥ यथाशक्त्या प्रकर्तव्यं व्रतमेतत्सुदुर्लभम् । जीवितं प्राणिनां राजन्न नित्यं निश्चितं यतः ॥ व्रतस्योद्यापनं राजन्विधानं शृणु यत्नतः । देवतात्रयमुद्दिश्य शास्त्रदृष्टेन कर्मणा ॥ ब्रह्मणेविष्णुरूपायशिवरूपायतेनमः ॥ अनेनैव च मंत्रेण वह्निं संस्थाप्य भक्तितः । ततो होमं प्रकुर्वीत सहस्रत्रयसंमितम् । तिलाज्यशर्करावैव होमद्रव्याणि भिन्नतः ॥ ब्रह्मजज्ञानमंत्रेण ब्रह्मणे च तिलान् हुनेत् । आज्यं चैव इदं विष्णुस्त्र्यंबकं शर्करां हुनेत् । अर्घं संपूज्य विधिवद्गां च दद्यात्पयस्विनीम् । आचार्याय ततः पीठं दक्षिणासहितं शुभम् ॥ तेन दत्तं हुतं जातमिष्टं यज्ञैः सहस्रधा । कृतकृत्यो भवेन्मर्त्यो व्रतस्यास्य प्रभावतः ॥ एवं तव मयाख्यातं दुर्लभं व्रतमुत्तमम् । अर्धोदयं मयाख्यातं किमन्यत्परिपृच्छसि ॥ इति श्रीस्कंदपु० अर्धोदयव्रतं स० ॥ ॥ इत्यमावास्या व्रतानि समाप्तानि ॥ ॥छ॥ ॥ अथ मलमासव्रतानि लिख्यते ॥ लक्ष्मीरुवाच ॥ देवदेव जगन्नाथ भुक्तिमुक्तिप्रदायक । कथयस्व प्रसादेन लोकानां हितकाम्यया ॥ कथयंति मुनिश्रेष्ठाः कृष्णद्वैपायनादयः । अदत्तं नैव लभ्येत दत्तमेवोपतिष्ठते । यथा वंध्या गृहस्थस्य पतिवंशविनाशिनी । तथा दानविहीनस्य जन्म सर्वं निरर्थकम् । तथापि कथयंतीह देवज्ञाः शास्त्रकोविदाः । क्षौरं मौंजी विवाहश्च व्रतं काम्योपवासकम् । मलिम्लुचे सदा त्याज्यं गृहस्थेन विशेषतः । अधिमासे च संप्राप्ते किं कार्यं व्रतमुत्तमम् । कस्योद्देशेन दातव्यं किं परत्र प्रदायकम् । श्रीकृष्ण उवाच । शृणु देवि महाभागे सर्वलोकस्य हेतवे । स्वयं दाता स्वयं भोक्ता यो ददाति द्विजातये ॥

नान्यो दाता न भोक्ता च इहलोके परत्र च । असंक्रांते च मासे वै मामुद्दिश्य व्रतं चरेत् ॥ अधिमासस्य देवोहं पुरुषोत्तमसंज्ञकः । स्नानं दानं जपं होमं स्वाध्यायं पितृतर्पणम् ॥ देवार्चनमथान्यच्च ये कुर्वंति मनुष्यजाः । अक्षयं तद्भवेत्सर्वं ममोद्देशेन यत्कृतम् ॥ मलमासो गतः शून्यो येषां देवि प्रमादतः । दारिद्र्यं पुत्रशोकं च पापपंकविगर्हितम् । मर्त्यलोके भवेज्जन्म तेषां देवि न संशयः ॥ सुखप्रदासि देवि त्वं ये ऽर्चयंति द्विजोत्तमान् ॥ यदा मलिम्लुचो मासो प्राप्यते मानवैः प्रिये । महोत्सवस्तदा कार्यं आत्मनो हितकांक्षिभिः ॥ कृष्णपक्षे चतुर्दश्यां नवम्यां वा सुरेश्वरि । अष्टम्यां वाथ कर्तव्यं व्रतं शोकविनाशनम् ॥ यथालाभोपहारेण मासं चास्मिन्मलिम्लुचे । पुण्येह्नि प्रातरुत्थाय कृत्वा पूर्वाह्निकीं क्रियाम् ॥ गृह्णीयान्नियमंपश्चाद्वासुदेवं हृदि स्मरन् । उपवासस्य नक्तस्य एकभक्तस्य भामिनि ॥ एकस्य निश्चयं कृत्वा ततो विप्रान्निमंत्रयेत् । सपत्नीकान्सदाचारान्सुरूपान्सुरवेषकान् । श्रुताध्ययनसंपन्नान् कुलीनान् ज्ञातिसंभवान् ॥ अथकथा ॥ युधिष्ठिर उवाच । अधिमासस्य माहात्म्यं मार्कंडेय मुने वद । जपयज्ञादिकं पुण्यं वक्तव्यं ऋषिसत्तम १ किं कर्तव्यं च विप्रेंद्र गंगास्नानं च दुर्लभम् । कथयस्व महाप्राज्ञ कृपया द्विजपुंगव २ मार्कंडेय उवाच । मलमासस्तु मासानां मलिनः पापसंभवः । तस्य पापविशुद्ध्यर्थं मलमासव्रतं कुरु ३ प्रतिपत्तिथिमारभ्य अमावास्यावधिर्भवेत् । उपवासेन नक्तेन ह्येकभक्तेन वा नृप ४ एकस्य नियमं कृत्वा दानं दद्याद्दिने दिने । दानं कुर्यादपूपानां दक्षिणाघृतसंयुतम् ५ अंते चोद्यापनं कुर्यात्संपूज्य मधुसूदनम् । उपोष्य च चतुर्दश्यां सर्वपापैः प्रमुच्यते ६ दरिद्रेण व्यतीपातेप्यथवा द्वादशीदिने । पौर्णमास्यां चतुर्दश्यां नवम्यां वा नृपोत्तम ७ अष्टम्यां वाथ कर्तव्यं व्रतं शोकविनाशनम् । यथालाभोपचारेण मासे चास्मिन्मलि-

ल्युचे ८ त्रयस्त्रिंशदपूपांश्च प्रदद्यात्घृतसंयुतान् । श्रीसूर्यप्रीतये राजन्सर्वपापविमुक्तये ९ पात्रे जनार्दनप्रीत्या दानं तत्सफलं भवेत् । मल
मासे तु संप्राप्ते कार्तिके श्रावणेऽपि वा १० युधिष्ठिर उवाच । मलमासः कथं ज्ञेयः सर्वज्ञ मुनिसत्तम । तं ब्रूहि सकलं विप्र विस्तरेण
यथातथम् ११ मार्कंडेय उवाच । यस्मिन्मासे न संक्रांतिः संक्रांतिद्वयमेव वा । मलमासक्षयौ प्राप्तौ सर्वधर्मविवर्जितौ १२ एवंसंज्ञौ यदा
मासौ यस्मिन्संवत्सरे क्वचित् । उत्तरे देवकार्याणि पितृकार्याणि दक्षिणे १३ मलमासे तु संप्राप्ते संध्योपासनतर्पणम् । नित्यं हि सफलं श्रा
द्धदानादिनियमव्रतम् १४ मार्कंडेय उवाच । शृणु धर्मभृतां श्रेष्ठ कौशिको नाम वै द्विजः । महातपा ध्यानरतः सत्यसंधो जितेंद्रियः १५
विष्णुभक्तः सदा विप्रो वेदधर्मपरायणः । तस्य सूनुर्महाक्रूरो द्विजो मैत्रेयनामकः १६ कामांधः स्वजनत्रासी साधुद्वेषकरोऽधमः । अथ
मिथः पापरतिः शिवश्रीविष्णुर्निंदकः १७ गोत्रपीडाकरः पापो राहुरिव दिवाकरे । दारुणो दारुणाचारः सर्वभूतविहिंसकः १८ मद्यपा-
नरतो मूढो दस्युभिः सह संगतः । गते बहुतरे काले शृणु राजन्यसत्तम १९ एकदा हयमारुह्य प्रयातो नगरं प्रति । व्यवसायस्वरूपेण
सौराष्ट्रं नगरोत्तमम् २० भृत्यैश्च सहितो विप्रवधं कृत्वा स्वहस्ततः । शस्त्रास्त्रकर्मभिर्घोरैर्धनं हृत्वा नृपोत्तम २१ हाहाकारो महाञ्जातः
सौराष्ट्रनगरे ततः । सर्वैर्नागरिकैः पापो लोकैर्विनिहतो नृप २२ इत्थं कृत्वा स तन्मूढो विप्रवधी कुलाधमः । प्रतिषिद्धं च यत्कर्म कृतं
पातकसंचयात् २३ भस्मीभूतं च तद्राष्ट्रं ब्राह्मणस्य विघाततः । मैत्रेयः स्वजनैः सार्धं ब्रह्महत्यादिदोषभाक् २४ तत्पापं च महत्कृत्वा
निर्गत्य यमकिंकराः । छिंधि भिंधि वचो घोरा उच्चार्य दृढमुद्गरान् २५ घातयित्वा च तं मूढं ताडयक्षशिलातले । इत्थं पानेकदंडांश्च
कृत्वा पश्चाद्यमालयम् २६ आनीतोसौ पापरूपी यदा कौशिकनंदनः । घोरे वै कृमिकुंडे च मैत्रेयः स निपातितः २७

पातकसंचयात् ... निर्गत्य यमकिंकराः । छिंधि भिंधि वचो घोरा उद्धृत्य दंडमुद्गरान् २५ ...

यमाज्ञया ततः पापं पंचद्वयसहस्रकम् । भुंजन्वै विप्रहत्यां तां तथा प्रेताग्निवह्निना २८ इत्थं चानेकशः सर्वयातना उपभुंजते । एतन्नारदवाक्याच्च कौशिकेन ततः श्रुतम् २९ लांछनं ब्रह्महत्यानां, स्वत्कुले मुनिसत्तम । तत्पापपरिहारार्थं व्रतं चेदं महोत्तमम् ३० श्रुतिशास्त्रेषु संशोध्य ऋषिभिः कथितं पुरा । तच्छ्रुत्वा कौशिकेंद्रेण पुत्रोद्धरणहेतुना ३१ कौशिक उवाच । तद्व्रतं ब्रूहि मे प्राज्ञ ब्रह्महत्या प्रणाशनम् । मद्वंशलांछनं तात शीघ्रं ब्रूहि महामते ३२ नारद उवाच । शृणु कौशिक सर्वज्ञ व्रतानामुत्तमं व्रतम् । प्रवक्ष्यामीह ते सर्वं लोकानुग्रहकाम्यया ३३ ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमम् । कोटिजन्मार्जितं पापं तत्क्षणाद्व्रतयोगतः ३४ प्रणश्यति न संदेहो यथा कृष्णपदार्चनात् । तस्मात्कौशिकविप्रेंद्र ब्रह्महत्यां तरिष्यसि ३५ मार्कंडेय उवाच । तच्छ्रुत्वा कौशिको वाक्यं नारदस्य महात्मनः । स तदा मलमासस्य व्रतं चक्रेऽथ कौशिकः ३६ शतधा तत्कृतं पुण्यं मलमासव्रतादिकम् । दत्तं त्रिवार्षिकं तत्र कौशिकेन सुताय तत् ३७ दिव्यदेहस्तदा जातो ब्रह्मादीनामगोचरः । मैत्रेयो वै महाराज व्रतस्यास्य प्रभावतः ३८ निष्पापश्च सुतो दृष्टः कौशिकेन द्विजन्मना । प्रसादाच्च हरेः साक्षाच्छृणु धर्मभृतांवर ३९ युधिष्ठिर उवाच । कथं वाचरितं ब्रह्मन्मलमासव्रतादिकम् । तत्सर्वं ब्रूहि मे विप्र सर्वलोकहिताय च । ४० मार्कंडेय उवाच । विस्तरेणार्चनफलं कविभिर्नैव शक्यते । वक्तुं जनार्दनेनेदं किं पुनः प्राकृतैर्जनैः ४१ प्रतिपत्तिथिमारभ्य मासमेकं जनार्दनम् । अर्चयेद्गंधपुष्पाद्यैः पायसेन ससर्पिषा ४२ विप्रांस्तु भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् । एवं व्रतं मासमेकं कुर्याद्दानैर्विचित्रकैः ४३ अंते भूतदिने प्राप्ते उपोष्य सुसमाहितः । पुण्येह्नि प्रातरुत्थाय कुर्यात्पूर्वाह्णिकीं क्रियाम् ४४ गृहीत्वा नियमं पश्चाद्वासुदेवं हृदि स्मरन् । त्रिंत्रिंशद्धर्मनिरतांस्ततो विप्रान्निमंत्रयेत् ४५ सपत्नीकान्सदाचारान्सुरूपांश्च सुविद्यकान् । वेदाध्ययनसंपन्नान्कुलीनान् जाति-

सभपात् ४६ ततो मध्याह्नवेलायां कृत्वा माध्याह्निकीः क्रियाः । पुष्पमंडपिकां कृत्वा विचित्रैस्तोरणादिभिः ४७ तस्मिन्सुशोभिते सर्वे मंडके
चूर्णनादिते । सुलक्षणं लिखेत्तत्र सर्वतोभद्रमण्डलम् ४८ स्थापयेदव्रणं कुम्भं पंचरत्नसमन्वितम् । तस्योपरि न्यसेत्पात्रं देवं तत्र प्रपूजयेत् ४९
आदौ स्वस्त्ययनं कृत्वा पूजां तत्र समारभेत् । प्राणानायम्य विधिवन्मनःसंकल्पपूर्वकम् ५० उपचारैः षोडशभिः पूजयेच्च जनार्दनम् । गंध
तोयेन संस्नाप्य शुभैः पंचामृतैस्तथा ५१ स्थापयेदव्रणं कुंभं वस्त्रयुग्मेन वेष्टितम् । त्रयस्त्रिंशच्च नामानि पूजयेच्च यथाविधि ५२ विष्णुं
जिष्णु महाविष्णुं हरिं कृष्णमधोक्षजम् । केशवं माधवं राममच्युतं पुरुषोत्तमम् ५३ गोविंदं वामनं श्रीशं श्रीकंठं विश्वसाक्षिणम् । नारा
यणं मधुरिपुमनिरुद्धं त्रिविक्रमम् ५४ वासुदेवं जगद्योनिं शेषतल्पगतं तथा । संकर्षणं च प्रद्युम्नं दैत्यारिं विश्वतोमुखम् ५५ जनार्दनं च
राधारं श्रीधरं च समर्चयेत् । कुम्भस्थिते कांस्यपात्रे पूजयेच्च तथा व्रती ५६ आच्छाद्य वस्त्रयुग्मेन पीतेन च यथाविधि । विष्णवे च
ततो दद्यादुपवीते च शोभने ५७ चंदनेन सुगंधेन पुष्पैर्नानाविधैर्नृप । धूपैर्नानाविधैर्दीपैः पूजयेच्च यथाविधि ५८ मिष्टान्नैश्चैव नैवेद्यै
र्नागवल्लीदलान्वितैः । घंटामृदंगनिर्घोषैः शंखध्वनिसमन्वितैः ५९ आरार्तिकं प्रकुर्वीत कर्पूरागरुचंदनैः । प्रदक्षिणा नमस्कारान्मंत्रपुष्पं
यथाविधि ६० ताम्रपात्रस्थितं तोयं चंदनाक्षतपुष्पकैः । अर्घ्यं दद्यात्सपत्नीकः प्रहृष्टेनांतरात्मना ६१ नारिंगैर्नालिकेरैश्च फलैर्नानाविधैः
शुभैः । पंचरत्नसमायुक्तं जानुनी स्थाप्य भूतले ६२ आरोप्य भाले हस्तौ च श्रद्धाभक्तिसमन्वितः ६३ अधिमासे तु संप्राप्ते शुभे सूर्याधिदैवते ।
देवदेव महादेव प्रलयोत्पत्तिकारक । गृहाणार्घ्यं मया दत्तं कृपां कृत्वा ममोपरि ६४ स्वयम्भुवे नमस्तुभ्यं ब्रह्मणे ऽमिततेजसे ।

१ [illegible] । २ [illegible] कुम्भस्थिते कांस्यपात्रे [illegible] ।

नमोस्तु ते प्रियानंत ब्राह्मणानां दयां कुरु ६५ एवं स्तुत्वा जगन्नाथं गंधपुष्पोपहारकैः । पूजयित्वा जगन्नाथं चतुर्षु प्रहरेषु च ६६ तथा जागरणं कुर्यात्कीर्तनश्रवणादिभिः । ततः प्रभातसमये अमावास्यादिने नृप ६७ विष्णुं च पूजयेद्भक्त्या पश्चाद्धोमं समाचरेत् । समित्तिलाज्यचरुणा पायसेन हुनेन्नृप ६८ अतोदेवेति षट्केन अयुतं वा सहस्रकम् । पूर्णाहुतिं ततः कृत्वा होमशेषं समापयेत् ६९ गुरोः पूजां ततः कुर्याद्वसुधान्यादिसत्तकैः । प्रदद्याद्धेनुना सार्द्धं प्रतिमां च तथा नृप ७० त्रयस्त्रिंशदपूपांश्च कांस्यपात्रसमन्वितान् । प्रदद्याद्गुरवे राजन्घृतशर्करया सह ७१ अधिमासे तु संप्राप्ते पापमुक्त्यै जनार्दनम् । उद्दिश्यापूपदानेन घृतेन सह रुक्मकम् ७२ विष्णुप्रीत्यै प्रदद्याच्च पृथ्वीदानफलं लभेत् । त्रयस्त्रिंशदपूपांश्च दानार्हांश्च दिने दिने ७३ सुवर्णगुडसंयुक्तान् कांस्यपात्रे निधाय च ७४ अधिमासे तु संप्राप्ते शुभे सूर्याधिदैवते । नरकोत्तारणायैव माया दानं प्रदीयते ७५ त्रयस्त्रिंशदपूपांश्च घृतशर्करया सह । सदक्षिणा मया तुभ्यं कांस्यपात्रेण दापिताः ७६ दाता दिवाकरो देवो गृहीता च दिवाकरः । दानेनानेन विप्रेंद्र सूर्यो मे प्रीयतामिति ७७ प्रीयंतां देवदेवेशब्रह्मशंभुजनार्दनाः । तेषां प्रसादात्सकला मम संतु मनोरथाः ७८ गृहाण परमान्नेन कांस्यपात्रं प्रपूरितम् । सघृतं गुडसंयुक्तं प्रीतो भव दिवाकर ७९ त्वया दत्तमिदं पात्रं परमान्नेन पूरितम् । सघृतं परिगृह्णामि प्रीयतां मे दिवाकरः ८० ब्राह्मणान्पूजयेत्पश्चाद्वस्त्रालंकारचंदनैः । अपूपदानं दद्याच्च कांस्यपात्रसमन्वितम् ८१ धेनुं सवत्सां दद्याच्च वस्त्रालंकारभूषिताम् । कांस्यदोग्ध्रीं रौप्यखुरीं दक्षिणासहितां नृप ८२ नत्वा तु वाचयेद्विप्रान् सफलं चास्तु मे व्रतम् । ऋत्विग्भ्यो वाससी दद्यात्त्रयस्त्रिंशच्च कुंभकान् ८३ कांस्यपात्रसमायुक्तानपूपान्घृतसंयुतान् । वटकैः सह राजेंद्र यथाशक्त्या च दक्षिणाम् ८४ ब्राह्म

णान्भोजयेत्पश्चाच्छर्करघृतपायसैः । द्वादश्या मलमासस्य क्षपे पाते शुभेऽह्नि वा ८५ दुर्बलेनापि कर्तव्यं त्रयस्त्रिंशदपूपकम् । मल
मासे तु समाप्ते एकस्मिंश्च शुभे दिने । निष्किंचनेन दातव्यं घृतशर्करया सह ८६ मासानां मलमासोऽयं मलिनः पापसंभव । तस्य पाप
स्य शान्त्यर्थं अन्नदानं करोति यः ८७ यावन्ति चैव छिद्राणि अपूपानां तु पाण्डव । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ८८ मलमासव्रतं
नारी या करोतीह भारत । दारिद्र्यपुत्रशोकं तु न वैधव्यं लभेत सा ८९ य इदं धर्मं सर्वस्वं कुर्याल्लोकैः पुराकृतम् । ब्रह्महत्यादिपापघ्नं
प्राप्नुयाद्वैष्णवं पदम् ९० एवं प्रार्थ्य च गोविंदं पूजयेद्ब्राह्मणानथ । सपत्नीकान् क्षुधिसातान् लक्ष्मीनारायणौ स्मरन् ९१ पूजयित्वा
विधानेन भोजयेद्घृतपायसैः । पूजयित्वा विधानेन सपत्नीकं स्मरन्विभुम् ९२ स्मर्तव्यो द्विजरूपेण पत्नीरूपेण वै नृप । परिधाय यथाश
क्त्या वस्त्रालंकारकुंकुमैः ९३ द्राक्षाभिश्च कपित्थैश्च पनसैः कदलीफलैः । नालिकेरैश्च नारिंगैः कूष्मांडैर्दाडिमीफलैः ९४ उर्वारुकैः कर्कटै
श्च शृंगवेरैः समूलकैः । अन्यैश्च विविधैः शाकैर्व्यंजनैश्च पृथक्पृथक् ९५ घृतपक्वान्नगोधूमैः शुभैः सोहालिकैर्वटैः । शर्कराघृतपूरैश्च फाणि
कैः पट्टकैः ९६ भक्ष्यभोज्यैश्च लेह्यादिकैदुकानि विशेषत । गोरसाना विचित्राणि वासितानि दध्यादिभिः ९७ अन्यान्यपि च दा
नानि देयानि विविधानि च । वित्तशाठ्यं न कर्तव्यमात्मनः श्रेयइच्छता ९८ यथावत्सरस प्राप्य परिवेष्य मृदु ब्रुवन् ॥ इदं स्वादु इ
दं भोज्यं भवदर्थं विरचितं । याच्यतां रोचते यच्च यन्मया पाचितं प्रभो ९९ धन्योऽस्म्यनुगृहीतोऽस्मि पावितं मम मंदिरम् । विसर्जयेच्च
ततो विप्रान्दत्वा तांबूलदक्षिणे १०० आशीर्मंत्रमनुव्रज्य भुंजीत बंधुभिः सह । असफलतमर्सं नारी या करोति हरिप्रियम् १ दारि
द्र्यं पुत्रशोकं च वैधव्यं न भवेत्कदा । एवंविधोऽपि पुरुषो यदि कर्पोन्मलिम्लुचे २ मलिम्लुचं प्राप्य न पूजितो यैः श्रीनाथदेवः पर एव

भक्त्या । कथं भवेच्छ्रेयः सुखं च संपत्पुत्रः सुहृत्स्वजनाश्चापि भार्या ३ कदाचिन्न कृतं पापैर्मलमासव्रतं नरैः । तेषां पापिष्ठता नित्यं ब्रह्महत्या पदेपदे ४ मार्कंडेय उवाच । एतत्ते कथितं पार्थ गुह्याद्गुह्यतरं परम् । वाजपेयायुतफलं श्रोता वक्ता लभेद्ध्रुवम् १५० ॥ इतिभ- वि० पु० मलमासव्रतकथोद्यापनं संपूर्णम् ॥ ॥ अथ स्वस्तिकव्रतम् ॥ तत्तु आषाढपौर्णिमामारभ्य कार्तिकपौर्णिमावधि ॥ युधिष्ठिर उवाच । सर्वासां च तिथीनां च कथितानि व्रतानि भो । तथा च स्वस्तिकं नाम यत्त्वया कथितं प्रभो ॥ नैव तस्य विधानं तु कथितं च सुरेश्वर । को विधिर्देवता का च किं दानं पूजनं कथम् । केनेदं हि पुरा चीर्णं किं फलं स्वस्तिके व्रते ॥ श्रीकृष्ण उवाच । साधु पृष्टं महाभाग लोकानां हितकाम्यया । येन चीर्णेन राजेंद्र भूमिभुक् जायते नरः ॥ स्वस्तिकस्य विधिं राजन् शृणु ह्येकाग्रमानसः । स्वस्तिकानि लिखित्वादौ पूजाकर्म समारभेत् ॥ रमया सहितं देवं पूजयेत्प्रत्यहं पुनः । इति संकल्प्य मेधावी स्वस्तिकं कर्म कारयेत् ॥ अष्टोत्तरस्वस्तिकानि प्रत्यहं विष्णवे पुनः । रंगवल्यालंकृतानि यदि भक्त्या समर्पयेत् ॥ शतजन्मार्जितं पापं तस्य नश्यति तत्क्षणात् । गोमूत्रं गोमयं राजन्स्थंडिले संविलेपयेत् ॥ रंगवल्यादिकं कार्यं सर्वभक्त्या समर्पयेत् । नीलपीतसितै रक्तै रंगैः स्वस्तिकधारणम् ॥ यत्र कुर्याद्विशुद्धात्मा विष्णुलोके महीयते । पंचवर्णैस्तु नीलाद्यैः कुर्यात्स्वस्तिकमुत्तमम् ॥ नारी वा पुरुषो वापि प्रसुप्ते च जनार्दने । विष्ण्वालये शिवद्वारे गवां गोष्ठे शुचिस्थले ॥ विष्णुप्रीतिकरं कुर्यात्तस्य पुण्यमनंतकम् ॥ पंचरंगकवर्णैस्तु कोटियज्ञफलं लभेत् ॥ रंगवल्यादिकं कृत्वा विष्णोस्तु पुरतो न्यसेत् । स्वस्तिकैः शोभयित्वा च विष्णोः स्थानं शिवस्य च ॥ अशुभं तत्कुले नैव स्याद्वै विष्णुप्रसादतः ॥ सहस्रं स्वस्तिकानां तु येन भक्त्या समर्पितम् । पुत्रपौत्रसमायुक्तो मोदमानः पुनः पुनः ॥ चिरवासी भवेत्स्वर्गे धनवान् भूमिपो भवेत् । तत्कु

लेपि दरिद्रत्व नैव जायेत कर्हिचित् ॥ प्रयुते स्वस्तिकानां तु विष्णवे सर्पयेद्यदि । पुत्रपौत्रादिकं तस्य स्वस्तिमज्जायते ध्रुवम् । न रोगार्तिर्भवत्येव गोपालस्य प्रसादत ॥ नारी चेद्विधवा नैव पुरुषो वापि कर्हिचित् । जायापत्यसमायुक्तो नात्र कार्या विचारणा ॥ नारीणां तु भवत्येव स्वस्तिकैः पूजन परम् ॥ अथ स्वस्तिकलक्षं तु यदि कुर्याद्विचक्षणा । तस्याः पुण्यफल वक्तुं कः शक्तो दिवि वा भुवि ॥ आषाढे मासि राजेंद्र प्रथमाचरणं भवेत् । आश्विने तु समाप्तिर्वै कर्तव्या स्वस्तिकारिणा ॥ धनिना तु कृतं विप्र गोदानादिपुरःसरम् । कर्तव्य फलसिद्ध्यर्थं नात्र कार्या विचारणा । कृतं यदि दरिद्रेण शुभ स्वस्तिकलक्षकम् । कंबलाद्यासन दद्याद्व्रतसाद्गुण्यसिद्धये ॥ विभवे सति राजेंद्र हेम्ना रौप्येण वा कृतम् । स्वस्तिक त्वासन दद्याद्व्रतसंपूर्तिसिद्धये ॥ आहिताग्नेस्तु होमार्थं तदभावे द्विजार्चनम् । द्विजसंतर्पणादेतत्संपूर्णं जायते नृप ॥ शुभकारीणि राजेंद्र स्वस्तिकानि विधापयेत् । ब्राह्मणेभ्यः प्रदेयानि व्रतसंपूर्तिहेतवे ॥ यथावत्तु विधानेन गदितं पुण्यमुत्तमम् । तथैव स्वस्तिपुण्यानामित्याहुर्वेदवादिनः ॥ अथ होमं प्रवक्ष्यामि लक्षस्वस्तिकसिद्धये । पायसेन हुनेद्विद्वान् स्वसूत्रोक्तविधानतः ॥ घृतपायसहोमः स्याच्च दशांशेन तर्पणम् । स्वस्त्ययन तार्क्ष्यमरिष्टनेमीति च मंत्रतः । होममत्रार्थविधिवित्कुर्वाणाः साधुसाधकाः । आहिताग्नेर्वैदिकास्तु मंत्राः स्युहामसिद्धये ॥ मंत्रा अनाहिताग्नेर्वै प्रोक्तास्तंत्रे विचक्षणैः । तन्मंत्र कथयिष्यामि फलानां तस्य सिद्धये ॥ स्वस्तिनामपरं देवं स्वस्तिकारण कारणम् । स्वस्तये पायस चान्य स्वाहाग्नये च तत्पठेत्॥हुत तुभ्यं महादेव तृप्तो भव महामते । स्वस्ति कुरु महादेव स्वाहया संयुतः शिखिन्॥ एव दशांशतो होम कुर्याद्विष्णोश्च तुष्टये । ब्राह्मणान् भोजयेत्पश्चात्तद्दशांशेन वै बुधः ॥ अथासनानि देयानि पंचरंगयुतानि च । ब्राह्मणेभ्यो विशिष्टेभ्यस्तस्य वै फलसिद्धये । और्णानि चापि देयानि दर्भजान्यथवा पुनः । तत्पूजाविधिसिद्ध्यर्थमाचार्यं वरयेत्सुधीः ॥ तस्मि

ष्णो इति मंत्रेण तमेवं पूजयेत्सुधीः । पंचामृतैः स्नापयित्वा पूजयेद्भक्तिसंयुतः ॥ धूपदीपैस्तथा भोज्यैर्नैवेद्यं परिकल्पयेत् । तांबूलैर्धूपदीपैश्च कुसुमैश्च ऋतूद्भवैः ॥ शतपत्रैश्च कल्हारैरर्चयेत्परमेश्वरम् । नमस्कारैस्तथा दिव्यैः स्तोत्रपाठैर्विशेषतः ॥ प्रदक्षिणां ततः कृत्वा वाग्यतःसंयतेंद्रियः । ततो गोमिथुनं दद्याद्व्रतसंपूर्तिहेतवे ॥ तदभावे यावकानां द्रोणमात्रं प्रदीयते । अथवा ह्याढकानां तु पाठके परिकीर्तनम् ॥ पूरिकामोदकाद्यैश्च भोजयेद्द्विजसत्तमान् । आचार्याय तु तां शुद्धां प्रतिमां दापयेत्सुधीः ॥ कर्णमात्रां हस्तमात्रां कटिसूत्रादिभिः पुनः । पीतांबरैश्च संपूज्य कोटियज्ञफलं लभेत् ॥ तस्मादादौ प्रकर्तव्यं धर्मकामार्थसिद्धये । राजानो मित्रतां यांति शत्रवो यांति दासताम् ॥ य एवं कुरुते भक्त्या विष्णुभक्तिपुरःसरः । तस्यानंतफलं राजन् गदितं वेदपारगैः ॥ स्वस्तिकव्रतमेतत्तु गंगास्नानफलप्रदम् । रोगा नाभिभवंत्येव स्वस्तिकव्रतचारिणाम् ॥ स्त्रीभिरेवं च कर्तव्यं सर्वसौभाग्यसिद्धये । शांडिल्या कृतमेवं तु व्रतं विष्णुप्रतुष्टये ॥ सगरेण दिलीपेन दमयंत्या तथैव च । आदौ मासि प्रकर्तव्यमंते चापि तथैव च ॥ मासत्रये समाप्तिः स्याच्चतुर्भिर्वा तथैव च । एकस्मिन्नपि मासे तु समाप्तिः कोटिपुण्यदा ॥ य इदं शृणुयाद्भक्त्या तस्यापि फलदं भवेत् । नेदं कस्यापि व्याख्येयं यदीच्छेद्विपुलं धनम् ॥ न देयं यस्य कस्यापि विकल्पोपहतात्मने । भक्तिश्रद्धाविहीनाय यज्ञघातकराय च ॥ विकल्पहतचित्ताय नास्तिकाय शठाय च । न देयं व्रतमेतत्तु स्वस्तिकारणमुत्तमम् ॥ देयं पुत्राय शिष्याय फलानां तस्य सिद्धये । एवं ज्ञात्वा तु तत्सर्वं चकारैवं युधिष्ठिरः ॥ ॥ इति श्रीभ० पु० स्वस्तिकव्रतं संपूर्णम् ॥ ॥ छ ॥ अथ वारव्रतानि लिख्यंते ॥ ॥ तत्रादौ रविवारव्रतं मदनरत्ने सौरधर्मे ॥ अथ पूजा ॥ मासपक्षाद्युल्लिख्य मम समस्तरोगनिरासार्थमायुष्यादिसकलकामनासिद्ध्यर्थं श्रीसूर्यनारायणप्रीत्यर्थं रविवारव्रतांगत्वेन सूर्यपूजनमहं

रिष्ये । तथा च गणपतिस्मरणपूर्वकं कलशादिपूजनमहं करिष्ये । ताम्रपात्रे रक्तचंदनेनाष्टदलं कृत्वा तत्र देवं पूजयेत् ॥ तेजोरूपं सहस्रांशुं सपार्श्वरथगं वरम् । द्विभुजं वरदं पद्मलांछनं सर्वकामदम् । ध्यानम् ॥ आगच्छ भगवन् सूर्य मंडले च स्थिरो भव । यावत्पूजा समाप्येत तावत्त्वं सन्निधौ भव । आवाहनम् ॥ हैमासनं महादिव्यं नानारत्नविभूषितम् । दत्तं मे गृह्यतां देव दिवाकर नमोऽस्तु ते । आसनम् ॥ गंगाजलं समानीतं परमं पावनं महत् । पाद्यं गृहाण देवेश धामरूप नमोऽस्तु ते । पाद्यम् ॥ भो भो सूर्य महद्भूत ब्रह्मविष्णुस्वरूपिणे । अर्घ्यमंजलिना दत्तं गृहाण परमेश्वर । अर्घ्यम् ॥ गंगादितीर्थजं तोयं जातिपुष्पैश्च वासितम् । ताम्रपात्रे स्थितं दिव्यं गृहाणाचमनीयकम् । आचमनीयम् ॥ जाह्नवीजलमत्यंतं पवित्रकरणं परम् । स्नानार्थं च मयानीतं स्नानं कुरु जगत्पते । मलापकर्षस्ना० ॥ पयोदधिघृतैश्चैव शर्करामधुसंयुतैः । कृतं मया च स्नपनं प्रीयतां परमेश्वरः । पंचामृतस्ना० । गंगा गोदावरी चैव यमुना च सरस्वती । नर्मदा सिंधुकावेर्यो ताभ्यः स्नानार्थमाहृतम् ॥स्नानम् ॥ आचमनी० ॥ रक्तपट्टयुगं देव सूक्ष्मतंतुविनिर्मितम् । शुद्धं चैव मया दत्तं गृहाण कमलाकर । वस्त्रम् ॥ नमः कमलहस्ताय विश्वरूपाय ते नमः । उपवीतं मया दत्तं तद्गृहाण दिवाकर । उपवीतम् ॥ कुंकुमागरुकस्तूरीसुगंधैश्चंदनादिभिः । रक्तचंदनयुक्तं तु गंधं गृह्ण प्रभाकर । गंधम् ॥ जपाकदंबकुसुमरक्तोत्पलयुतानि च । पुष्पाणि गृह्यतां देव सर्वकामप्रदो भव । पुष्पाणि ॥ रक्तचंदनसंमिश्रा अक्षताश्च सुशोभनाः । मया दत्ता गृहाण त्वं वरदो भव भास्कर । अक्षतान् । आर्द्राक्षतान् प्रगृह्य अंगपूजां कुर्यात् ॐ मित्रायन० पादौपू० । रवये० जंघेपू० । सूर्याय० जानुनी० । खगाय० ऊरू० । पूष्णे० गुह्यं० । हिरण्यगर्भाय० कटी० मरीचयेन० नाभिं० । आदित्याय० जठरं० । सवित्रेन० हृदयं० । अर्काय० स्तनौ० । भास्कराय० कंठपू०

अर्यम्णेन० स्कंधौ० । भास्कराय० हस्तौ० । अहस्कराय० मुखंपू० । ब्रध्नेन० नासिकां० । जगदेकचक्षुषेन० नेत्रे० । सवित्रे० कर्णौ० । त्रिगुणात्मधारिणेन० ललाटं० । विरिंचिनारायणाय० शिरःपू० । तिमिरनाशिने० सर्वांगंपू ॥ दशांगो गुग्गुलोद्भूतः कालागरुसमन्वितः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । धूपम् ॥ कार्पासवर्तिकायुक्तं गोघृतेन समन्वितम् ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापह । दीपम् ॥ पायसं घृतसंयुक्तं नानापक्वान्नसंयुतम् । नैवेद्यं च मया दत्तं शांतिं कुरु जगत्पते । नैवेद्यम् ॥ कर्पूरवासितं तोयं मंदाकिन्याः समाहृतम् । आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः । आचमनम् ॥ मलयाचलसंभूतं कर्पूरेण समन्वितम् । करोद्वर्तनकं चारु गृह्यतां जगतःपते । करोद्वर्तनम् ॥ इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि । फलम् ॥ एलालवंगकर्पूरखदिरैश्च सपूगकैः । नागवल्लीदलैर्युक्तं तांबूलं प्रतिगृह्यताम् । तांबूलम् ॥ दक्षिणा कांचनी देव स्थापिता च तवाग्रतः । गृहाण सुमुखो भूत्वा प्रभाकर नमोस्तु ते ॥ दक्षिणाम् ॥ पंचवर्तिसमायुक्तं सर्वमंगलदायकम् । नीराजनं गृहाणेदं सर्वसौख्यकरो भव । नीराजनम् ॥ यानि कानि च पापानि जन्मांतरकृतानि च । विलयं यांति तानीह प्रदक्षिणपदेपदे । प्रदक्षिणाः ॥ नमः पंकजहस्ताय नमःपंकजमालिने। नमःपंकजनेत्राय भास्कराय नमोनमः । नमस्कारान् ॥ तंडुलैः पूरितं पात्रं हिरण्येन समन्वितम् । रक्तवस्त्रयुगं चैव ब्राह्मणाय निवेदयेत् । वायनम् ॥ यस्योदये स्याज्जगतः प्रबोधो यः कर्मसाक्षी भुवनस्य गोप्ता । कुष्ठाधिकव्याधिविनाशको यः स भास्करो मे दुरितं निहन्यात् । प्रार्थना ॥ ॥ अथ कथा ॥ मांधातोवाच । भगवन् ज्ञानिनां श्रेष्ठ कथयस्व प्रसादतः । त्वद्वक्त्राच्छ्रोतुमिच्छामि व्रतं पापप्रणाशनम् १ सर्वकामप्रदं चैव सर्वामंगलनाशनम् । पूजार्घ्यदानसहितं नैवेद्यं प्राशनान्वितम् २ एतत्कथय सर्वस्वं प्रसन्नोसि यदि द्विज । व-

सिष्ठ उवाच । शृणु राजन्मवक्ष्यामि यत्तुश्च व्रतमुत्तमम् ३ सर्वकामप्रदं पुंसां कुष्ठादिव्याधिनाशनम् । भानोस्तुष्टिकरं राजन् भुक्तिमुक्तिप्रदायकम् ४ यस्योदये सुरगणा मुनिसंघाः सचारणा । दैत्या दानवयक्षाश्च कुर्वंति सततार्चनम् ५ यस्योदये तु सर्वेषां प्रबोधो नृपसत्तम । तस्य देवस्य वक्ष्यामि व्रतराज सविस्तरम् ६ पूजार्घ्यं प्राशनं दानं नैवेद्यं शृणु तत्वतः । सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ७ सर्वदानेन तपसा यत्पुण्यं समवाप्यते । प्रातःस्नानेन यत्पुण्यं तत्पुण्यं रविवासरे । मार्गशीर्षादिमासेषु द्वादशस्वपि भूपते ८ सूर्यव्रतं करिष्यामि यावद्वर्षं दिवाकर । व्रत संपूर्णतां यातु त्वत्प्रसादात्प्रभाकर ९ नियममंत्रः ॥ ततः प्रातः समुत्थाय नद्यादौ विमले जले । स्नात्वा संतर्पयेद्देवान्पितॄंश्च वसुधाधिप १० उपलिप्य शुचौ देशे सूर्यं तत्र समर्चयेत् । विलिखेत्तत्र पद्मं तु रंगैर्द्वादशवर्णकैः ११ ताम्रपात्रे तथा पद्मे रक्तचंदनवारिणा । विलिखेत्परया भक्त्या सर्वसंतुष्टिकारकम् १२ ततः संपूजयेद्देवं दिननाथं सुरेश्वरम् १३ मांधातोवाच । द्वादशेषु च मासेषु केके देवाः प्रकीर्तिताः । कथं पूज्याश्च ते तेपि तद्वदस्व मम प्रभो १४ वसिष्ठ उवाच । मासे मासे च ये राजन्विशेषास्तान् शृणुष्व वै । मार्गशीर्षे यजेन्मित्रं नालीकेरार्घ्यमुत्तमम् १५ नैवेद्ये तंदुला देयाः शाल्याश्च गुडसंयुताः । पत्रत्रयं तुलस्यास्तु प्राश्य तिष्ठेज्जितेंद्रियः १६ दद्याद्विप्राय भोज्यं तु दक्षिणासहितं नृप । पौषे विष्णुं समभ्यर्च्य नैवेद्ये कृसरं तथा १७ बीजपूरेण चैवार्घ्यं घृतं प्राश्य पलत्रयम् । दद्याद्घृतं तु विप्राय भोजनेन समन्वितम् १८ माघे वरुणनामानं संपूज्याश्य तिलान् गुडे । नैवेद्ये त्वर्घ्यमध्ये तु दद्याद्वै बृहतीफलम् १९ द्विजातये च दद्याद्वै भोजनं च सदक्षिणम् । मुष्टित्रयं तिलानां च प्राशयेन्नियतो व्रती २० फाल्गुने सूर्यमभ्यर्च्य नैवेद्यं सघृतं दधि । सर्धं जंबीररसहितं दधि प्राश्य पलत्रयम् २१ दधि तंडुलदानं च भोजनं समुदाहृतम् । चैत्रे भानुं च संपूज्य नैवेद्यं घृतपूरिकाः २२ दा

डिमीफलमर्घ्यं च प्राश्य दुग्धं पलत्रयम् । विप्राय भोजनं दद्याद्विमान्नं तु सदक्षिणम् २३ वैशाखे तपनः प्रोक्तो माषान्नं सघृतं स्मृतम् । अर्घ्यं दद्यात्तु द्राक्षाभिः प्राशने गोमयं स्मृतम् २४ कुर्यान्माषान्नदानं च सघृतं वै सदक्षिणम् । ज्येष्ठे इंद्रं यजेद्राजन्नैवेद्ये तु करंभकम् २५ अर्घ्यं च सहकारेण प्राश्यांबु ह्यंजलित्रयम् । दध्योदनसमायुक्तं भोजनं ब्राह्मणाय च २६ आषाढे रविमभ्यर्च्य नैवेद्ये मध्वनुत्तमम् । विप्राय भोजनं दद्यात्प्राशयेन्मरिचत्रयम् २७ गभस्ति श्रावणे ऽभ्यर्च्य नैवेद्ये सक्तुपूरिकाः । अर्घ्यदाने च हि प्रोक्तं त्रपुसीफलमेव च २८ मुष्टित्रयं च सक्तूनां प्राशने समुदाहृतम् । विप्राय भोजनं दद्याद्दक्षिणासहितं नृप २९ यमो भाद्रपदे पूज्यो नैवेद्ये साज्यमोदनम् । गोमूत्रप्राशनं ह्युक्तं ब्राह्मणान्भोजयेत्तथा ३० हिरण्यरेता आश्विने च नैवेद्ये शर्करा स्मृता । दाडिमेनार्घ्यदानं तु प्राश्य खंडपलत्रयम् ३१ विप्राय परया भक्त्या भोजनं खंडपायसम् । दिवाकरः कार्तिके च नैवेद्ये पायसं स्मृतम् ३२ पायसैर्भोजयेद्विप्रान् दद्यात्तांबूलदक्षिणे । एवं व्रतं समाप्यैतत्तत उद्यापनं चरेत ३३ ततो गुरुगृहं गत्वा गृह्णीयाच्चरणांबुजे । उद्यापनं करिष्येऽहमागच्छ मम वेश्मनि ३४ माषकेण सुवर्णेन प्रतिमां कारयेद्रवेः । पीठं रौप्यमयं कार्यं सर्वोपस्करसंयुतम् ३५ कृत्वा द्वादशपत्रं तु कमलं रक्ततंडुलैः । स्थापयेदव्रणं कुंभं पंचरत्नसमन्वितम् ३६ तस्योपरि न्यसेत्पात्रं ताम्रं तंडुलपूरितम् । रक्तवस्त्रसमाच्छन्नं पुष्पमालादिवेष्टितम् ३७ पंचामृतेन स्नपनमग्न्युत्तारणपूर्वकम् । प्रतिमां च ततःकृत्वा पूजां देवस्य कारयेत् ३८ चंदनैः कुसुमैरन्यैर्विविधैःकालसंभवैः । अखंडपट्टवस्त्रैश्च कमंडलुमुपानहौ ३९ वर्द्धनीत्रितयं तत्र स्थापयेद्देवसन्निधौ । संज्ञाया वस्त्रयुग्मं च कौसुंभं तु महीपते ४० प्रतिपात्रेषु संपूज्यः सूर्यो द्वादशनामभिः । मित्रो विष्णुवरुणौ सूर्यो भानुर्वै तपनस्तथा ४१ इंद्रो रविर्गभस्तिश्च शमनश्च तथा स्मृतः । हिरण्यरेता दिनकृत् पूज्या

एते मपनतः ४२ मध्ये सहस्रकिरण सपूज्य सज्ञया सह । पूगीफलैर्धूपदीपैर्नैवद्यैर्वस्त्रसयुते ४३ नारिकेलेण चैवार्घ्यं दद्याद्देवाय भक्तितः । मत्रेणानेन राजेंद्र व्रतस्य परिपूर्तये ४४ नमः सहस्रकिरण सर्वव्याधिविनाशन । गृहाणार्घ्यं मया दत्तं सज्ञया सहितो रवे ४५ आरार्तिक ततः कुर्यान्नमस्कारमदक्षिणाः । पुष्पांजलिं ततो दद्यात्संकल्पं कारयेत्ततः ४६ ब्राह्मणान्भोजयेद्भक्त्या मिष्टान्नैर्द्वादश प्रभो । दपत्यो-र्भोजनं देय परमान्नसमन्वितम् ४७ ततस्तु दक्षिणा देया समभ्यर्च्य स्रगादिभिः । उपचारादि तत्सर्वं गुरवे प्रतिपादयेत् ४८ गुरु तत्रैव संतोष्य ब्राह्मणांश्च विसर्जयेत् ॥ मन्त्रहीन क्रियाहीन भक्तिहीन च यत्कृतम् । तत्सर्वं पूर्णतां यातु भूमिदेवप्रसादतः ४९ अनुव्रज्य गुरुन् विप्रान् भोजन तु समाचरेत् । सुहृद्भिश्च बंधुभिः सार्धं नत्वा देव दिवाकरम् ५० एव य कुरुते मर्त्यो वित्तशाठ्यविवर्जित । सूर्यव्रत महाराज तस्य पुण्यफल शृणु ५१ ब्राह्मणो लभते विद्यां क्षत्रियो राज्यमाप्नुयात् । वैश्य समृद्धिं विपुलां शूद्र सुखमवाप्नुयात् ५२ अपुत्रो लभते पुत्रं कुमारी लभते पतिम् । रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बंधनात् ५३ यं यं चिंतयते कामं त त प्राप्नोति वै ध्रुवम् ५४ य इद शृणुयाद्भक्त्या एकचित्तेन वै नृप । सर्वकामानवाप्नोति प्रसादाद्भास्करस्य वै ५५ ॥ इति श्रीभ० पु० रविवारव्रतकथा समाप्ता ॥ ॥ अथाश्विनादिरविवारेषु आशादित्यव्रतम् ॥ मासपक्षाद्युल्लिख्य मम समस्तरोगनिरासार्थमायुष्यादिसकलकामनासिद्ध्यर्थं द्वादशवर्षपर्यंत एकवर्षपर्यंतं वा श्रीसूर्यनारायणप्रीत्यर्थं आशादित्यव्रतं करिष्ये इति संकल्प । कलशाराधनं आसनविध्यादि कृत्वा सूर्यं पूजयेत् ॥ ताम्रेण कारयेत्पीठ रथ रौप्यमय तथा । भास्कर पूजयेत्तत्र सुवर्णेन तु कारितम् ॥ ॥ अथ कथा ॥ विप्र उवाच । भगवन् श्रोतुमिच्छामि व्रतानामुत्तम व्रतम् । सर्वरोगप्रशमनमाशादित्यव्रतं शुभम् १ स्कन्द उवाच । शृणु वक्ष्यामि गुह्य तदादित्याराधनं परम् । यत्कृत्वा सर्वकामाना स

कलं फलमाप्नुयात् २ समुद्रतीरे विप्रेंद्र पुरी द्वारवती शुभा । वासुदेवे यदुश्रेष्ठे पुण्ये राज्यं प्रशासति ३ दुर्वासा आगमत्तत्र कृष्णदर्शनलालसः । कृष्णेन पूजितः सोपि ह्यर्घ्यपाद्यासनादिभिः ४ भोजनं तस्य वै दत्तं यथाविभवसारतः । संपूजितः स कृष्णेन यावद्गच्छत्यसौ मुनिः ५ सांबेन हसितस्तत्र सुतेन सहसा किल । क्रुद्धोपि मुनिशार्दूलः कोपं संहृतवान्स्वयम् ६ पूजितेन मयेदानीमन्यत्कर्तुं कथं क्षमम् । स गत्वा नारदं प्राह सांबेन हसितोस्मि भोः ७ सभां संचरतः कार्यं तस्य शिक्षापनं त्वया । इत्युक्तो नारदः प्रायाद्द्वारकां कृष्णसन्निधौ ८ स्वकं सैन्यं दर्शयस्व मम देवकिनंदन । देवयात्रामिषं कृत्वा हस्त्यश्वरथसंकुलम् ९ नारदेनैव मुक्तस्तु तथैव कृतवान्विभुः । दर्शिते तु बले प्राह नात्र सांबः प्रदृश्यते १० मयैवानीयते शीघ्रं द्वारवत्यास्तवांतिकम् । गत्वैवमुक्तो मुनिना श्रेष्ठो जांबवतीसुतः ११ सशृंगारस्तथानीतो मकरध्वजदर्शनः । गत्वालिंग्य चुचुंबुस्तं गोप्यः कृष्णपरिग्रहाः १२ नारदः प्राह भगवन् दुश्चरित्रं तथानघ । क्रुद्धेन शौरिणा प्रोक्तः कुष्ठी भव नराधम १३ एवमुक्तस्तथा पुत्रः कुष्ठरोगातुरोऽभवत् । सांबः प्रणम्याह पितः किमर्थं शापितस्त्वया १४ स्वशक्तिज्ञानदृष्ट्या तु विचार्य सुविनिश्चितम् । ध्यानाद्दुर्वाससो ज्ञात्वा विक्रिया ह्यत्र कारणम् १५ अनुग्रहो मया पुत्र कार्यस्ते स्वस्तये शुचौ । आदित्यस्य व्रतं चैव कुरु कुष्ठविनाशनम् १६ सांब उवाच । कथं तात मया कार्यं व्रतं सर्वफलप्रदम् । किं विधानं तु के विप्राः किं दानं कस्य पूजनम् १७ कृष्ण उवाच । मासमाश्वयुजं प्राप्य यदा रविदिनं भवेत् । तदा व्रतमिदं ग्राह्यं नरैः स्त्रीभिर्विशेषतः १८ यावत्संवत्सरं तावद्विधिना ऽनेन पुत्रक । गोमयेन क्षितौ कुर्यान्मंडलं वर्तुलं पुनः १९ रक्तचंदनपुष्पैश्च युक्तं तत्र सहाक्षतम् । मंत्रेणानेन सांब त्वमर्घ्यं देहि रविं प्रति २० यथाशा विमलाः सर्वाः सूर्यभास्करभानुभिः । तथाशाः सफला मह्यं कुरु नित्यं ममार्घ्यतः—अर्घ्यमंत्रः २१

एव तमर्चयेत्तावद्यावद्वर्षं समाप्यते । समाप्ते तु व्रते वत्स कुर्यादुद्यापन शुभम् २२ गोमयेनानुलिप्तायां भूमौ मंडलमालिखेत् । र क्तचंदनरेखाभि कुंकुमेन विशेषतः २३ तन्मध्ये कारयेत्पद्मं द्वादशार सकर्णिकम् । सिंदूरपूरितदल जपाकुसुमशोभितम् २४ तन्मध्ये स्थापयेत्कुंभं प्रवालांकुरसंयुतम् । शालितंडुलसंपूर्णं शर्कराचंदनान्वितम् २५ तस्योपरि न्यसेत्पात्रं ताम्रं शक्त्या विनिर्मितम् । सौवर्णं भास्करं कृत्वा पद्महस्तं स्वशक्तितः २६ रक्तवस्त्रयुगोपेतं पात्रोपरि निवेशयेत् । पचामृतेन स्नपन रक्तपुष्पैश्च पूजयेत् २७ धूपदीपैश्च नैवेद्यै फलैः कालोद्भवैस्तथा । पूजयेज्जगतामीश यथाविभवसारत २८ अथांगपूजा—ॐ सूर्यायनमः पादौ पूजयामि । अरुणाय० जंघे पू० । माधवाय० जानुनी पू० । धात्रे न० ऊरू पू० । द्वरयेन० कटी० । भर्गाय० गुह्य० । सुवर्णरेतसेन० नाभिं० । अत्रयेन० जठरं० दिवाकराय० हृदय० । तपनाय० कंठं० । मानवे० स्कंधौ० । हंसाय० हस्तौ० । मित्राय० मुखं० । रवये० नासिकां० । खगाय० नेत्रे० । पूष्णेन० कर्णौ० । हिरण्यगर्भाय० ललाटं० । आदित्याय० शिरःपू० । भास्कराय० सर्वांगंपू० ॥ नमो नमः पापविनाशनाय विश्वात्मने सप्ततुरगमाय । सामर्ग्यजुर्धामनिधे विधातर्भवाब्धिपोताय नमः सवित्रे— इतिप्रार्थना २९ एव संपूजयेद्भानु नक्तं भुंजीत वाग्यतः । आचार्यं पूजयित्वा तु वस्त्राभरणैः शुभैः ३० तस्मै तां प्रतिमां कुंभं सहिरण्यं च दापयेत् । प्रीयतां भगवान्देवो मम संसारतारकः ३१ ब्राह्मणान् भोजयेत्पश्चादपूपैः पायसैः सह । तेभ्यस्तु कलशान्दद्याद्यथाशक्त्या तु दक्षिणाम् ३२ एवं य कुरुते सम्यग्व्रतमेतदनुत्तमम् । आशादित्यमितिख्यात तस्य पुण्यफल महत् ३३ निर्व्याधिश्च सतेजस्वी पुत्रपौत्रसमन्वि त । भुक्त्वा च भोगान्विपुलानमरैरपि दुर्लभान् ३४ देहांते रविसायुज्य प्राप्नुयादुत्तमोत्तमम् । प्राप्स्यते परमामृद्धिं विमुक्तः कुष्ठरोगतः ३५ आशाभंगो न तस्य स्यात्कदाचिदपि अ

न्मनि । एतस्मात्कारणाद्वत्स कुरुष्व व्रतमुत्तमम् ३६ एतच्छ्रुत्वा वचः सांबः पित्रा कृष्णेन भाषितम् । व्रतं चरित्वा संप्राप्तः सर्वसिद्धिं सुदुर्लभाम् ३७ य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः । तावुभौ पुण्यकर्माणौ रविलोकमवाप्नुतः ३८ ॥ इति श्रीस्कंदपु० आशादित्यव्रतं सं० ॥ ॥ अथाश्विनशुक्लांत्यभानुवासरमारभ्य माघशुक्लसप्तम्यावधि दानफलव्रतम् ॥ तत्र पूजा—ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्मकरकुंडलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः । इति ध्यानम् ॥ जगन्नाथायन० आवाहया० । पद्मासनाय० आसनं० । ग्रहपतये० पाद्यं० । तमोहर्त्रेन० अर्घ्यं० । मित्राय० आचमनीयं० । विश्वतेजसे० पंचामृतं० । सवित्रेन० शुद्धोदकं० । जगत्पतयेन० वस्त्रं० । त्रिमूर्तये० यज्ञोपवीतं० । हरये० गंधं० । सूर्याय० अक्षतान्० । भास्कराय० पुष्पं० । अहस्पतये० धूपं० । अज्ञाननाशिने० दीपं० । लोकेशाय० नैवेद्यं० । रवये० तांबूलं० । भानवे० दक्षिणां० । पूष्णेन० फलं० । खगाय० नीरांजनं० । भास्कराय० पुष्पांजलिं० । सर्वात्मनेन० प्रदक्षिणां० ॥ नमस्ते पद्महस्ताय नमस्ते वेदमूर्तये । नमस्ते देवदेवेश नमस्तेसर्वकामद । नमस्कारः ॥ दिवाकर नमस्तुभ्यं पापं नाशय भास्कर । त्रयीमयाय विश्वात्मन् गृहाणार्घ्यं नमोस्तुते ॥ अनेन द्वादशार्घ्याणि दद्यात् ॥ ततः ब्राह्मणपूजनम् ॥ इति पूजा ॥ ॥ अथ कथा ॥ पितृगृहे वर्तमाना कुंती व्यासं ददर्श ह । नमस्कृत्वा तु तं भक्त्या पाद्यार्घ्याचमनीयकम् १ दत्वा संप्रार्थ्य तं व्यासं कुंतीमुकुलितांजलिः । पतिपुत्रान्नमोक्षार्थं व्रतं ब्रूहि महामुने २ व्यास उवाच । श्रृणु दानफलं नाम वच्मि सर्वव्रतोत्तमम् । कैलासशिखरे रम्ये पार्वतीपरमेश्वरम् ३ व्रतानां सर्वदानानामुत्तमं ब्रूहि तत्त्वतः ॥ शंकर उवाच । साधु पृष्टं त्वया देवि ह्युच्यते सर्वतः शुभम् ४ भूमौ तु भारते वर्षे पुण्ये च यमुनातटे । ऋषिपत्नीसमूह-

श्च व्रत कर्तुं समागतः ५ तत्र गत्वा देवि शृणु प्रवदिष्यति ताः शुभम् । शंभोरनुज्ञया देवी कैलासादागता भुवि ६ यमुनां गन्तुकामा
सा ददर्श कुसुमावतीम् । कांचिन्मार्गे ऽतिदुःखेन क्लिश्यतीं च विपुत्रिकाम् ७ विदेहवासिनीं दीनां पतिभ्रष्टां सुदुःखिताम् । कुसुमाव-
तीं तदा देवी प्रुवाच मधुरं वच ८ आगच्छ त्वं मया सार्धं करिष्यावः शुभव्रतम् । पत्या च सह संयोगं पुत्रप्राप्तिर्भविष्यति ९
धनप्राप्तिश्च बहुला कृते दानफलव्रते । तया सह व्रतं चैतत्कर्तुं प्राप्ता शुचिस्मिता १० तथैव च पतिभ्रष्टा पुत्रहीनाऽस्मि दुःखिता ।
इत्यन्या चवदद्देवीं मया सह व्रतं कुरु ११ तच्छ्रुत्वा तां गृहीत्वा तु ताभ्यां सार्धं जगाम ह । पुण्यां च यमुनां गत्वा पूर्वाह्णे मानुवा
सरे १२ तत्र दृष्ट्वा तु सा देवी पप्रच्छ स्त्रीकदंबकम् । इदं व्रतं किमेतन्मे वक्तव्यं तु ऋषिस्त्रियः १३ स्त्रिय ऊचुः । पुण्यं व्रतमिदं देवि
सौरं पापप्रणाशनम् । सर्वसंपत्करं स्त्रीणां पतिपुत्राप्तमोक्षदम् १४ धर्मार्थकाममोक्षादीन्ददातीदं व्रतं नृणाम् । कन्यादानसहस्राणां गोदा
नानां त्रिलक्षकम् १५ भूहिरण्यतिलादीनां सर्वेषामधिकं शिवम् । सर्वदानस्य फलदं तस्माद्दानफलव्रतम् १६ तच्छ्रुत्वा पार्वती प्राह क
रिष्यामो वयं व्रतम् । दानफलव्रतं ब्रूत कालद्रव्यविशेषतः १७ स्त्रिय ऊचुः । पद्मासनः पद्मकरः पद्मगर्भः समद्युतिः । सप्ताश्वरथसंयुक्तो
द्विभुजश्च सदा रविः १८ ध्येयःसदा॰ चकः १९ एवं ध्यात्वा द्विज सम्यग्भास्करं देवरूपिणम् । आवाहयेज्जगन्नाथं भास्करं वेदरूपिण
म् २० नमः पद्मासनायेति दद्यादासनमुत्तमम् । पाद्यं ग्रहपते तुभ्यं मित्रायाचमनं तथा २१ त्रैलोक्यार्चितमो हर्त्रे अर्घ्यं दद्यात्प्रयत्नतः ।
पंचामृतविधानेन स्नापयेद्विश्वतेजसम् २२ शुद्धोदकं च दद्याद्वै सवित्रे च हि पार्वति । जगत्पतिं तु वस्त्रं च सुपवीतं त्रिमूर्तये २३
रक्तगंधं तु हरये दद्यात्सूर्याय चाक्षतान् । दद्यात्पुष्पं भास्कराय करवीरादिकं शुभम् २४ अहस्पतिं तु वै धूपं दीपमज्ञाननाशिने ।

लोकेशाय च नैवेद्यं तांबूलं रवये तथा २५ दक्षिणां भानवे दद्यात् पंचार्तिक्यं खगाय च । फलं च पूष्णे दद्याद्वै सर्वकामार्थसिद्धये २६
पुष्पांजलिं भास्कराय दद्याद्वै परया मुदा । सर्वात्मने च दद्याद्वै प्रदक्षिणाः पुनः पुनः २७ नमस्ते देवदेवेश नमस्ते वेदमूर्तये । नमः
कमलहस्ताय आदित्याय नमो नमः २८ नमस्कुर्यादनेनैव प्रार्थयेद्विश्वतेजसम् । रक्तगंधाक्षतैस्ताम्रपात्रेणार्घ्यं समंत्रकम् २९ दद्यादनेन
मंत्रेण व्रतसंपूर्तिहेतवे । दिवाकर नमस्तुभ्यं पापं नाशय भास्कर ३० त्रयीमयार्कविश्वात्मन् गृहाणार्घ्यं नमोस्तु ते । एवं द्वादशवारं
च व्रती दद्यात्समंत्रकम् ३१ तैलाम्ललवणक्षारं वर्जयित्वा तु भोजने । बहुबीजफलं वर्ज्यं शेषं चैव तु भोजयेत् ३२ कंदमूलफलाहारो
विशेषेण फलप्रदः । नीवारधान्यदध्यादिविशेषः सद्रसः स्मृतः ३३ एवं कुर्याद्व्रतं सम्यक् प्रत्येकं भानुवासरे । माघमासे शुक्लपक्षे सप्तम्या
यावदंतिकम् ३४ षष्ठ्यामुपोष्य विधिवत्सप्तम्यामुदये रवेः । रवेरभ्यर्च्य विधिवत्प्रतिमां वस्त्रसंयुताम् ३५ आचार्येणाग्निमादाय गोमये-
नोपलिप्य च । सघृतं परमान्नं च होमयेत्सौरमंत्रतः ३६ पायसं प्रतिमां वस्त्रं ब्राह्मणाय निवेदयेत् । एवं कुर्यात्पंचवर्षं पंचधान्यं सम-
र्पयेत् ३७ पंचप्रस्थप्रमाणं च प्रथमे व्रीहिमेव च । गोधूमांश्च द्वितीयेब्दे तृतीये चणकांस्तथा ३८ चतुर्थे तिलदानं च पंचमे माषमेव
च । सफलां दक्षिणां दद्याद्विप्रान् द्वादश भोजयेत् ३९ एवं कुर्याद्व्रतं सम्यक् संपूर्णफलमाप्नुयात् । तच्छ्रुत्वा ता गृहीत्वाथ चक्रिरे
व्रतमुत्तमम् ४० पद्मावती पतिं प्राप दमयंती यथा नलम् । सुमित्रा प्राप पुत्रं च मानयंती ह्युमां बहु ४१ सर्वभाग्ययुता गौरी
स्वर्णमाधूफलं तथा । तद्गृहीत्वा गता मार्गे ददर्श ब्राह्मणोत्तमम् ४२ विप्राय तत्फलं दत्वा ततः शिवपुरं ययौ । ततः सफलविप्रश्च
गृहं गत्वा सविस्मयः ४३ धनधान्यसमृद्धस्तु बहुगोधनसंकुलः । सर्वरत्नमयो भूत्वा भार्यां वचनमब्रवीत् ४४ सर्वसंपत्प्रदं चाद्य किं

कृत हि त्वया शुभम् । सा ऽब्रवीद्भगवन् स्वामिन् भवद्भिः फलमाहृतम् ४५ स्वर्णमाषफल तश्च केन दत्त वद प्रभो ॥ विप्र उवाच । महादेव्या फलं दत्तं पार्वत्या कृपया मम ४६ इति तस्य वचः श्रुत्वा भार्या वचनमब्रवीत् । गंतव्यमाशु कैलास मया सार्द्ध त्वया प्रभो ४७ ततः शिवपुरं प्राप्तो भार्यया संयुतो द्विजः । नमस्कृत्य यथाशक्त्या पप्रच्छैव शिवां द्विज ४८ तत्फलं कथ्यतां देवि कथं प्राप्तं त्वया शुभम् । ततो देव्या च तत्सर्वं कथितं फलदायकम् ४९ तदागत्य कृत सर्वं तूर्णं दानफलव्रतम् ॥ व्यास उवाच । कुंति त्व यापि कर्तव्यमिद दानफलव्रतम् ५० यः पठेदिदमाख्यानं शृणोति श्रद्धयान्वितः । ते सर्वे पापनिर्मुक्ता यास्यंति परमां गतिम् ५१ ॥ इति श्रीस्कंदपु० दानफलव्रतं संपूर्णम् ॥ ॥ ॥ ॥ अथ सोमवारपूजाविधिः ॥ येभ्योमातेति जप्त्वा । आगमार्थं तु देवानामिति घंटानाद कृत्वा । अपसर्पंत्विति छोटिकामुद्रां प्रदर्श्य । तीक्ष्णदंष्ट्रेति क्षेत्रपालं संप्रार्थ्य । आचम्य प्राणानायम्य तिथ्यादि संकीर्त्य । मम सकुटुंबस्य क्षेमस्थैर्यविजयायुरारोग्यैश्वर्याभिवृद्धये उमामहेश्वरप्रीत्यर्थं चतुर्दशवर्षपर्यंतं सोमवारव्रत करिष्ये । तदंगत्वेन षोडशोपचारैः उमामहेश्वरपूजन करिष्ये ॥ ध्यायेन्नित्य महेश रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् । ध्यानम् ॥ ॐनमःशिवायेति षोडशोपचारैः पूजयेत् ॥ ॥ अथ कथा ॥ सूत उवाच । नित्यानंदमयं शांतं निर्विकल्पं निरामयम् । शिवतत्त्वमनाद्यंतं ये विदुस्ते परंगता १ विरक्ताः कामभोगेभ्यो ये च कुर्वंत्यहैतुकीम् । भक्तिं परां शिवे धीरास्तेषां मुक्तिर्न संशयः २ विषयानभिसंधाय ये

१ मत्रेणपोक्तिरेव साध्वी, उद्यापनविधिस्तैर्नोक्तत्वात् ।

कुर्वंति शिवे रतिम् । विषयैर्नाभिभूयंते भुंजानास्तत्फलान्यपि ३ येन केनापि भावेन शिवभक्तियुतो नरः । न विनश्यति यात्येव का-
लेनापि परां गतिम् ४ आरुरुक्षुः परं स्थानं विषयांस्त्यक्तुमक्षमः । पूजयेत्कर्मणा शंभुं भोगांते शिवमाप्नुयात् ५ अशक्ताः केचिदुत्स्रष्टुं
प्रायो विषयवासनाम् । अतः कर्ममया तूक्ता कामधेनुः शरीरिणाम् ६ मायामयेपि संसारे ये विहृत्य चिरं सुखम् । मुक्तिमिच्छंति
देहांते तेषां धर्मोयमीरितः ७ शिवपूजा सदा लोके हेतुः स्वर्गापवर्गयोः । सोमवारे विशेषेण प्रदोषादिगुणान्विते ८ श्रावणे चैत्रवैशाखे
ऊर्जे वा मार्गशीर्षके । प्रथमे सोमवारे तद्गृह्णीयाद्व्रतमुत्तमम् ९ केवलं चापि ये कुर्युः सोमवारे शिवार्चनम् । न तेषां विद्यते किंचि-
दिहामुत्र च दुर्लभम् १० उपोषितः शुचिर्भूत्वा सोमवारे जितेंद्रियः । वैदिकैर्लौकिकैर्मंत्रैर्विधिवत्पूजयेच्छिवम् ११ ब्रह्मचारी गृहस्थो वा
कन्या वापि सभर्तृका । विधवा वापि संपूज्य लभते वरमीप्सितम् १२ अत्रापि कथयिष्यामि कथां श्रोतृमनोहराम् । श्रुत्वा मुक्ति
प्रयात्येव भक्तिर्भवति शांभवी १३ [ श्रुत्वा कृतधियः शंभोर्भक्तिं कुर्वंति सर्वदा ]॥ आर्यावर्ते नृपः कश्चिदासीद्धर्मभृतां वरः । चित्रधर्मेति
विख्यातो धर्मराजो दुरात्मनाम् १४ स गोप्ता धर्मसेतूनां शास्ता दुष्पथगामिनाम् । यष्टा समस्तयज्ञानां त्राता शरणमिच्छताम् १५
कर्ता सकलपुण्यानां दाता सकलसंपदाम् । जेता सपत्नवृंदानां भक्तः शिवमुकुंदयोः १६ सो ऽनुकूलासु पत्नीषु पुत्रमेकं न लब्धवान् ।
चिरेण प्रार्थितो लेभे कन्यामेकां वराननाम् १७ स लब्ध्वा तनयां दिष्ट्या हिमवानिव पार्वतीम् । आत्मानं देवसदृशं संपूर्णं च
मनोरथम् १८ स एकदा जातकलक्षणज्ञानाहूय सर्वान् द्विजवृंदमुख्यान् । कौतूहलेनाभिनिविष्टचेताः पप्रच्छ कन्याजनने फलानि १९
अथ तत्राब्रवीदेको बहुज्ञो द्विजसत्तमः । एषा सीमंतिनी नाम्ना कन्या तव महीपते २० उमेव मांगल्यवती दमयंतीव रूपिणी । भारतीव

कन्याभिन्ना लक्ष्मीरिव महागुणा २१ सुप्रजा देवमातेव जानकीव धृतव्रता। रविप्रभेव सत्कांतिश्चंद्रिकेव मनोरमा २२ दशवर्षसहस्राणि स-
हभर्त्रा प्रमोदते। प्रसूय तनयानष्टौ परं सुखमवाप्स्यति २३ इत्युक्तवंतं नृपतिर्धनैः संपूज्य तं द्विजम्। अवाप परमां प्रीतिं तदागमनसेवया२४
अथान्योपि द्विज प्राह धैर्यवानविशंकित। एषा चतुर्दशे वर्षे वैधव्यं प्रतिपत्स्यति २५ इत्याकर्ण्य वचस्तस्य वज्रनिर्घातनिष्ठुरम्। मुहूर्तम
भवद्राजा चिंताव्याकुलमानसः २६ अथ सर्वान्समुत्सृज्य ब्राह्मणान्ब्रह्मवत्सलः। सर्वं दैवकृतं मत्वा निश्चितः पार्थिवोऽभवत् २७ सापि
सीमंतिनी बाला क्रमेण गतशैशवा। वैधव्यमात्मनो भावि शुश्रावास्यसखीमुखात् २८ परं निर्वेदमापन्ना चिंतयामास बालिका।
याज्ञवल्क्यमुनेः पत्नीं मैत्रेयीं पर्यपृच्छत २९ मातस्त्वच्चरणांभोजं प्रपन्नास्मि भयाकुला। सौभाग्यवर्धनकरं मम शंसितुमर्हसि ३० इ
ति प्रपन्नां नृपतेः कन्यां प्राह मुनेः सती। शरणं व्रज तन्वंगि पार्वतीं शिवसंयुताम् ३१ सोमवारे शिवं गौरीं पूजयस्व समाहिता।
उपोषिता च सुस्नाता विरजांबरधारिणी ३२ मितवाङ्निर्मलमतिः पूजां कृत्वा यथोचिताम्। अब्दमेकं व्रतं कुर्याद्व्रतोद्यापनमाचरेत् ३३
उमया सहितं रुद्रं सुवर्णेन च कारयेत्। रौप्येण वृषभं कृत्वा कलशोपरि विन्यसेत् ३४ तस्याग्रे लिंगतोभद्रं ब्रह्मादिस्थापनं तथा।
स्वशाखोक्तेन विधिना जुहुयाद्घृततिलौदनम् ३५ पृथक् शिवशिवामंत्रैरष्टोत्तरशतद्वयम्। कुर्यादुद्यापनं तस्य समासो यदुदीरितम् ३६ उद्या-
पनं विना यत्तु तद्व्रतं निष्फलं भवेत्। ब्राह्मणान्भोजयित्वाथ शिवं सम्यक् प्रसादय ३७ पापक्षयोऽभिषेकेण साम्राज्यं पीठपूजनात्।
गंधदानाच्च सौभाग्यमायुरक्षतदानतः ३८ धूपदानेन सौगंध्यं कांतिर्दीपप्रदानतः। नैवेद्येन महाभोगो लक्ष्मीस्तांबूलदानतः ३९ धर्मार्थ
काममोक्षाश्च नमस्कारप्रभावतः। अष्टैश्वर्यादिसिद्धीनां जप एव हि कारणम् ४० होमेन सर्वसौख्यानां समृद्धिरुपजायते। सर्वेषामेव दे

वार्ना तुष्टिः संयमिभोजनात् ४१ इत्थमाराध्य शिवं सोमवारे शिवामपि । अत्यापदमपि प्राप्तां निस्तीर्य सुभगा भव४२घोराद्घोरं विपन्ना
पि महाक्लेशभयानकम् । शिवपूजाप्रभावेण तरिष्यसि महद्भयात् ४३ इत्थं सीमंतिनीं सम्यगनुशास्य मुनेः सती । ययौ सापि वरारोहा
राजपुत्री तथाऽकरोत् ४४ दमयंत्या नलस्यासीदिंद्रसेनाह्वयः सुतः । तस्य चंद्रांगदो नाम पुत्रोऽभूच्चंद्रसन्निभः ४५ चित्रवर्मा नृपश्रेष्ठः
समाहूय नृपात्मजम् । कन्यां सीमंतिनीं तस्मै प्रायच्छद्गुर्वनुज्ञया ४६ अभून्महोत्सवस्तत्र तस्या ह्युद्वाहकर्मणि । यत्र सर्वमहीशानां
समुदायो महानभूत् ४७ तस्याः पाणिग्रहं काले कृत्वा चंद्रांगदः कृती। उवास कतिचिन्मासांस्तत्रैव श्वशुरालये ४८ एकदा यमुनां
तर्तुं स राजतनयो बली । ममज्ज सहकैवर्तैरावर्ताभिहता तरी ४९ हाहेति शब्दः सुमहानासीत्तस्यास्तटद्वये । पश्यतां सर्वसैन्यानां
प्रलापो दिवमस्पृशत् ५० तच्च सीमंतिनी श्रुत्वा पपात भुवि मूर्च्छिता । इंद्रसेनोपि राजेंद्रः पुत्रवार्तां सुदुःसहाम् ५१ आबालवृद्धव-
निताश्रुकुशुः शोकविह्वलाः । सा च सीमंतिनी साध्वी भर्तृलोकमियात्सती ५२ पित्रा निषिद्धा स्नेहेन वैधव्यं प्रतिपद्यत । मुनि-
पत्न्योपदिष्टं यत्सोमवारव्रतं शुभम् ५३ न तत्याज शुभाचारा वैधव्यं प्राप्तवत्यपि । एवं चतुर्दशे वर्षे दुःखं प्राप्य सुदारुणम् ५४
ध्यायंत्याः शिवपादाब्जं वत्सरत्रयमत्यगात् । चंद्रांगदोपि तद्भर्ता निमग्नो यमुनाजले ५५ अधोधो मज्जमानोऽसौ ददर्शोरग-
कामिनीः । जलक्रीडानुसक्तास्ता दृष्ट्वा राजकुमारकम् ५६ विस्मितास्तमधो निन्युः पातालं पन्नगालयम् । स नीयमानस्तरसा प-
न्नगीभिर्नृपात्मजः ५७ तक्षकस्य पुरं रम्यं विवेश परमाद्भुतम् । सोऽपश्यद्राजतनयो महेंद्रभवनोपमम् ५८ नागकन्यासहस्रेण
समंतात्परिवारितम् । दृष्ट्वा राजसुतो धीरः प्रणिपत्य सभास्थले ५९ उत्थितः प्रांजलिस्तस्थौ तेजसाक्षिप्तलोचनः । नागराजोपि

ते दृष्ट्वा राजपुत्रं मनोरमम् ६० अथ पृष्टो राजपुत्रस्तक्षकेन महात्मना । कस्यासीस्तनयः कस्त्वं को देशः कथमागतः ६१ राजपुत्र उवाच । अस्ति भूमंडले कश्चिद्देशो निषधसंज्ञकः । तस्याधिपो ऽभवद्राजा नलो नाम महायशाः ६२ स पुण्यकीर्ति क्षितिपो दमयंत्याः पति प्रभु । तस्यासीदिंद्रसेनाख्यो पुत्रस्तस्य महात्मनः ६३ चंद्रांगदो ऽस्मि नामाहं नवोढः श्वशुरालये । विहरन्यमुनातोये निमग्नो दैवचोदितः ६४ एताभिः पन्नगस्त्रीभिरानीतोस्मि तवांतिकम् । दृष्टाद्य तव पादाब्जं पुण्यैर्जन्मांतरार्जितैः ॥ अथ धन्योस्मि धन्योस्मि कृतार्थौ पितरौ मम ६५ तक्षक उवाच । भो भो नरेंद्रदायाद मा भैषीर्धीरतां व्रज । सर्वदेवेषु को देवो युष्माभिः पूज्यते सदा ६६ राजपुत्र उवाच । यो देवः सर्वदेवेषु महादेव इति स्मृतः । पूज्यते स हि विश्वात्मा शिवोऽस्माभिरुमापति ६७ इत्याकर्ण्य वचस्तस्य तक्षकः प्रीतमानसः । जातभक्तिर्महादेवे राजपुत्रमभाषत ६८ तक्षक उवाच । परितुष्टोस्मि भद्रं ते तव राजेंद्रनंदन ६९ दत्त्वा बहुरत्नानि दिव्यान्याभरणानि च । वाहनाय ददावेकं राक्षसं पन्नगेश्वरः ७० तत्सहायार्थमेकं च पन्नगेंद्रः कुमारकम् । नियुज्य तक्षकः प्रीत्या गच्छेति विससर्ज तम् ७१ इति चंद्रांगदः सर्वं संगृह्य विविधं धनम् । अश्वं कामगमारुह्य ताभ्यां सह विनिर्ययौ ७२ ततो मुहूर्तेनोन्मज्य तस्मादेव नदीजलात् । विजहार तटे रम्ये दिव्यमारुह्य वाजिनम् ७३ अथास्मिन् समये तन्वी सा च सीमंतिनी सती । स्नातुं समाययौ तत्र सखीभिः परिवारिता ७४ सा ददर्श नदीतीरे विहरंतं नृपात्मजम् । रक्षसा नररूपेण नागरूपेण चान्वितम् ७५ दृष्ट्वावरुह्य तुरगादुपविष्टः सरित्तटे । चंद्रांगदो वरारोहामुपवेश्येदमब्रवीत् ७६ का त्वं कस्य कलत्रं वा कस्यासीस्तनया सति । किमीदृशं गता बाल्ये दुःसहं शोकलक्षणम् ७७ इति स्नेहेन संपृष्टा सा बभूवाश्रुलोचना । लज्जिता स्वयमाख्यातुं तत्सखी सर्वमब्रवीत् ७८ इयं सीमंतिनी

नाम्ना स्नुषा मगधभूपतेः । चंद्रांगदस्य महिषी तनया चित्रवर्मणः ७९ अस्याः पतिर्दैवयोगान्निमग्नोऽस्मिन्महाजले । तेनेयं प्राप्तवैधव्या
बाला दुःखेन पीडिता ८० एवं वर्षत्रयं नीतं शोकेनापि बलीयसा । अद्येंदुवासरे प्राप्ते स्नातुमत्र समागता ८१ श्रुत्वा चंद्रांगदः सर्वं
प्रियायाः शोककारणम् । अथाश्वास्य प्रियां तन्वीं विविधैर्वचनैर्नृपः ८२ क्वापि लोके मया दृष्टस्तव भर्ता वरानने । त्वद्व्रताचरणाच्छ्रां-
तः सद्य एवागमिष्यति ८३ नाशयिष्यति ते शोकं द्वित्रिभिस्तु ध्रुवं दिनैः । एतच्छंसितुमायातस्तव भर्तुः सखास्म्यहम् ८४ अत्र कार्यो न
संदेहः शपामि शिवपादयोः । तावत्त्वया हृदि स्थाप्यं प्रकाशं न च कुत्रचित् ८५ लज्जानम्रमुखी कर्णे शशंसान्यत्प्रयोजनम् ।
इमं वृत्तांतमाख्यातं स्वपित्रोः शोकतप्तयोः ८६ इत्युक्त्वाश्वं समारुह्य जगाम च तलं प्रति । सापि तद्वचनं श्रुत्वा सुधाधाराशताधि-
कम् ८७ एष एव पतिर्मे स्याद्ध्रुवं नान्यो भविष्यति । परलोकादिहायातः कथमेषः स्वरूपधृक् ८८ मुनिपत्न्या यदुक्तं मे परमापद्गता-
पि च । व्रतमेतत्कुरुष्वेति तस्य वा फलमद्य मे ८९ नूनं तस्या वचः सत्यं को विंद्यादीश्वरेहितम् । निमित्तानि च दृश्यंते मंगला-
नि दिने दिने ९० प्रसन्ने पार्वतीनाथे किमसाध्यं शरीरिणाम् । इत्थं विमृश्य बहुधा सा पुनर्मुक्तसंशया ९१ एवं चंद्रां-
गदः पत्नीमवाप समये शुभे । ययौ स्वनगरीं भूयः श्वशुरेणानुमोदितः ९२ चंद्रसेनोपि नृपती राज्ये स्थाप्य स्वमात्मजम् ।
तपसा शिवमाराध्य लेभे संयमिनां गतिम् ९३ दशवर्षसहस्राणि सीमंतिन्या स्वभार्यया । सार्द्धं चंद्रांगदो राजा बुभुजे वि-
षयान्बहून् ९४ प्रसूय तनयानष्टौ कन्यामेकां वराननाम् । पतिं सीमंतिनी लेभे पूजयंती महेश्वरम् ९५ शिवलोकं ततो गत्वा शिवेन
सह मोदते ९६ विचित्रमिदमाख्यानं मया समनुवर्णितम् । यः पठेच्छृणुयाद्भक्त्या प्राप्नोति परमां गतिम् ९७ ॥ इति श्रीस्कं० सोमवार

ध
१९॥

व्रतकथा समाप्ता ॥ ॥ अथोद्यापनम् ॥ स्कंद उवाच ॥ व्रतस्योद्यापन कर्म कथं कार्यं च मानवैः । को विधिः कानि द्रव्याणि कथयस्व म-
प्रभो ॥ ईश्वर उवाच । शृणु षण्मुख यत्नेन लोकानां हितकाम्यया । उद्यापनविधिं चैव कथयामि तवाग्रतः ॥ यदा संजायते वित्त भक्ति
श्रद्धासमन्विता । स एव व्रतकालश्च यतोऽनित्यं हि जीवितम् ॥ चतुर्दशाब्द कर्तव्य सोमवारव्रतं शुभम् । श्रावणे कार्तिके ज्येष्ठे वैशा
मार्गशीर्षके ॥ सुस्नातश्च शुचिर्भूत्वा शुक्लांबरधरो नरः । कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जितः ॥ संपाद्य सर्वसंभारान्मंडलं तत्र कारयेत्
वस्त्रैः पुष्पैः समाच्छन्नं पल्लवैश्च शोभितम् ॥ तन्मध्ये लेखयेद्दिव्यं लिंगतोभद्रमंडलम् । अथवा सर्वतोभद्रं मंडपांतः प्रकल्पयेत् ॥ शो
भोपशोभासंयुक्तं दीपैः सर्वत्र सोज्वलम् । अव्रण सजलं कुंभ तस्योपरि तु विन्यसेत् ॥ सौवर्णं राजतं ताम्रं मृन्मयं वापि कारयेत् । आ
चार्यं वरयेत्तत्र ऋत्विग्भिः सहितं शुचिः ॥ शिवरूपाश्च ते विप्रा पूज्याश्चंदनपुष्पकैः । अनुज्ञातश्च तैर्विप्रैः शिवपूजां समारभेत् ॥ रुद्र
नाम्ना नमोंतेन ब्राह्मणानपि पूजयेत् । कुंभोपरि न्यसेद्देवमुमया सहितं शिवम् ॥ सौवर्णमथवा रौप्ये वृषभे संस्थितं शुभम् ॥ उमामहेश्व
मूर्तिं पूजयेत्सुसमाहितः । वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत् । स्वगृह्योक्तेन विधिना कृत्वाग्निस्थापनं ततः ॥ ततो होमं च मंत्रे
त्र्यंबकेण च कारयेत् । गौरीर्मिमायेति मंत्रेण शतमष्टोत्तरद्वयम् ॥ पलाशानां समिद्भिश्च यवव्रीहितिलाज्यकैः । पूर्णाहुतिं ततो दद्यात्कुर्
स्विष्टकृदादिकम् ॥ होमांते च गुरुं पूज्य सपत्नीकं समाहितः । प्रतिमां कुंभसहितामाचार्याय निवेदयेत् ॥ शंभो प्रसीद देवेश सर्वलो
केश्वर प्रभो । तव रूपप्रदानेन मम सन्तु मनोरथाः । प्रतिमादानमंत्रः ॥ यन्मत्त्वया देवदेवेश मया व्रतमिदं कृतम् । न्यूनं वाथ क्रियाही
परिपूर्णं तदस्तु मे ॥ भुंजीत सहधर्मात्मा शिष्टैरिष्टैः स्वबंधुभिः । अनेनैव विधानेन य इदं व्रतमाचरेत् ॥ यं यं चिंतयते कामं त

प्राप्नोति मानवः । इहलोके सुखी भूयाद्भुक्त्वाभोगान्यथेप्सितान् ॥ इति श्रीसोमवारव्रतं संपूर्णम् ॥ ॥ अथ प्रकारांतरेण सोमवारव्रतं लिख्यते ॥ गंधर्व उवाच । कथं सोमव्रतं कार्यं विधानं तस्य कीदृशम् । कस्मिन्काले तु कर्तव्यं सर्वं विस्तरतो वद ॥ गोशृंग उवाच । साधु साधु महाप्राज्ञ सर्वभूतोपकारक । यन्न कस्यचिदाख्यातं तदद्य कथयामि ते ॥ सर्वरोगहरं दिव्यं सर्वसिद्धिप्रदायकम् । सोमवारव्रतं नाम सर्वभूतोपकारकम् ॥ सोमवारव्रतं नाम सर्वकामफलप्रदम् । सार्वकामिकं विज्ञेयं वर्णानां शुभकारकम् ॥ नारीनरैः सदा कार्यं दृष्टादृष्टफलोदये । ब्रह्मविष्ण्वादिभिर्देवैः कृतमेतन्महाव्रतम् ॥ पुनस्तत्सोमराजेन दक्षशापहते न च । अभिमानयुतेनाथ शंभुनैव परेण तु ॥ ततस्तुष्टो महादेवः सोमराजस्य भक्तितः । तेनोक्तं यदि तुष्टोसि तिष्ठात्रस्थो निरंतरम् ॥ यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठंति भूधराः । तावन्मे स्थापितं लिंगमुमया सह तिष्ठतु ॥ रोहिण्याः पतिरेवं तु प्रार्थयित्वा महेश्वरम् । ततः शुद्धशरीरोसौ गगनस्थो विराजते ॥ ततःप्रभृति येकेचित्कुर्वंति भुवि मानवाः । तेपि तत्पदमायांति विमलांगाश्च सोमवत् ॥ अत्र किं बहुनोक्तेन विधानं तस्य कीर्तये । यस्मिन्कस्मिंश्चिन्मासे च शुक्ले सोमो भवेद्यदा ॥ दंतशुद्धिं पुरा ब्राह्मे कृत्वा स्नानं समाचरेत् । स्वधर्मविहितं कर्म कृत्वा स्थाने मनोरमे ॥ अव्रणाभिनवं शुद्धं न्यसेत्कुंभं सुशोभनम् । चूतपल्लवविन्यासे चंदनेन विचर्चिते ॥ श्वेतवस्त्रपरीधाने सर्वाभरणभूषिते । कुंभे पात्रं च विन्यस्य ह्याधारसहितं शिवम् ॥ अष्टौ विघ्नेश्वरान्देवान्सोमनाथं सशक्तिकम् । वाससा सहितं तत्र श्वेतपुष्पैः प्रपूजयेत् ॥ विविधं भक्ष्यभोज्यं च फलं वै बीजपूरकम् । अनेनैव तु मंत्रेण पूजां होमं समाचरेत् ॥ कृत्वैवं वंदनं रात्रौ प्राप्य चाज्ञां स्वपेन्नरः । दर्भशय्यां समारूढो ध्यायेत्सोमेश्वरं हरम् ॥ एवं कृते तु प्रथमे कुष्ठानां नाशनं भवेत् । द्वितीये सोमवारे तु करंजं दंतधावनम् ॥ देवं संपूजयेत्सु-

द्रुमं ज्येष्ठराशिसमन्वितम् । शतपत्रैः पूजयित्वा मधु प्राश्य यथाविधि ॥ नारिंग तत्र दत्त्वा तु शेषं पूर्ववदाचरेत् । एव कृते द्वितीयेऽथ गोलक्षफलमाप्नुयात् ॥ सोमवारे तृतीयेऽथ वटजं दंतधावनम् । शिवोत्तमं यजेद्देव रौद्रीशक्तिसमन्वितम् ॥ पूजयेज्जातिपुष्पैश्च गोमूत्रं प्राशयेन्निशि । नैवेद्यं दापयेन्मुद्ग भक्ष्यभोज्यसमन्वितम् ॥ एव कृते तृतीये तु कोटियज्ञफल लभेत् । चतुर्थे सोमवारे तु अपामार्गसमुद्भवैः । कृत्वा काष्ठैर्दंतशुद्धिं तथा नक्ते प्रपूजयेत् । दाडिमीफलसयुक्ता नैवेद्ये क्षीरशर्करा ॥ दभ्रस्तु प्राशनं कृत्वा दर्भस्थो जागृयान्निशि । एवं कृते चतुर्थे तु यज्ञायुतफलं लभेत् ॥ पचमे सोमवारे तु वृक्षाश्वत्थसमुद्भवम् । दंतकाष्ठं तत कृत्वा ध्येक रुद्र प्रपूजयेत् । नैवेद्ये दधिभक्तं च कूष्मांडीफलसंयुतम् । घृत तु प्राशयेत्तत्र आचार्यं पूजयेत्ततः ॥ एव कृते पचमेपि सप्तजन्मसमुद्भवैः । ब्रह्महत्यादिभि सर्वैर्मुच्यते पापराशिभिः ॥ सोमवारे पुनः षष्ठे निर्गुंडीदंतधावनम् । त्रिमूर्तिं पूजयेद्देवं रक्तपुष्पैर्विधानतः ॥ देवीं कलाविकरिणीं फल पुष्पसमद्भके । कुशोदक तु सप्राश्य गीतैर्नृत्यैस्तु जागृयात् ॥ एवं कृते ततः षष्ठे पञ्चाब्द च फल लभेत् । सप्तमे सोमवारे च प्लक्षजं दंतधावनम् ॥ श्रीकंठं पूजयेद्देवं ततः श्रीवृक्षपल्लवैः । वलमथिनीं देवीं पूजयेच्च विधानतः ॥ विविध भक्ष्यभोज्य च नारीकेलसमन्वितम् । दुग्धं वै प्राशयेत्तत्र शेष पूर्ववदाचरेत् ॥ सप्तसागरदानस्य सम्यगाप्तस्य यत्फलम् । सोमवारे सप्तमे तु कृते तत्फलमाप्नुयात् ॥ अष्टमे सोमवारेऽथ खादिरं दंतधावनम् । सर्वभूतदमं नाथ पूजयेद्दै शिखंडिनम् ॥ सुगन्धवृक्षकुसुमैर्यक्षगंधर्वलेपनैः । कदलीफलसयुक्त भक्ष्य भोज्यं प्रदापयेत् ॥ गोमयं प्राशयेद्रात्रौ जागरं तत्र कारयेत् । एव कृतेऽष्टमे सोमे सपूर्णफलमाप्नुयात् ॥ गगास्नाने कृते सोमे कोटिस्नानफल स्मृतम् । दश भारसहस्राणि कुरुक्षेत्रे रविग्रहे ॥ विप्राय वेदविदुषे यद्दत्वा फलमाप्नुयात् । तत्पुण्य कोटिगुणित सोमवारव्रते कृते ॥ गुग्गुलैर्धूपित

कृत्वा कोटिशो यत्फलं भवेत् । तत्फलं तु भवेत्तस्य सोमवारव्रते कृते ॥ सर्वैश्वर्यसमायुक्ताः शिवतुल्यपराक्रमाः। रुद्रलोके वसेद्दीर्घं ब्रह्मणा सह मोदते ॥ संप्राप्ते नवमे वारे कुर्यादुद्यापनं शुभम् । यथा भवति गंधर्व तथा वक्ष्यामि ते ऽधुना ॥ मंडपे मंडनं कृत्वा पताकाभिश्च तोरणैः । द्वाराणि चापि चत्वारि कुंडं कृत्वा विधानतः ॥ मध्ये वेदी प्रकर्तव्या चतुरस्रा सुशोभना । निष्पाद्य मंडपं सम्यङ्मध्ये पद्मं च कल्पयेत् ॥ कलशानष्टदिग्भागे सहिरण्यान्पृथक्पृथक् । स्थापयित्वा शक्तयस्तु वामाद्याः पूर्वतः क्रमात् ॥ कर्णिकायां तु विन्यस्य श्रीसोमेशं महाप्रभुम् । प्रतिरूपं प्रसन्नाया जपाशक्तिसमन्वितः ॥ होमपात्रादिके द्रव्ये मधुना परिपूरिते । रुक्मशय्यास्थितं देवं यत्रस्थं पूजयेत्क्रमात् । गंधपुष्पैश्च नैवेद्यैर्भक्ष्यभोज्यैः पृथक्पृथक् । वस्त्रालंकारतांबूलैश्छत्रचामरदर्पणैः ॥ दीपिकां च वितानं च पर्यंकं च सतूलिकम् । सोमेश्वरं समुद्दिश्य देयं पौराणिके गुरौ ॥ पूजयित्वा तथाचार्यं होमं तत्रैव कारयेत् । देवस्य सन्निधौ सम्यक् रात्रौ जागरणं चरेत् ॥ पंचगव्यं ततः पीत्वा ध्यायेत्सोमेश्वरं हृदि । प्रभातेथ ततः स्नात्वा देया गौश्च विधानतः॥ ततो भक्त्या हि गंधर्व क्षीरखंडादिनिर्मितैः । भक्ष्यभोज्यैरनेकैश्च भोजयेद्ब्राह्मणान्यतीन् ॥ अष्टौ विघ्नेश्वरा ये च तैश्च होमं समाचरेत् । वस्त्रयुग्मं ततो दत्त्वा गां च दत्त्वा विसर्जयेत् ॥ एवं कृते व्रते सम्यक् लभते पुण्यमक्षयम् । धनधान्यसमायुक्तः पुत्रदारैः समन्वितः ॥ न कुले जायते तस्य दरिद्री दुःखितो ऽपि वा । अपुत्रो लभते पुत्रं वंध्या पुत्रवती भवेत् ॥ काकवंध्या च या नारी मृतपुत्रा च दुर्भगा । कन्याप्रसूतया कार्यं रोगिभिश्च विशेषतः ॥ एवं कृते विधाने तु देहपाते शिवं व्रजेत् । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ भुंक्ते ऽसौ विपुलान्भोगान्यावदाभूतसंप्लवम् । इत्येतत्कथितं सर्वं सोमवारव्रतं क्रमात् ॥ इति श्रीस्कंदपु० सोमवारव्रतं सं० ॥ ॥ अथैकभुक्तसोमवारव्रतं लिख्यते ॥

श्रावणे चैत्रवैशाखे ज्येष्ठे मार्गशिरे तथा । प्रथमे सोमवारे च गृह्णीयाद्व्रतमुत्तमम् ॥ यदा श्रद्धा भवेत्कर्तुः सोमवारव्रतमति । तदाचार्यं पुरस्कृत्य श्रद्धाभक्तिसमन्वितः ॥ सुस्नातश्च शुचिर्भूत्वा शुक्लांबरधरो नरः । कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जितः ॥ आहरेच्छ्वेतपुष्पाणि मालतीकुसुमानि च । श्वेतपद्मानि दिव्यानि चंपकानि तथैव च ॥ कुंदमंदारजैः पुष्पैः पुन्नागशतपत्रकैः । अर्चयेदुमया सार्द्धं शंकरं लोकशंकरम् ॥ मलयाद्रिजधूपेन धूपयेत्पार्वतीपतिम् । कामिकेनापि मंत्रेण व्यापकेन महेश्वरम् । पूजयेन्मूलमंत्रेण त्र्यंबकेणाथवा पुनः ॥ भवाय भवनाशाय महादेवाय धीमते । उग्राय उग्रनाशाय शर्वाय शशिमौलिने ॥ रुद्राय नीलकंठाय शिवाय भवहारिणे । ईशानाय नमस्तुभ्यं सर्वकामप्रदाय च ॥ नमो देवाधिदेवाय सर्वांगे पूजयेद्विभुम् । एवं संपूज्य देवेशमुपचारैः पृथक्पृथक् ॥ यथावित्तानुसारेण भक्त्या पादौ प्रपूजयेत् । शंकराय नमो जंघे शिवायेति च जानुनी ॥ शूलपाणे नमो गुल्फे कट्यां शंभुं प्रपूजयेत् । गुह्यं स्वयंभूनाम्ना पूजयेत्पार्वतीपतिम् ॥ ततो नमो महादेवं पूजयेन्नाभिमंडले । उदरे विश्वकर्तारं पार्श्वयोः सर्वतोमुखम् ॥ स्थाणुं स्तनौ च संपूज्य नीलकंठं तु कंठके । मुखं संपूजयेन्नित्यं शिवनाम्ने महात्मने ॥ त्रिनेत्राय च नेत्राय शिरसे नागभूषणे । नमो देवाधिदेवाय सर्वांगे पूजयेद्विभुम् ॥ एवं संपूज्य देवेशमुपहारैर्मनोरमैः । यथावित्तानुसारेण तस्य पुण्यफलं शृणु ॥ सोमवारेऽर्चयतो ये पार्वत्या सह शंकरम् । ते लभन्त्यक्षयाँल्लोकान् पुनरावृत्तिदुर्लभान् ॥ एकभक्तस्य यत्पुण्यं कथयामि समासतः । सप्तजन्मार्जितं पापमभेद्यं देवदानवैः ॥ विनश्यत्येकभक्तेन नात्र कार्या विचारणा । एवं संवत्सरं यावद्भक्त्या व्रतमिदं चरेत् ॥ यस्मिन्मासे प्रारभते तस्मिन्मासि समापयेत् । उपवासेन नैवाप समाचरति मानवः ॥ चिरं व्रतं प्रकुर्वीत कृतं संपूर्णतां नयेत् । स्वल्पव्रतप्रमादेन तत्सर्वं निष्फलं भवेत् ॥ उमामहेश्वरं हैमं वृषभेण

समन्वितम् । यथाशक्त्या प्रकर्तव्यं वित्तशाठ्यं न कारयेत् ॥ मंडलं कारयेद्दिव्यं तत्तु लिंगोद्भवं शुभम् । कलशं पयसा पूर्णं श्वेतवस्त्रसमन्वितम् ॥ पात्रं शर्करया युक्तं कुंभस्योपरि स्थापयेत् । स्थापयेन्मंडले दिव्यं कलशं कनकोज्ज्वलम् ॥ तस्योपरि न्यसेद्देवं तत्त्वमंत्रविधानतः । श्वेतवस्त्रयुगेनैव पूजयेत्परमेश्वरम् ॥ उपवीतं सोत्तरीयं भक्ष्याणि विविधानि च । धान्यानि यान्यभीष्टानि तानि तानि प्रकल्पयेत् ॥ शय्यां सतूलीमादर्शं देवस्याग्रे प्रकल्पयेत् ॥ अथ श्वेतानि पुष्पाणि देवस्योपरि विन्यसेत् ॥ ततो होमं प्रकुर्वीत शिवमंत्रेण वै व्रती । पालाशीभिः समिद्भिश्च जुहुयाच्छतमष्टकम् ॥ आप्यायस्वेति मंत्रेण पृषदाज्याहुतीः शुभाः । यवव्रीहितिलाज्येन ऋत्विजश्च पृथक्पृथक् ॥ होमांते च गुरुं पूज्य सपत्नीकं समाहितः । वस्त्रैराभरणैश्चापि गृहोपकरणादिभिः॥श्वेता गौःकपिला वापि सुशीला च पयस्विनी। सुवस्त्रवरपुच्छा च घंटाभरणभूषिता । दक्षिणासहिता देया शिवः संप्रीयतामिति। ब्राह्मणान् भोजयेत्पश्चात्त्रयोदश सुशोभनान् ।घंटास्त्रयोदशादेया वंशपात्रं समाहितः ॥ इदं पीठं गृहाण त्वं सर्वोपस्करसंयुतम् । सर्वं मे परिपूर्णं स्याच्छिवो मे प्रीयतामिति ॥ इति श्रीस्कंदपु० एकभुक्तसोमवारव्रतं संपूर्णम् ॥ ॥ इदमेव प्रकारांतरेणोक्तम् ॥ कैलासस्थं महादेवमपर्णासहितं शिवम् । पप्रच्छ प्रणतो भूत्वा किंचिद्गुह्यतमं गुहः ॥ देवताखिलदेवेश सर्वभूतात्मक प्रभो ।त्वत्प्रसादान्मया पूर्वं विज्ञानं धर्मसाधनम् ॥ किंचिज्ज्ञातव्यमस्त्यन्यत्त्वत्त एव मया प्रभो । यन्न दृष्टं श्रुतं वापि तन्मे व्याख्यातुमर्हसि । किं दानं किं तपस्तीर्थं किं व्रतं वा महाफलम् ॥ यस्मिन्कृते महाप्रीतिर्युवयोः स्यादुमेशयोः । तन्मे त्वं पुत्रवात्सल्यात्सर्वलोकहिताय च ॥ विशेषं ब्रूहि देवेश यज्ज्ञात्वा स्यान्महत्सुखम् । इत्याकर्ण्य वचस्तस्य प्रसन्नवदनो हरः ॥परिष्वज्य सुतं प्रीत्या प्रोवाचेदं वचस्तदा ॥ शंकर उवाच । सम्यक् पृष्टं त्वया वत्स प्रीतोस्मि वचसा तव । अस्ति किं-

चिद्व्रतं पुण्य तन्मे कथयतः शृणु । वेदशास्त्रपुराणानां यद्रहस्यव्रत महत् । तदद्य कथनीयं ते त्वत्तः को मम वै प्रियः ॥ सोमवारव्रत नाम सर्वव्रतफलाधिकम् । यस्मिन्कृते परा प्रीतिरावयोः स्यादुमेशयोः ॥ निशम्यैतद्व्रत स्कदः प्रोवाच वदतांवरम् ॥ स्कद उवाच । कीदृश तद्व्रतं देव विधानं तस्य कीदृशम् । कदा ग्राह्यं कथं कार्यं किं दान कस्य पूजनम् ॥ उद्यापनविधानं च विस्तरेण वदस्व मे ॥ शिव उवाच । मधौ मास्यष्टमी शुद्धा शिवेंदुदिनसंयुता । तदा ग्राह्यं व्रतं चैतदनेन विधिना शुभम् ॥ प्रातः कृष्णतिलैः स्नात्वा आचार्यसहितो व्रती । पूर्वाह्णे विधिवत्कार्यमुमाशंकरपूजनम् ॥ ततः पुष्पांजलिं दत्त्वा प्रणम्य दंडवद्भुवि । विधिनानेन गृह्णीयाद्व्रत संकल्पपूर्वकम् ॥ गृह्णामि भवरोगार्तः सोमवारव्रतौषधम् । व्रतेनानेन मे प्रीतो भवेतां पार्वतीश्वरौ ॥ विसर्जन ततः कुर्यादाचार्यं पूजयेततः । शिष्टैरिष्टैः परिवृतो भोजनं कारयेत्ततः ॥ अह्नःशेषं ततो नीत्वा सत्कथाश्रवणादिभिः । शयीताधस्ततो रात्रावमुक्तो ब्रह्मचर्यवान् ॥ अनेन विधिना वत्स मदीये वासरे यदा । कुर्वन्व्रतमवाप्नोति मत्प्राप नात्र संशयः ॥ यस्मिन्दिने कृत किंचिद्दान होमो जपस्तथा । व्रत वा प्रीतिदं स्कद शुभ या सहितस्य मे ॥ अतः सोमाह्वयो वारः प्रशस्तोयं मम प्रियः । एवं सोमाष्टक कृत्वा व्रतस्योद्यापनं शुभम् ॥ माघाद्ये पंचके कार्यं शुक्लपक्षे विशेषतः । शिवर्क्षतिथियोगानामेकैकेनापि संयुते ॥ सोमवारे विधातव्य तथा चंद्रबलान्विते । विधाय रदनोल्लेख प्रातः स्नात्वा विधानतः ॥ आचार्यं वरयेदेक विधिज्ञ श्रुतिपारगम् । पुराणस्मृतिधर्मज्ञ निगमागमवेदिनम् ॥ उपोष्य सोमवारं च सायंसंध्यामुपास्य च । शिवालये हरेर्वापि शुचौ देशेऽथवा गृहे । अष्टांगुलोच्छ्रितां वेदीं वितस्तिद्वयसंमिताम् ॥ तस्यां षोडशपत्राणि तंडुलैः परिपूरयेत । विचित्ररचनोपेतां पताकाद्युपशोभिताम् ॥ चित्रां विचित्रैर्विविधैः फलराजिविराजिताम् । एव प्रकल्पयेद्वेदीं चतुरस्रां समंततः ॥ तत्र

त्वा सुनियमं कृत्वा सर्वाभ्युदयिकं तथा । आचार्येण समं कुर्यान्मदाराधनमादरात् ॥ पद्ममध्ये नवीनं च धवलं स्थापयेद्घटम् । वाससा वेष्टितं पूर्णमक्षतैः परिपूरितम् ॥ समंतादंतिके चापि नामभिस्त्वीश्वरादिभिः । गणेशं मातृकाश्चापि दुर्गां क्षेत्राधिपं तथा ॥ समाहितमनाः कोणेष्वाग्नेयादिषु विन्यसेत् । ततः कनकसंभूतमद्रूपमुमयान्वितम् ॥ पंचामृतोदकैः स्नाप्य गंधपुष्पाक्षतैर्जलैः । गृहीत्वावाहयेत्कुंभे ध्यायेन्मद्रूपमीदृशम् ॥ त्र्यंबकं च तथा गौरीर्मिमायेति जपन्सुधीः । पंचाक्षरं तथा मंत्रं पूर्वादिषु दलेष्वपि ॥ मूर्तयोष्टौ मदीयाश्च पूजनीयाः प्रयत्नतः ॥ अनंतसूक्ष्मौ च शिवस्ततश्च त्रिनेत्ररुद्रौ च तथैव पूज्यौ । त्रिमूर्तिश्रीकंठशिखंडिनौ च प्रागादिपत्रेषु समर्चनीयाः । तद्बहिर्लोकपालाश्च पूजनीयाः प्रयत्नतः ॥ विष्टराद्युपचाराश्च दातव्या मूलमंत्रतः । बिल्वपत्राक्षतैः पुष्पैर्धूपदीपैः समर्चयेत् ॥ मनोरमा विधातव्या पूजा वित्तानुसारतः । ततो वेदेरधोभूमौ सर्वतोभदमंडले ॥ ब्रह्माद्या देवताः सर्वाः पूजनीयाः प्रयत्नतः । नैवेद्यादिविचित्राणि तांबूलानि प्रकल्पयेत् ॥ ततो जागरणं कुर्याद्गीतवादित्रनिःस्वनैः । पुराणैरितिहासैश्च रात्रिशेषं नयेद्व्रती ॥ अपरेद्युः कृतस्नानः प्रातःसंध्यामुपास्य च । पुनर्यागगृहं गत्वा ह्युपचारान्प्रकल्पयेत् ॥ हवनार्थे विधातव्यमुपलेपादिकं ततः । प्रतिष्ठाप्यानलं सर्वमन्वाधानादि पूर्ववत् ॥ स्वगृह्यविधिना कार्यमाज्यभागांतमेव च । अनादेशादिभिर्हुत्वा महाव्याहृतिसंज्ञकाः ॥ होतव्याः सर्पिषा चैव पायसं सघृतं सुधीः । त्वं सोमासीति मंत्रेण हुनेदष्टोत्तरं शतम् ॥ ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् । ततो होमावसाने च गामरोगां पयस्विनीम् ॥ सवत्सां धवलां साध्वीं सवस्त्रां कांस्यदोहनीम् । दद्याद्व्रतसमृद्ध्यर्थमाचार्याय सदक्षिणाम् ॥ वस्त्रैराभरणैरन्यैराचार्यं परितोषयेत् ॥ ततः षोडशसंख्याकान्भोज्यैर्नानाविधैस्तथा ॥ ब्राह्मणान्भोजयेत्पश्चादर्चयेन्नामभिः क्रमात् ।सोमेश्व-

रस्तथेशान शंकरो गिरिजाधवः । महेशः सर्वभूतेशः स्मरारिस्त्रिपुरांतकः ॥ शिवः पशुपतिः शंभुस्त्र्यंबकः शशिशेखरः । गंगाधरो महादेवो वामदेव इति क्रमात् ॥ वस्त्राणि कंबलादीनि चंदनैरुपलेपयेत् । उपवीतानि तेभ्योपि दद्यात्कमान्फलान्वितान् ॥ शक्त्या च दक्षिणा देया दंपती पूजयेत्ततः । अन्यानपि यथाशक्ति ब्राह्मणानपि तोषयेत् ॥ व्रतं ममास्तु संपूर्णमित्युक्त्वा तान्प्रपूजयेत् । अस्तु संपूर्णमित्युक्ते ततो यागभुवं व्रजेत् ॥ उपचारादिकं कृत्वा श्रुत्वा नत्वा पुनः पुनः । विसर्जनं विधायाथ शिष्टैरिष्टैः समन्वितः ॥ भुंजीयाद्यज्ञशेषं तद्वाग्यतो नियतः शुचिः । एवं कृते महापुण्ये व्रतस्योद्यापने शुभे ॥ नारी वा पुरुषो वापि महेशस्य परं पदम् । अपुत्रो लभते पुत्रान् निर्धनो धनवान् भवेत् ॥ अविद्यो लभते विद्यामिति धर्मविदो विदुः । पृथिव्यां यानि तीर्थानि व्रतान्यन्यानि यानि तु ॥ सोमवारव्रतस्यास्य कलां नार्हंति षोडशीम् ॥ इति श्रीम० पु० एकभुक्तसोमवारव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ मंगलव्रतम् ॥ भौमवारे अरुणोदयवेलायामपामार्गेण दंतधावनं विधाय तिलामलकचूर्णेन नद्यादौ गृहे वा स्नात्वा धौतमारक्तवस्त्रं परिधाय रक्तोत्तरीयं च स्त्री वाप्येवं परिदध्यात् । ततस्ताम्रपात्रे रक्ताक्षता रक्तपुष्परक्तचंदनानि निक्षिप्य । अग्निर्मूर्धेति मंत्रेणाष्टोत्तरशतार्घ्याणि दद्यात् । ततो गृहमागत्य रक्तगोमयेन भूमिं विलिप्य शुद्धदेशे पुत्रार्थी धनार्थी च पत्न्यासह मंगलपूजामारभेत् ॥ तत्र विधिः । मासपक्षाद्युल्लिख्य ऋणव्याधिविनाशार्थं पुत्रधनप्राप्तये च भौमव्रतं करिष्ये । तदंगत्वेन भौमपूजनमहं करिष्य इति संकल्प्य ततः प्रार्थयेत् ॥ अद्य देवेश ते भक्त्या करिष्ये व्रतमुत्तमम् । ऋणव्याधिविनाशाय धनसंतानहेतवे ॥ यंत्रोपरिस्थं भौमं प्रपूजयेत् ॥ तत्र यंत्रप्रकार उक्तः स ग्रहे-त्रिकोणं पूर्वमुद्धृत्य पंचधा विभजेत्ततः । तृतीयरेखाचिह्नाभ्यां लांछयेत्सममागतः । आद्यरेखाग्रयुगुलं तृतीयाचिह्नयोर्न्यसेत् ॥ द्वितीयाग्र

समाकृष्य तृतीयाचिह्नयोर्न्यसेत् । पुना रेखातृतीयां तु समां भज्यात्समांशकम् ॥ तुर्यां चिह्नद्वयेनाथ त्रिभिश्चिह्नैस्तु पंचभिः । तृतीयाग्रे प्रकुर्वीत पंचम्यामथ चिह्निते ॥ तुर्याग्रे योजयेत्सम्यक् पंचम्यां चिह्नयोर्द्वयोः । चिह्नैस्तु पंचभिर्दद्यात्सूत्रयुग्मं विचक्षणः ॥ एवमेकाधिकं सम्यक्कोणानां विंशतिर्भवेत् । तृतीयातुर्ययोर्मध्ये स्थितचिह्नग्रहे ऽर्चयेत् ॥ देवं तदग्रतो मंत्री त्रिकोणे दक्षिणाक्रमात् । मंगलाद्यांतरे पूर्वान्नमोंतानेकविंशतिः ॥ एकविंशतिकोष्ठेषु नाममंत्रान् समालिखेत् । ततः पूजा प्रकर्तव्या पुत्रसंपत्तिहेतवे ॥ पूजाप्रकारमाह । रक्तमाल्यांबरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ एह्येहि भगवन्भौम अंगारक महाप्रभो । त्वयि सर्वं समायातं त्रैलोक्यं सचराचरम् । भौममावाहयिष्यामि तेजोमूर्तिं दुरासदम् । रुद्ररूपमनिर्देश्यचक्रं च ह्यरुणप्रभम् । अग्निमूर्धांगिरसोविरूपांगारकोगायत्री मंगलावाहनेविनियोगः । ॐअग्निमूर्धेति ऋक् ॥ ॐ नमोभगवतेधनसमृद्धिदायमंगलायनमः मंगलमावाहयामि ॥ अथ न्यासाः ॐ ह्रांहृदयायनमः । ह्रींशिरसेस्वाहा । ह्रूंशिखायै वषट् । ह्रैंकवचायहुं । ह्रौंनेत्रत्रयायवौषट् । ह्रःअस्त्रायफट् । खंखः इति दिग्बंधः ॥ ॐ ह्रां अंगुष्ठाभ्यांन० ह्रींतर्जनीभ्यां०ह्रूं मध्यमाभ्यां० ह्रैं अनामिकाभ्यां० ह्रौं कनिष्ठिकाभ्यां० ॐह्रःकरतलकरपृष्ठाभ्यां । हंसःआत्मनेन० खंखः परमात्मने० ततःअग्निमूर्धेति मंत्रेण मंगलगायत्र्या वा आसनादि पुष्पांतैः पूजयित्वा । यंत्रस्यैकविंशतिकोष्ठेषु नाममंत्रेण पूजयेत् । अर्घ्याणि च दद्यात् ॥ शिखायां मंगलः पातु भूमिपुत्रश्च मूर्द्धनि । ललाटे ऋणहर्ता च चक्षुषोश्च धनप्रदः ॥ स्थिरासनः श्रोत्रयोश्च महाकायश्च नासिके । आस्यदंतोष्ठजिह्वासु सर्वकामावरोधकः ॥ हनौ मे लोहितः पातु भूतिदस्तु तथोदरे ॥ भूमिनंदनो नाभौ तु गुह्ये त्वंगारकोवतु । ऊरू मम यमो रक्षेज्जान्वो रोगापहारकः ॥ जंघयोर्वृष्टिकर्ता च अपहर्ता च गुल्फयोः । पादांगुष्ठौ च गुल्फौ च सर्वकामफलप्रदः । शक्तिर्मे पूर्वतो रक्षेच्छूलं

रक्षेज्ज दक्षिणे ॥ पश्चिमे च धनुः पातु उत्तरे च शरस्तथा । ऊर्ध्वं षडाननः पातु अधस्तात्पृथिवी मम ॥ एवं न्यस्तशरीरोसौ चिंतयेद्भूमि नंदनम् । अथ ध्यानम् ॥ अरुणवर्णी रक्तमाल्याम्बरांगं कनककमलमालामालिन विश्ववंद्यम् । अतिललितकराभ्यां बिभ्रतं शक्तिशूले भजत धरणिसूनु मंगलं मंगलानाम् । इतिध्यात्वा ॥ अग्निर्मूर्धेति ऋगष्टोत्तरशतं जपेत् ॥ अंगारकायविद्महे शक्तिहस्ताय धीमहि । तन्नो भौमःप्रचोदयात् ॥ ततः स्तोत्रं पठेत् । मंगलो भूमिपुत्रश्च ऋणहर्ता धनप्रद । स्थिरासनो महाकाय सर्वकर्मावरोधकः ॥ लोहितो लोहिताक्षश्च सामगानां कृपाकर । धरात्मजः कुजो भौमो भूतिदो भूमिनंदनः ॥ अंगारको यमश्चैव सर्वरोगापहारक । वृष्टिकर्तापहर्ता च सर्वकामफलप्रदः ॥ एतानि कुजनामानि नित्यं यः प्रयतः पठेत् । ऋण न जायते तस्य संतानं वर्धते सदा ॥ एकविंशतिनामानि पठित्वा तु दिनांतके । रूपवान् धनवांश्चैव जायते नात्र संशयः ॥ एककाल द्विकाल वा य पठेत्सुसमाहितः । एव कृते न संदेहो ऋण हित्वा सुखी भवेत् ॥ इति स्तोत्रं पठेत् ॥ धरणीगर्भसंभूत विद्युत्कांतिसमप्रभम् । कुमार शक्तिहस्त च मंगल प्रणमा म्यहम् । इतिनमस्कार ॥ खदिरांगारेण रेखात्रयं कृत्वा । अंगारक महीपुत्र भगवन्भक्तवत्सल । त्वां नमस्यामि मेऽशेष ऋणमाशु विनाशय ॥ ऋणरोगादि दारिद्र्य पाप क्षुद्रापमृत्यवः । भयक्लेशमनस्तापा नश्यतु मम सर्वदा ॥ ऋणदुःखविनाशाय पुत्रसंतानहेतवे । मार्जयाम्यसितारेखास्तिस्रो जन्मसमुद्भवाः ॥ दुःखदौर्भाग्यनाशाय सुखसंतानहेतवे । कृतरेखात्रयं वामपादेन मार्जयाम्यहम् । इति मंत्रैर्मार्जयेत् ॥ तत प्रार्थना— ऋणहर्त्रे नमस्तेऽस्तु दुःखदारिद्र्यनाशक । सुखसौभाग्यधनदो भव मे धरणीसुत । ग्रहराज नमस्ते ऽस्तु सर्वकल्याणकारक । प्रसादात्तव देवेश सदा कल्याणभाजनम् ॥ देवदानवगंधर्वयक्षराक्षसपन्नगाः । प्राप्नुवंति शिवं

सर्वे सदा पूर्णमनोरथाः ॥ प्रसादं कुरु मे भौम सौभाग्यं मंगलप्रद । बालः कुमारको यस्तु स भौमः प्रार्थितो मया । उज्जयिन्यां समुत्पन्नो भौमो नाम चतुर्भुजः । भरद्वाजकुले जातः शूलशक्तिगदाधरः । इति प्रार्थयेत् ॥ पुनः स्तोत्रं पठेत् । ततो वायनदानं तिलगुडमिश्रितेन एकविंशतिलड्डुकान् गोधूमेन वा फलदक्षिणासहितान् वेदविदे दद्यात् ॥ दानमंत्रः—मंगलायनमस्तुभ्यंसर्वमंगलदायक । वायनेन चसंतुष्टःकुरुमेत्वंमनोरथान् ॥ देवस्यत्वेण मंत्रेण मंगलः प्रीयतामिति दद्यात् । आवाहनं नजानामि० । इति पूजनम् ॥ ॥ अथ कथा॥ सूत उवाच । पूजितो देवदैत्यैस्तु मंगलो मंगलप्रदः । गौतमेन पुरा पृष्टो लोहितांगो महाग्रहः १ गौतम उवाच । कथयस्व महाभाग गुह्यं पूजनमुत्तमम् । मन्त्रमाराधनं दानं सर्वपापप्रणाशनम् २ रूपं सुवर्णसंकाशं वाहनायुधसंयुतम् । येन पूजितमात्रेण जायते सुखमुत्तमम् ३ धर्मार्थकाममोक्षाणां कालेनैव फलप्रदम् । सर्वपापप्रशमनं सर्वव्याधिविनाशनम् ४ सर्वसौभाग्यदं देव त्वया पातकनाशनम् । सर्वयज्ञफलं प्रोक्तं सर्वकामफलप्रदम् ५ तपसां जपदानानां फलं चैव तु लभ्यते । तद्व्रतं ब्रूहि मे देव लोहितांग महाग्रह ६ यस्मिन्नाराधिते मर्त्यःसर्वसौभाग्यवान्भवेत् ॥ मंगल उवाच । शृणु विप्र महाभाग सर्वज्ञ ऋषिसत्तम ७ व्रतं च पूजनं दानं प्रख्यातं भुवनत्रये । आसीत्पूर्वं हि सर्वज्ञो ब्राह्मणो वेदपारगः ८ तस्य भार्या सुनंदा च नाम्ना ख्याता सुलोचना । तस्यापत्यं च संजातं वृद्धत्वान्न कदाचन ९ तेनान्यस्य सुता पुण्या गृहीत्वा पोषिता ध्रुवम् । ब्राह्मणस्य कुले जाता सुरूपा गुणसंयुता १० सर्वलक्षणसंपन्ना प्रयत्नेनैव गौतम । पुराजनौ तया चाहमेकभावेन पूजितः ११ तां पुत्रीं स्वगृहे नीत्वा ब्राह्मणेनैव पालिता । नित्यं हि स्रवते तस्या अष्टांगं कनकं बहु १२ तत्सुवर्णेन विप्रोऽसौ धनाढ्यो मदगर्वितः । कोटिकोटीश्वरो जातो राजते भूमिमंडले १३ दृष्ट्वा नंदकविप्रेण

दशवर्षा वरार्थिनी । विवाहार्थं च विप्राय दत्ता सोमेश्वराय च १४ वेदोक्तविधिना तेन विवाहमकरोत्तदा । वर्षैः कतिपयैर्विप्रःस्वां पत्नीं प्रौढयौवनाम् १५ लब्ध्वा स्वदेशमार्गेण व्रजन् विप्रोप्यहर्निशम् । निशांते गह्वरे घोरे अरण्ये पर्वतोत्तमे १६ सर्वशून्ये वने तस्मिन्महालोभेन लोभितः । मार्गे चलति विप्रेस्मिश्चोरैश्च विनिपातितः १७ तं पतिं मृतमालोक्य सा नारी शोकपीडिता । पतिना सह विप्रेंद्र मरणे कृतनिश्चया १८ स्वपतिं तन्मयं विश्वं चिंतयंती पदे पदे । पतिं प्रदक्षिणीकृत्य चितायाश्च समीपतः १९ तस्मिन्क्षणे च तुष्टोहं वरार्थं च प्रचोदिता । वर ब्रूहि महाभागे यत्ते मनसि वर्तते २० इति श्रुत्वा ततो वव्रे सा नारी पतिमानसा ॥ ब्राह्मण्युवाच । यदि तुष्टोसि मे देव तर्हि जीवतु मे पतिः २१ मंगल उवाच । अजरामरवरमाप्तो तव भर्ता भविष्यति । अन्यं याच महासाध्वि वरं त्रिसुखनोत्तमम् २२ ब्राह्मण्युवाच । यदि तुष्टोसि मे देव ग्रहाणामधिपेश्वर । ये त्वां स्मरंति देवेशं रक्तचंदनचर्चितम् २३ रक्तपुष्पैश्च संपूज्य प्रत्यूषे भौमवासरे । बंधनव्याधिरोगाश्च कदाचिन्नोपजायताम् २४ न च सर्पाग्निशत्रुभ्यो भयं च स्वजनैः सह । न वियोगो महीपुत्र भक्तानां सौख्यदो भव २५ मंगल उवाच । एकविंशतिभौमांश्च एकभक्तो जितेंद्रियः । एकान्नेनासिताभेन चतुर्दीपान्विते गृहे २६ अर्घ्यं च मंगलैर्मंत्रैर्वेदपौराणिकोद्भवैः । युवं रक्तमनड्वाहं सर्वोपस्करसंयुतम् २७ स्वशक्त्या भोजयेद्धिमान् दातव्यं च हिरण्यकम् । तेषां वै ग्रहपीडा च न भवेत्तु कदाचन २८ भूतवेतालशाकिन्यो न भवंति च हिंसकाः । दारिद्र्यं नश्यते तेषां पुत्रपौत्रैश्च वर्द्धते २९ एवमुक्त्वा च तत्रैव मंगलोपि दिवं गतः ३० एवं व्रतं समाख्यातं सर्वसौख्यप्रदायकम् । इदं व्रतं करिष्यंति तेषां पीडा न जायते ३१ स्त्रीभिर्व्रतं प्रकर्तव्यं पुरुषैश्च विशेषतः । तेषां मुक्तिर्भवत्येव स्वर्गवासो न संशयः ३२ ॥ इति श्रीपद्मपुराणे भौमवारव्रतक-

था संपूर्णा ॥ ॥ अथोद्यापनम् ॥ गौतम उवाच । उद्यापनविधिं ब्रूहि मम सम्यग्ग्रहेश्वर । येन जातेन जगतो ह्युपकारो महान्भवेत् ॥ मंगल उवाच । विधेयो मंडपः सम्यगष्टहस्तप्रमाणतः । स्थंडिलं मध्यतः कार्यं हस्तैकेन प्रमाणतः ॥ मंडलं तु प्रकर्तव्यं मामकं रक्ततंडुलैः । पूर्वोक्तानि च नामानि मंडले पूजयेत्ततः ॥ एकविंशतिकोष्ठेषु चतुर्दीपान्वितेषु च । एकविंशतिकुंभांश्च स्थापयित्वा मदग्रतः ॥ सौवर्णीं प्रतिमां तत्र स्थापयेत्कलशोपरि । रक्तवस्त्रेण संवेष्ट्य पूजयेत्कुसुमैः शुभैः ॥ अग्निर्मूर्धेति मंत्रेण होमं खादिरसंभवैः । अष्टोत्तरशतं हुत्वा दिक्पालांश्च हुनेत्ततः ॥ अंगपूजा प्रकर्तव्या नामभिर्मम सर्वदा । मंगलाय च पादौ तु भूमिपुत्रेति गुह्यके ॥ ऋणहर्त्रे तु नाभौ च महाकालाय वक्षसि । सर्वकामप्रदात्रे च मम बाहू प्रपूजयेत् ॥ लोहितो हस्तयोश्चैव लोहिताक्षश्च कंठके । आस्ये संपूजयेन्मां च सामगानां कृपाकरः ॥ धरात्मजं नासिकायां कुजं च नयनद्वये । भौमं ललाटे पादौ च भूमिजाय भ्रुवोस्तथा ॥ भूमिनंदननामानं मूर्ध्नि संपूजयेत्तथा । अंगारकं शिखायां तु यमं तु कवचे सदा ॥ सर्वरोगापहर्तारमस्त्रदेशे प्रपूजयेत् । आकाशे वृष्टिकर्तारमपहर्तार्प्यधस्तथा ॥ सर्वांगं च प्रभूतोस्मि सर्वकामफलप्रदः । एवं पूज्य ततो होमं पश्चाद्गंधादिना ऽर्चयेत् ॥ भोज्यैकाविंशतिं विप्रान् दद्यात्कुंभान् सवस्त्रकान् । आचार्यं पूजयेत्पश्चाद्दत्त्वा धेनुं सवत्सकाम् ॥ सर्वं निवेदयेत्पीठं गुरवे च शुचिस्मिताः । अच्छिद्रं याचयेत्तेभ्यो सर्वे ब्रूयुर्व्रतं शुभम् ॥ दत्त्वा दीनांधकृपणान् स्वयं भुंजीत वाग्यतः । इदं व्रतं करिष्यंति दारिद्र्यं नश्यति ध्रुवम् ॥ कर्तव्यं तु प्रयत्नेन उद्यापनसमन्वितम् ॥ इति श्रीपद्मपु० मंगलव्रतोद्यापनं सं० ॥ ॥ अथ श्रावणे शुक्रवारे वरदलक्ष्मीव्रतम् ॥ तत्र पूजाविधिः ॥ क्षीरसागरसंभूतां क्षीरवर्णसमप्रभाम् । क्षीरवर्णसमं वस्त्रं दधानां हरिवल्लभाम् । ध्यानम् ॥ ब्राह्मी हंससमारूढा धारिण्यक्षकमंडलू । विष्णुते-

जोधिका देवी सा मां पातु वरप्रदा । आवाहनम् ॥ महेश्वरि महादेवि आसनं ते ददाम्यहम् । महैश्वर्यसमायुक्ते ब्रह्माणि ब्रह्मणः प्रिये । आसनम् ॥ कुमारशक्तिसंपन्ने कौमारि शिखिवाहने । पाद्यं ददाम्यहं देवि वरदे वरलक्षणे । पाद्यम् ॥ तीर्थोदकैर्महादिव्यैः पापसंहारकारकैः । अर्घ्यं गृहाण भो लक्ष्मीर्देवानामुपकारिणि । अर्घ्यम् ॥ वैष्णवि विष्णुसंयुक्ते असंख्यायुधधारिणि । आचम्यतां देवपूज्ये वरदे असुरमर्दिनि । आचमनम् ॥ पयो पञ्चामृतैः शुद्धैः स्नपयिष्ये हरिप्रिये । वरदे शक्तिसंभूते वरदेवि वरप्रिये । पंचामृतस्नानम् ॥ गंगाजलसमानीत सुगंधिद्रव्यसंयुतम् । स्नानार्थं ते मया दत्तं गृहाण परमेश्वरि । स्नानम् ॥ रजताद्रिसमं दिव्यं क्षीरसागरसन्निभम् ॥ चन्द्रप्रभासमं देवि वस्त्रं ते प्रददाम्यहम् । वस्त्रम् ॥ मांगल्यमणिसंयुक्तं मुक्ताफलसमन्वितम् । दत्तं मंगलसूत्रं ते गृहाण सुरवल्लभे । कंठसूत्रम् ॥ सुवर्णभूषितं दिव्यं नानारत्नसुशोभितम् । त्रैलोक्यभूषिते देवि गृहाणाभरणं शुभम् । आभरणानि ॥ रक्तगंधं सुगंधाढ्यमष्टगंधसमन्वितम् । दास्यामि देवि वरदे लक्ष्मीदेवि प्रसीद मे । गंधम् ॥ हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितम् । सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि । सौभाग्यद्रव्यम् ॥ नानाविधानि पुष्पाणि नानावर्णयुतानि च । पुष्पाणि ते प्रयच्छामि भक्त्या देवि वरप्रदे । पुष्पाणि ॥ अथांगपूजा ॥ वरदलक्ष्म्यै नमः पादौ पू० । कमलवासिन्यै० गुल्फौ० । पद्मालयायै० जंघे० । श्रियै० जानुनी० । इंदिरायै० ऊरू० । हरिप्रियायै० नाभिं० । लोकधात्र्यै० स्तनौ० । विधात्र्यै० कंठं पू० । धात्र्यै० नासां पू० । सरस्वत्यै० मुखं पू० । पद्मनिधये० नेत्रे पू० । मांगल्यै० कर्णौ पू० । क्षीरसागरजायै० ललाटं पू० । श्रीवरदलक्ष्म्यै० शिरः पू० । श्रीमहाकाल्यै० सर्वांगं पू० ॥ धूपं दास्यामि ते देवि गोघृतेन समन्वितम् । प्रतिगृह्ण महादेवि भक्तानां वरदप्रिये । धूपम् ॥ साज्यंचवर्तिं० । दीपम् ॥ नैवेद्यं परमं दिव्यं दृष्टिप्रीतिकरं शुभ

म् ॥ भक्ष्यभोज्यादिसंयुक्तं परमान्नादिसंयुतम् । नैवेद्यम् ॥ नागवल्लीदलैर्युक्तं चूर्णक्रमुकसंयुतम् । वरं लक्ष्मीर्गृहाण त्वं तांबूलं प्रतिगृह्यताम् । तांबूलम् ॥ सुवर्णं सर्वधातूनां श्रेष्ठं देवि च तत्सदा । भक्त्या ददामि वरदे स्वर्णवृष्टिं च देहि मे । दक्षिणाम् ॥ नीराजनं सुमंगल्यं कर्पूरेण समन्वितम् । चंद्रार्कवह्निसदृशं गृह्ण देवि नमोस्तु ते । नीराजनम् ॥ सर्वमंगलमांगल्ये सर्वपापप्रणाशिनि । दोरकं प्रतिगृह्णामि सुप्रीतां हरिवल्लभे । दोरकग्रहणम् ॥ करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः । श्रियं देहि यशो देहि सौभाग्यं देहि मे शुभे । दोरकबंधनम् ॥ क्षीरार्णवसुते लक्ष्मि चंद्रस्य च सहोदरि । गृहाणार्घ्यं महालक्ष्मि देवि तुभ्यं नमोस्तु ते । पुनरर्घ्यम् ॥ श्रीवृक्षस्य फलं देवि महादेवप्रियं सदा । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुनिर्मलम् । बिल्वपत्रम् ॥ इह जन्मनि यत्पापं मम जन्मांतरेषु च । निवारय महादेवि लक्ष्मीर्नारायणप्रिये । प्रदक्षिणाः ॥ दामोदरि नमस्तेस्तु नमस्त्रैलोक्यनायिके । हरिकांते नमस्तेस्तु त्राहि मां दुःखसागरात् । नमस्कारम् ॥ क्षीरार्णवसमुद्भूते कमले कमलालये । प्रयच्छ सर्वकामांश्च विष्णुवक्षःस्थलालये । व्रतसमर्पणम् ॥ छत्रचामरमांदोलं दत्त्वा व्यजनदर्पणे । गीतवादित्रनृत्यैश्च राजसन्माननैस्तथा । सूपचारैः समभ्यर्च्य महालक्ष्मीं क्षमापये ॥ वरलक्ष्मि महादेवि सर्वकामप्रदायिनि । यन्मया च कृतं देवि परिपूर्णं कुरुष्व तत् । प्रार्थना ॥ एकविंशतिपक्वान्नैर्घृतशर्करसंयुतैः । इंदिरा प्रीयतां देवि पद्मे शांतिं प्रयच्छ मे । इंदिरा प्रतिगृह्णाति इंदिरा वै ददाति च । इंदिरा तारकोभाभ्यामिंदिरायै नमो नमः । इति वायनमंत्रः ॥ पंच वायनकं दत्त्वा पक्वान्नैश्च सदक्षिणैः । विप्राय चाथ यतये देव्यै तु ब्रह्मचारिणे । सुवासिन्यै ततस्त्वेकं दापयेच्च यथाविधि । इति पूजा ॥ ॥ अथ कथा ॥ सूत उवाच । कैलासशिखरे रम्ये सर्वदेवनिषेविते । गौर्या सह महादेवो दीव्यन्नक्षैर्विनोदतः १ जितोसि त्वं मया

चाह पार्वती परमेश्वरम् । सोपि त्वं च जितेत्याह सुविवादस्तयोरभूत् २ चित्रनेमिस्तदा पृष्टो मृषावादमभाषत । तदा कोपसमाविष्टा
गौरी शापं ददौ ततः ३ कुष्ठी भव मृषावादिन् चित्रनेमिर्हतप्रभः । नानृतेन समं पापं क्वापि दृष्टं श्रुतं मया ४ चित्रनेमिर्महाप्राज्ञःसत्यं
वदति नो मृषा । प्रसादः क्रियतां देवि देवीमाह वृषध्वजः ५ प्रसादसुमुखी तस्मै विशापं च जगाद सा । यदा सरोवरे रम्ये करिष्यति
शुचिव्रतम् ६ ततः स्वर्गणिकाः सर्वा वर्ध्यंति त्वां समाहिताः । तदा तव विशापः स्यादित्युक्त स पपात ह ७ ततः कतिपयाहोभिश्चि
त्रनेमिः सरोवरे । कुष्ठी भूत्वा वसस्तत्र ददर्श स्वर्विलासिनीः ८ देवता पूजनासक्ताः पप्रच्छ प्रणिपत्य ताः । किमेतन्नो महाभागाःकिं पू-
जा किं च वांच्छितम् ९ किं मया च ह्यनुष्ठेयमिहामुत्र फलप्रदम् । इति व्रत चित्रनेमिः पप्रच्छ स्वर्विलासिनीः १० येनाहं गिरिजा-
शापान्मोक्ष्यामि चिरदुःखतः । ता ऊचुः क्रियतामद्य व्रतमेतदनुत्तमम् ११ वरलक्ष्मीव्रतं दिव्यं सर्वकामसमृद्धिदम् । यदा रवौ कुली
रस्थे मासे च श्रावणे तथा १२ गंगायमुनयोर्योगे तुंगभद्रासरित्तटे । तस्मिन्वै श्रावणे मासि शुक्लपक्षे भृगोर्दिने १३ प्रारब्धव्यं व्रतं त
त्र महालक्ष्म्या यतात्मभिः । सुवर्णप्रतिमां कुर्याच्चतुर्भुजसमन्विताम् १४ पूर्वं गृहमलंकृत्य तोरणै रंगवल्लिभिः । गृहस्य पूर्वदि
ग्भागे ईशान्यां च विशेषतः १५ प्रस्थमितांस्तंडुलांश्च भूमौ निक्षिप्य पूजयेत् । संस्थाप्य कलशं तत्र तीर्थतोयैः प्रपूजयेत् १६ फला
नि त्र विनिक्षिप्य सुवर्णं प्रक्षिपेत्ततः । पल्लवांश्च विनिक्षिप्य वस्त्रेणाच्छाद्य यत्नतः १७ प्रतिमां स्थापयेत्तत्र पूजयेच्च यथाविधि । अग्र्यु-
त्तारणपूर्वं तु शुद्धस्नानं यथाक्रमम् १८ पंचामृतेन स्नपनं कारयेन्मंत्रतः सुधीः । शुद्धस्नानं ततः कृत्वा देवीसूक्तेन वै ततः १९ अष्टगंधैः
समभ्यर्च्य पल्लवैश्च समर्चयेत् । अश्वत्थवटबिल्वाम्रमालतीदाडिमास्तथा २० एतेषां पत्रमादाय ह्येकविंशतिसंख्यया । नानाविधानि पुष्पा

णि मालत्यादीनि वै ततः २१ धूपदीपैर्महालक्ष्मीं पूजयेत्सर्वकामदाम् । पायसं भक्ष्यभोज्यं च नानाव्यंजनसंयुतम् २२ एकविंशतिसंख्या-
कैरपूपैः पूजयेच्छिवाम् । निवेद्य सर्वं देव्यै तु वरं स वृणुयात्ततः २३ एवं संपूजयित्वा च तांबूलाद्यैश्च षोडशैः । उपचारैः षोडशभिर्धू-
पदीपैरनेकधा २४ नृत्यगीतादिसहितो देवीं संप्रार्थयेच्छ्रियम् । रमां सरस्वतीं ध्यायन् शचीं च प्रियवादिनीम् २५ अप्सरोभिः कृतं सम्यग्व्र-
तं सर्वसमृद्धिदम् । पूजावसानपर्यंतं चित्रनेमिरलोकयन् २६ होमधूमं समाघ्राय घृतदीपप्रभावतः । गतकुष्ठः स्वर्णतेजाः शुचिस्तद्व्रतमान-
सः २७ तत्रैवं चिंतयन्सम्यक् मनः संधाय तद्व्रतम् । पंचवायनकं दत्त्वा कथां शृण्वीत यत्नतः २८ यथा मौनं गृहीत्वा तु पंचार्तिक्येन
पूजयेत् । व्रतं च कुर्वतां गृह्य एकं पूगफलं तथा २९ पर्णैकं चूर्णरहितं चर्वणीयं प्रयत्नतः । आरक्तं यदि जायेत कुर्याद्व्रतमनुत्तम-
म् ३० नोचेन्न तद्व्रतं कार्यं सर्वथा भूतिमिच्छता । अनेनैव विधानेन व्रतं गृह्णीत यत्नतः ३१ अहं यत्नात्करिष्यामि व्रतं सर्वसमृद्धिदम् ।
इत्युक्त्वा सर्वदेवीस्तु कारयामास तत्क्षणात् ३२ सुवर्णनिर्मितां देवीं वस्त्रालंकारसंयुताम् । पूर्वोक्तेन विधानेन पूजां कृत्वा प्रयत्नतः ३३
पंचवायनकं दत्त्वा कृत्वा तेभ्यो यथाक्रमम् । ततो वैणवपात्राणि फलान्नैश्च सदक्षिणैः ३४ विप्राय चाथ यतये देव्यै तु ब्रह्मचारिणे ।
सुवासिन्यै ततस्त्वेकमर्पितं चित्रनेमिना ३५ एवं सम्यक्क्रमेणैतद्दत्त्वा वायनपंचकम् । ततो गतः स्वभवनं देवीं नत्वा यथाक्रमम् ३६
ततोऽनुज्ञां च संप्रार्थ्य भक्षणार्थं ततो व्रती । नागवल्लीदलं त्वेकं क्रमुकं चूर्णवर्जितम् ३७ भक्षयित्वा तु चैलांते दंतांते च निरीक्ष्य
च । आरक्ते च ततो जाते व्रतस्यास्य प्रभावतः ३८ अद्याहं गतपापोऽस्मि देव्या दर्शनयोगतः । एतत्सम्यग्व्रतं चीर्णं भक्तिभावेन यन्म-
या ३९ चित्रनेमिर्व्रतं कृत्वा कैलासं शंकरालयम् । गत्वा प्रणम्य देवेशं देवीं सादरपूर्वकम् ४० पार्वती च तदा प्राह चित्रनेमे स्वपुत्रव-

द । पालनीयो मया त्वं वेत्सत्यमित्यवधार्यताम् ४१ चित्रनेमिस्तदा प्राह पार्वतीं हरवल्लभे । तव पादांबुज दृष्टं वरलक्ष्मीप्रसादतः ४२ महादेवस्ततः प्राह चित्रनेमिं शुचिव्रतम् । अद्यप्रभृति कैलासे भुंक्ष्व भोगान्यथेप्सितान् ४३ पश्चाद्गंतासि वैकुंठं व्रतस्यास्य प्रभावतः । पार्वत्यापि कृते पूर्वं पुत्रलाभार्थमेव च ४४ लब्धश्च षण्मुखो देव्या व्रतराजप्रसादतः । नंदश्च विक्रमादित्यो राज्य प्राप्तौ महाव्रतौ ४५ नंदश्च कांतया हीनो कांतां लब्ध्वा सुलक्षणाम् । तथा च तद्व्रतं कृत्वा कृत वै पुत्रहेतवे ४६ पुत्र प्रसुषुवे सा च त्रैलोक्यभरणक्षमम् । इह भुक्त्वा तु विपुलान् भोगान्वै सुमनोहरान् ४७ तदाप्रभृति लोकेस्मिन्वरलक्ष्मीव्रतं शुभम् । व्रतं करोति या नारी नरो वापि शुचिव्रतः ४८ भुक्त्वा भोगांश्च विपुलानंते शिवपुरं व्रजेत् । ख्यातं पुण्य मया विप्रा वरलक्ष्मीव्रत शुभम् ४९ य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः । धनधान्यमवाप्नोति वरलक्ष्मीप्रसादतः ५० ॥ इति श्रीभविष्योत्तरपु० श्रावणशुक्रवारे वरदलक्ष्मीव्रतं सं० ॥ ॥ अथ श्रावणमंदवारे शनैश्चरव्रतम् ॥ अद्येत्यादि ममसमस्तरोगपरिहारार्थं दृष्टदुष्टलाभतशनैश्चरपीडानिरासार्थं शनैश्चरव्रत करिष्ये । निर्विघ्नतासिद्ध्यर्थं गणपति पूजन कलशाराधन च करिष्ये ॥ कृष्णाभाय० आवाहयामि । नीलायन० आसन । श्वेतकंठाय० पाद्यं । नीलमयूखाय० अर्घ्यं । नीलोत्पलदलाय० आचम० । नीलदेहाय० स्नानं । कुब्जाय० पंचामृतस्नानम् । शनैश्चराय० शुद्धोदकस्ना० । दीप्यमानजटाधराय० वस्त्रं । पुरुषगात्राय० यज्ञोपवीतं । स्थूलरोमाय० अलंकारान् । नित्याय० गंध । घूर्ताय० अक्षताम् । सदातृप्ताय० पुष्पं । मंदाय० धूप । निःस्पृहाय० दीप । तामसाय० नैवेद्यं । नीलोत्पलाय० आचमन । कृष्णवपुषे० करोद्वर्तन । दीर्घदेहाय० तांबूलं । मदगतये० दक्षिणां । ज्ञाननेत्राय० प्रदक्षिणां । सर्वपूज्याय० नमस्कारं ॥ कोणस्थ पिंगलो बभ्रुः कृष्णो रौद्रोंतको यम । सौरि शनैश्चरो मंदः पिप्पलादेन संस्तुतः ॥ एतानि शनि

नामानि जपेदश्वत्थसन्निधौ । शनैश्चरकृता पीडा न कदाचिद्भविष्यति–इति प्रार्थना ॥ मूलतोब्र०नमः । सप्तप्रदक्षिणाः सप्तनमस्कारान्कुर्यात ॥ इति पूजा ॥ ॥ अथ कथा । दशरथ उवाच । नमः कृष्णांगनीलाय श्वेतकंठनिभाय च । नमः पुरुषगात्राय स्थूलरोमाय ते नमः १ नमो मंदगते तुभ्यं निःस्पृहाय नमो नमः । नित्यानित्यक्षुधार्ताय सदा तृप्ताय ते नमः २ तपसा दग्धदेहाय नित्ययोगधराय च । नमस्ते ज्ञाननेत्राय काश्यपायार्कसूनवे ३ इति श्रुत्वा नृपश्रेष्ठं प्रसन्नश्च शनिस्तदा ॥ शनिरुवाच । तुष्टोहं तव राजेंद्र तपसा पौरुषेण च ४ दास्यामि ते वरं भद्रं निश्चयाद्रघुवंशज ॥ दशरथ उवाच । अद्यप्रभृति पिंगाक्ष पीडा कार्या न ते मम ५ जगत्त्रये त्वया नाथ पीडितो दुःखितो जनः । तस्माज्जगत्त्रयं देव रक्षणीयं त्वयाऽनघ ६ शनिरुवाच । ग्रहाणामहमेको हि मदधीना ग्रहाः सदा । तपसा तव तुष्टोहं पीडा न च करोम्यहम् ७ जगत्त्रयं महाराज दुःखितं मे सदैव हि ॥ दशरथ उवाच । भगवन्केन विधिना त्वदीयाराधनं भवेत् ८ येन तुष्टोसि पिंगाक्ष तत्सर्वं वक्तुमर्हसि ॥ शनैश्चर उवाच । श्रावणे मंदवारेषु दंतधावनपूर्वकम् ९ स्नानं सुगंधतैलेन नित्यकर्म समाचरेत ॥ कर्तव्यं सर्ववारेषु तेन तुष्टोस्म्यहं नृप १० शुचिर्भूत्वा शमीवृक्षं गत्वा तत्रैव पूजयेत् । तदभावेऽथ राजेंद्र गत्वाश्वत्थं प्रपूजयेत ११ तत्र संपूज्य मां राजन् गंधपुष्पाक्षतादिभिः । धूपदीपैश्च नैवेद्यैस्तांबूलप्रार्थनादिभिः १२ वेष्टयेत्सप्तसूत्रैश्च नमस्कारांस्तथैव च । सप्त प्रदक्षिणाः कृत्वा श्रुत्वा पुण्यकथामिमाम् १३ एवंविधांस्त्रयस्त्रिंशन्मंदवारान्कुरुष्व मे । ततः शांतिं च मे वारे कुर्यादुद्यापनं शुभम् १४ आचार्यं वरयेत्तत्र श्रोत्रियं वेदपारगम् । सुवर्णस्य शमीवृक्षं तदभावे तु पिप्पलम् १५ मदीयां प्रतिमां कुर्याल्लोहप्रचुरसंयुताम् । द्विभुजं दीर्घदेहं च दंडपाशधरं तथा १६ पिंगाक्षं स्थूलदेहं च श्वेतग्रीवं तथार्चयेत् । रुक्मपत्रं तथा सप्त कृष्णवस्त्राणि वेष्टयेत्

१७ उपवीतादिभिर्द्रव्यैः पूर्ववद्देवमर्चयेत् । शमग्निरिति मंत्रेण हुनेदष्टाधिक शतम् १८ कृसरान्नं होमयेत्तु तेनैव बलिमुद्धरेत् । कृष्णधेनुं
सवत्सां च दद्यादथ पयस्विनीम् १९ सप्त विप्रान् समभ्यर्च्य गंधपुष्पफलादिभिः । वस्त्राणि दक्षिणां चैव यथाशक्त्या प्रदापयेत् २० ति-
लमाषविमिश्रान्नैर्भोजयेद्विप्रसत्तमान् । तेषां चाशिष पश्चाद्गृह्णीयाद्बंधुभिः सह २१ सवस्त्रप्रतिमां चैव आचार्याय निवेदयेत् । एवंकृते
ऽथ राजेंद्र सर्वाभीष्टं ददाम्यहम् २२ जपेदिदं पठेत्स्तोत्रं मत्प्रया चैव कृतांजलिः । सप्तजन्मसु राजेंद्र तस्यैश्वर्यं भविष्य
ति । पुत्रपौत्रयुतो नित्यं ततो मोक्षमवाप्स्यति २३ तुष्टोहं तव राजेंद्र पीडां न च करोम्यहम् । गोचरे वाथ वर्गेपि विष-
मस्थो यदा शनिः २४ तुष्टो राज्यप्रदः सद्यः क्रुद्धो राज्यापहारकः । जन्मस्थो द्वादशस्थो वा अष्टमे वापि कुत्रचित् २५
श्रावणे मंदवारेषु पूजितोहं सुखप्रदः । ब्रह्मा शिवो हरिश्चैव मुनयः सनकादयः २६ लक्ष्मीरुमा च सावित्री मुनिपत्न्यश्च वै
शुभाः । नृपा अन्ये मया सर्वे राज्यभ्रष्टाश्च पीडिताः २७ देशाश्च नगरग्रामा गजोष्ट्राश्च वाजिनः । रौद्रदृष्ट्या मया दृष्ट
नाशमायांति तत्क्षणात् २८ अतो मया पीडितानां मनुष्याणां नराधिप । परिहर्तुं न शक्ताश्च ब्रह्मविष्णुमहेश्वराः २९ एतच्छ्रुत्वा शने
र्वाक्यं राजा परमहर्षितः । प्रदक्षिणां नमस्कृत्य वरं प्राप्य पुरं ययौ ३० गत्वा स्वनगरं राज्ञा पूजितो वै शनैश्चरः । श्रावणादिषु वारेषु
प्रसन्नो ऽभूच्छनैश्चरः ३१ पृथ्वीपतिरभूद्राजा ग्रहराजप्रसादतः । य इमं प्रातरुत्थाय सौरिवारे सदा ऽर्चयेत् ३२ तस्याभीष्टप्रदो मंदो भ
विष्यति न संशयः । स्त्रिया वा पुरुषेणापि शनैश्चरव्रतम् कृतम् ३३ मुच्यते सर्वपापेभ्यो सर्वाभीष्टं लभेत्क्षणात् । ब्राह्मणो वेदसंपूर्णः
क्षत्रियो राज्यमाप्नुयात् ३४ वैश्यस्तु लभते वित्तं शूद्रः सत्तमवाप्नुयात् । कन्यार्थी लभते कन्यां पुत्रार्थी लभते सुतम् ३५ कामार्थी ल-

भते कामान्मोक्षार्थी लभते गतिम् । मुच्यते सर्वपापेभ्यो ग्रहलोकं स गच्छति ३६ ॥ इति श्रीस्कंदपु० शनिवारव्रतं सोद्यापनं सं० ॥ ॥ अथ व्यतीपातव्रतं लिख्यते ॥ युधिष्ठिर उवाच । श्रुतानि त्वन्मुखादेव व्रतानि सकलान्यपि । व्यतीपातव्रतं ब्रूहि सोद्यापनफलान्वितम् १ कृष्ण उवाच । पुरा व्यासेन कथितं शुकाय वंशवृद्धये । तद्व्रतं कथयिष्यामि शृणु राजन्यसत्तम २ शुक उवाच । कथं योगस्ततः पूज्यो व्यतीपातो महामुने । पूजिते किं फलं तात विधिं मे ब्रूहि विस्तरात् ३ व्यास उवाच । इममर्थं पुरा पृष्टो धरण्या च जगद्गुरुः । व्यतीपातव्रतं सर्वं यत्समाख्यातवान्प्रभुः ॥ तद्व्रतं कथयिष्यामि परलोकहिताय च ४ धरण्युवाच । यस्त्वयोक्तो व्यतीपातस्तस्य कर्म वदस्व तत् । कदा जातः कथं पूज्यः पूजिते चात्र किं फलम् ५ श्रीवराह उवाच । यदा बृहस्पतेर्भार्यां तारां जग्राह शीतगुः । मित्रत्वात्प्राह तं सूर्यस्त्यज दारान्बृहस्पतेः ६ तदा सोमोतिरुष्टश्च रविं क्रूरं व्यलोकयत् । आदित्योपि तदा रुष्टः क्रुधा सोमं व्यलोकयत् ७ उभयोर्दृष्टिसंपातात्क्रुद्धयोः सोमसूर्ययोः । उद्यतास्यो ऽभवद्घोरः पुरुषः पिंगलेक्षणः ८ दष्टोष्ठदीर्घदशनो भ्रुकुटीकुटिलाननः । पिंगलश्मश्रुकेशांतो लंबभ्रूश्च कृशोदरः ९ शिरालो दीर्घजिह्वश्च सूर्याग्नियमसन्निभः । त्रैलोक्यं भक्षितुं प्राप्तो रवींदुभ्यां निवारितः १० सो ऽपृच्छदथ सूर्येंदू क्षुधितो भक्षयामि किम् । त्रैलोक्यं भोक्तुकामोऽहं भवद्भ्यां विनिवारितः ११ क्रोधक्षुधौ मां बाधेते पाल्येते कुत्र ते मया ॥ सोमसूर्यावूचतुः । कोपदृष्टेर्नौ विविधादतिपाताद्भवानभूत् १२ व्यतीपातस्ततो नाम भवान्भुवि भविष्यति । सर्वेषामपि योगानां पतिस्त्वं भविता सदा १३ तेषां मध्ये पुण्यतमो भविष्यसि न संशयः । यस्मिन्काले त्वदुत्पत्तिः कल्याणं नैव कारयेत् १४ स्नानदानादिकं किंचित्कृत्वा चेदक्षयं भवे-

१ कल्याणं शुभम् । कर्मेति शेषः ।

व । इति ताभ्यां वरो दत्तस्तत्प्रभृति योगराट् १५ त्रिषु लोकेषु विख्यातो बहुपुण्यफलप्रदः ।व्यतीपात महावीर त्रैलोक्यव्यापक प्रभो
१६ त्वयि प्राप्ते नरैः किंचिद्दातव्यं शुभकांक्षिभिः । तदर्थं क्षुधितो भुंक्ष्व नोचेत्कोपो निपात्यताम् १७ व्यतीपात उवाच ।
नमो वां पितरौ मेस्तु कोपपातस्य भाजन । दत्तो भवभ्यामधुना प्रसादः क्रियतां मम १८ रवींदू ऊचतुः । स्नानदानजपहोम-
पूर्वकं यस्त्वदीयसमये समाचरेत् । तस्य पुण्यमिह ते प्रसादतोऽनंतमस्तु सुत नावनुग्रहात् १९ तत्काले तव विदधाति पूज
नं यस्तस्येष्टं भवतु भवेत्स भद्ररूप । पुत्रायुर्धनसुखकीर्तिपुष्टिरूपारोग्याय गुणिजनवल्लभेश पूर्वम् २० धरण्युवाच । अस्यार्च
नविधिं ब्रूहि विस्तरेण समप्रभो । कृते तस्मिन्व्रते देव किं फलं प्राप्यते नरैः २१ श्रीवराह उवाच । एतस्मात्कारणाद्भूमे व्य
तीपातः स उच्यते । अर्चिते च फलं यस्यास्तदुक्तं च समासतः २२ विस्तरेणार्चनविधिं कथितुं केन शक्यते । यथार्चिते व्य
तीपातः स विधिः श्रूयतामिह २३ शुभे व्यतीपातदिनेऽवगाहयेत्संसेव्यमानेन महानदीजलम् । उपवसेद्वै पवमानजापको जपेच्च
मंत्रं व्यतिपात ते नमः २४ छादिते ताम्रपात्रेण शर्करापूरिते घटे । कांचनाथे प्रतिष्ठाप्य हैममष्टभुजं नरम् २५ -अष्टभुजमष्टादशभुजमुत्प
त्तिवाक्ये व्यतीपातमूर्तेरष्टदशभुजश्रवणादुत्पत्तिवाक्यानुसारित्वाच्च नियोगवाक्यस्य । तथा-भगवद्गीतासु च चत्वारो मनवस्तथेति च
त्वारश्चतुर्दशेत्यर्थः ॥ गंधपुष्पाक्षतैर्धूपैर्दीपवस्त्रनिवेदनैः । भक्ष्यैर्भोज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्चयेत् २६ नमस्तेऽस्तु व्यतीपात सो
मसूर्यसुत प्रभो । यद्दानादि कृतं किंचित्तदनंतमिहास्तु मे २७ इत्युक्त्वार्पयेत्तस्मा अर्घ्यं सुपुष्पाक्षतमंजलिम् । प्रक्षिप्य तत्क्षणादेव सर्वपापक्ष
यो भवेत् २८ यदि द्वितीये च दिने व्यतीपातो भवेन्न हि । तदा पूर्वोपवासस्तु प्रदद्यात्सकलं गुणैः २९ पारणं च व्यतीपाते कुर्यात्समास्य

गोमयम् । अथैकस्मिन्दिने धात्रि व्यतीपातो भवेद्यदि ३० तत्रैवाह्नि तदा दत्त्वा उपवासं समाचरेत् । कुर्यादेवं मासि मासि व्यतीपातांस्त्रयोदश ३१ चतुर्दशे तु संप्राप्ते कुर्यादुद्यापनं बुधः । व्यतीपातायस्वाहेति क्षीरवृक्षसमिच्छतम् ३२ आज्यक्षीरफलानां च होतव्यं वै शतं शतम् । शर्करापूर्णकुंभेन सहसोपस्करं नरम् ३३ शय्यां सोपस्करैर्युक्तां प्रदद्याद्व्रतदेशिने ३४ वंदे व्यतीपातमहं महांतं रवींदुसूनुं सकलेष्टलब्ध्यै । समस्तपापस्य मम क्षयोस्तु पुण्यस्य चानंतफलं ममास्तु ३५ इति समीर्य गुरुं परिपूज्य तं कटककुंडलकंठविभूषणैः । सकलमेव समर्प्य यथोचितं तदुपलभ्यमिह शृणु तन्महि ३६ गां च पयस्विनीं दद्यात्सुवर्णवरदक्षिणाम् । तस्मै शय्यां समादाय सारदारुमयीं दृढाम् ३७ दंतपत्रासितां रम्यां हेमपट्टैरलंकृताम् । हेमतूलीप्रतिच्छन्नां शुभगेंदूपधानकाम् ३८ प्रच्छादनपटीयुक्तां धूपगंधादिवासिताम् । तांबूलं कुंकुमं मोदं कर्पूरागरुचंदनम् ३९ दीपकोपानहौ च्छत्रं प्रदद्याच्चामरासने । देहांते सूर्यलोकाय विमानै रत्नसन्निभैः ४० अप्सरोगणसंभोगैर्गीतनृत्यविलासिभिः । गत्वा कल्पार्बुदशतं सादरं त्रिदशार्चितः ४१ तदंते राजराजः स्याद्रूपसौभाग्यभाग्भवेत् । कीर्त्याढ्यो गुणपुत्रायुरारोग्यधनधान्यवान् ४२ प्रतापादिमहैश्वर्ययुक्तो भोगी बहुश्रुतः । जनसौभाग्यसंपन्नो यावज्जन्माष्टकायुतम् ४३ दर्शे दशगुणं दानं तच्छतघ्नं दिनक्षये । शतघ्नं तच्च संक्रांतौ शतघ्नं विषुवे ततः ४४ युगादौ तद्दशगुणमयने तच्छतं भवेत् । सोमग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे ॥ असंख्येयं व्यतीपाते दानं वेदविदो विदुः ४५ उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु । अर्बुदगुणितं पतने जपपानाद्यक्षयं पतिते ४६ जन्मद्वाविंशतिं नाडीर्भ्रमणं त्वेकविंशतिम् । व्यतीपातस्य पतने दशसप्तस्थितिः विदुः ४७ संप्रार्थितं यद्व्यतिपातकाले पुनः पुनस्तद्रविशीतरश्मी । प्रयच्छतः कल्पशतार्बुदानि विवर्धमानं नहि हीयते तत् ४८ तस्मान्महि त्वं व्यतीपातपूजां कुरुष्व चेत्पुण्यमनं-

नचिरम् । यदि स्थिरत्व सततं तवेष्टमशेषधारित्वमभीप्सित तव ४९ गणयित्वा व्यतीपातकोर्कं योवेत्तिविबानरः । सर्वपापहरो तस्य लभते फलमीप्सितम् ५० पठति लिखति यः शृणोति वै तत्कथयति पश्यति कारयत्यवश्यम् । रविशशिरूपधाय सोपि देवैश्चिरसमय परिपूज्यमान आस्ते ५१ ॥ इति वराहेणोक्त व्यतीपातव्रतम् ॥ ॥ अथ तत्रैव नारदीयपुराणोक्त व्यतीपातव्रतम् ॥ युधिष्ठिर उवाच । केन व्रतेन चीर्णेन न पश्येद्यमशासनम् । परिपृच्छाम्यहं विप्र व्रतानामुत्तमं व्रतम् । तद्व्रतं ब्रूहि विप्रर्षे कृत्वा भवति सुप्रियम् १ मार्कंडेय उवाच । शृणु राजन् व्रतमिदं हर्यश्वेन पुरा कृतम् ॥ तेन राज्ञा तु वै दृष्टं सूकराय च दुःखिते २ कदाचिन्मृगयां कर्तुं हर्यश्वो राजसत्तमः । वनमध्ये चरन् राजा दृष्ट्वा तत्रैव सूकरम् ३ दग्धपादकटिं चैव दग्धकंठमुखोदरम् । दृष्ट्वा तथाविधं तं तु कृपां चक्रे नृपोत्तमः ४ केन कर्मविपाकेन ह्यवस्थां प्राप्तवानयम् । अहो कष्टमहो कष्टं सूकरेणोपभुज्यते ५ अवश्यमपि भोक्तव्यं कृतं कर्म शुभाशुभम् ६ इत्येवं चिंतयित्वा स राजा तं प्राह सूकरम् । ईदृशी किमवस्था ते तन्मे ब्रूहि च सूकर ७ तच्छ्रुत्वा नृपतेर्वाक्यं निश्वसन् सूकरो मुहुः । स्वकृत्वा पुरा कृतं कर्म मत्युवाच नृप भवि ८ सूकर उवाच । शृणु राजन्नहं पूर्वं वैश्यो धनबलान्वितः । आशाकृष्टो न दत्तं हि आश्रितेभ्यश्च किंचन ९ श्रुताश्च बहवो धर्माः पुराणस्मृतिचोदिताः । तथापि पापबुद्ध्या मे न कृतं चात्मनो हितम् १० आशापाशमनुप्राप्त शुभशास्त्रविवर्जितः । कृतवान्पापमेवाहं न किंचित्सुकृतं कृतम् ११ एकदा तु द्विजः कश्चिद्व्यतीपाते गृहं मम । आगतो याचयन्मां च न किंचित्तस्य दत्तवानहम् १२ मया निराकृतो ऽत्यंतं वचोभिर्निष्ठुरैस्तथा । व्यतीपातो ऽद्य रे वैश्य किंचिद्देह्यर्थिने खलु १३ तन्मे रूपं भवति प्राप्स्यसे त्वन्यजन्मनि । कुपितेन मया तस्मै निष्ठुर

१ व्यतीपातकाले धार्यंति यो नर इत्यपि पाठः साधुः ।

वाक्समीरिता १४ ततश्च कुपितो विप्रो मम शापमथाददत्। आशाग्निर्दहते यद्वन्ममांगानि पृथक्पृथक् १५ तथैव तु तवांगानि दावाग्निः
पुरुषाधम। अरण्ये निर्जले देशे निर्जने द्रुमविस्तृते १६ तत्र सूकरयोनौ त्वमुत्पन्नो दुःखमाप्नुहि। प्रसादितो मया पश्चात्पुनरप्युक्तवांस्त-
दा १७ उद्धरिष्यति राजा त्वां सूकरत्वे दयापरः। इत्युक्त्वा च जगामाथ अन्यवैश्यगृहं प्रति १८ तेन शापेन वै राजन् सूकरत्वमवांप्त-
वान्। अहं दुःखी च संजातो विजने निर्जले वने १९ राजोवाच। केन त्वं मुच्यसे पापान्ममाचक्ष्वेह सूकर। येन शक्योप्यहं कर्तुं
तव शापस्य संक्षयम् २० वराह उवाच। श्रूयतां मम राजेंद्र मुक्तिः स्याद्येन कर्मणा। व्यतीपातव्रतं नाम कृतं राजंस्त्वया पुरा २१ य-
था माता सुतस्येह सर्वत्र सुखकारिणी। तथा व्रतमिदं राजन्निहलोके परत्र च २२ यथैवाभ्युदितःसूर्यो ह्यशेषं च तमो दहेत्। व्यतीपात-
स्तथैवेह सर्वपापं व्यपोहति २३ यथा विष्णुर्ददातीह नृणां परमनिर्वृतिम्। ददात्येवं न संदेहस्तथा व्रतमिदं शुभम् २४ शतमिंदुक्षये दानं
सहस्रं तु दिनक्षये। विषुवे शतसाहस्रं व्यतीपाते त्वनंतकम् २५ विधानं व्यतिपातस्य शृणु राजन्प्रयत्नतः। द्वाविंशतिः समुत्पत्तौ भ्रमणे
चैकविंशतिः २६ पतने दशनाड्यस्तु पतिते सप्तनाडिकाः। यत्फलं लक्षमुत्पत्तौ भ्रमणे कोटिरुच्यते२७पतने दशकोट्यस्तु पतिते दत्तमक्ष-
यम्। आकृतिर्मूर्छिना काष्ठां शैलतुल्याश्च नाडिकाः २८ लक्षकोट्यर्बुदगुणमनंतं स्याद्यथाक्रमम्। व्यतीपातविभागेषु दानमुक्तं नृपोत्त-
म २९ शंखकर्णं प्रलंबोष्ठं लंबभ्रूदीर्घनासिकम्। अष्टनेत्रं चतुर्वक्त्रं भुजैरष्टादशैर्युतम् ३० शतयोजनविस्तीर्णं सोमसूर्यसुतं ध्रुवम्। माघे
वा फाल्गुने मार्गे वैशाखे श्रावणे ऽथवा ३१ व्यतीपातो दिने यस्मिन्नारभेद्व्रतमुत्तमम्। व्यतीपातव्रते तिष्ठन् शुचिर्भूत्वा समाहितः ३२
पंचगव्यतिलैर्धात्र्यैः शुचिः स्नायात्समाहितः। ततः संकल्पयेदेतद्व्रतं सर्वार्थसाधकम् ३३ व्यतीपातव्रते तिष्ठन् स्वर्णदानं करोम्यहम्। न

वारो न च नक्षत्र न तिथिर्न च चंद्रमाः २४ यदा वै जायते भक्तिस्तदा ग्राह्यमिदं व्रतम् । किं व्रतैर्बहुभिश्चीर्णैः किं दानैर्बहुभिः कृतैः २५ सर्वेषां
फलमाप्नोति व्यतीपातव्रतेन वै । इति संकल्प्य मनसा व्यतीपातव्रतं चर २६ सर्वपापविशुद्ध्यर्थं यावत्संवत्सरो भवेत् । आमंत्र्य तद्दिने विप्रं
वेदवेदांगपारगम् २७ तिलैः पूर्णशरावं च सगुडं गुरवेऽर्पयेत् । शंखचक्रगदापाणिं पद्महस्तं हिरण्मयम् २८ वस्त्रयुग्मेन संवेष्ट्य पूजयेद्गरुडध्व-
जम् । उपचारैः षोडशभिः पूजयित्वा समाहितः २९ हेमदानं ततः कुर्याद्यथाविभवसारतः । मंत्रेणानेन विधिवत् करे धृत्वा सुवर्णकम् ४०
नमस्तेऽस्तु व्यतीपात सोमसूर्यसुत प्रभो । दास्यामि दानं यत्किंचित्तदक्षय्यमिहास्तु मे ४१ गुंजामात्रमपि स्वल्पं हेम विप्रकरार्पितम् ।
गृह्यतां व्रतसिद्ध्यर्थं पूरयस्व मनोरथान् ॥ हेमाद्रिशिखरं भूत्वा सुवर्णं कोटिरुच्यते ४२ इदं क्षेत्रं कुरुक्षेत्रं साक्षान्नारायणो द्विजः । सुव
र्णस्य च दानेन प्रीतो भव जनार्दन ४३ तव हस्तो व्यतीपातो वैधृतिश्चरणौ स्मृतौ । संक्रांतिर्हृदयं स्थानममा वै नाभिरुच्यते ४४
पूर्णिमा पृष्ठतो ज्ञेया पंचांगं पंचपर्वणि । एवं विष्णुशरीरस्य मुखं वै द्वादशी स्मृता ४५ अमा च पितरो ज्ञेया माता मन्वादयस्तथा ।
भगिनी द्वादशी ज्ञेया व्यतीपातस्तु सोदरः ४६ पितुः शतगुणं प्रोक्तं सहस्रं मातुरेव च । भगिन्यां दशसाहस्रं सोदरे दत्तमक्षयम् ४७
व्यतीपातदिने देव किंचिद्विप्रे समर्पितम् । भवत्वनंतफलदं मम जन्मनि जन्मनि ४८ एवं प्रार्थ्य हृषीकेशं नत्वा चैव पुनः पुनः ।
तत्सर्वं गुरवे दद्याच्छ्रोत्रियाय कुटुंबिने ४९ व्रतोपदेष्ट्रे विप्राय पुराणज्ञाय भक्तितः । ब्राह्मणान्भोजयित्वा तु व्रतमेतत्समापयेत् ५०
राजोवाच । इदं व्रतं मया देव गृहीतं पूर्वजन्मनि । स्वर्गापवर्गदं नृणां सूकराय ददाम्यहम् ५१ एवमुक्त्वा नृपश्रेष्ठः सूकराय फलं
ददौ । तत्क्षणात्तेन पुण्येन सूकरो मुक्तकिल्बिषः ५२ मुक्तः सूकरदेहाच्च सर्वाभरणभूषितः । दिव्यं विमानं समाप्य गतः स्वर्गं च सू

करः ५३ न जानंति द्विजाः सर्वे व्यतीपातव्रतोत्तमम् । इहलोके च सुखदं स्वर्गमोक्षप्रदायकम् ५४ अतस्त्वं कुरु राजेंद्र व्यतीपातव्रतोत्तमम् । सर्वपापक्षयकरं नृणां भवति सर्वदा ५५ कुर्यादेवं मासि मासि व्यतीपातांस्त्रयोदश । चतुर्दशे तु संप्राप्ते कुर्यादुद्यापनं बुधः ५६ आदौ मध्ये तथा चांते यथाशक्तिस्तथाचरेत् । निष्कत्रयेण चार्द्धेन तदर्धार्धेन वा पुनः ५७ व्यतीपातस्वरूपं हि कुर्यादष्टभुजं नरः । गणेशपूजनं कार्यं स्वस्तिवाचनमाचरेत् ५८ नांदीमुखांस्ततोऽभ्यर्च्य आचार्यं वरयेत्सुधीः । वरयेच्च ततो विप्रान्नृत्विजश्च त्रयोदश ५९ देवागारे तथा गोष्ठे शुद्धे च स्वीयमंदिरे । पुष्पमंडपिकां कृत्वा पट्टकूलादिवेष्टिताम् ६० तन्मध्ये सर्वतोभद्रं रचयेल्लक्षणान्वितम् । तत्पूर्वे स्थापयेत्कुंभं शर्करापूरितं शुभम् ६१ तस्योपरि न्यसेत्पात्रं ताम्रं वैणवमृन्मयम् । निष्कत्रयेण प्रतिमां सुवर्णपरिनिर्मिताम् ६२ स्वशक्त्या कारयेन्मूर्तिं लक्ष्मीनारायणस्य च । लक्ष्मीनारायणीं मूर्तिं व्यतीपातसमन्विताम् ६३ स्थापयेत्प्रतिमां तत्र ब्रह्माद्यावाहनं ततः । ततः पूजां विनिर्वर्त्य महासंभारविस्तरैः ६४ अर्घ्यं चापि ततो देयं सुगंधैः कुसुमैर्जलैः ॥ गृहाणार्घ्यं व्यतीपात सोमसूर्यसुत प्रभो । सप्तजन्मकृतं पापं त्वत्प्रसादात्प्रणश्यतु ६५ मंत्रेणानेन देवाय दद्यादर्घ्यं समाहितः । होमं समारभेत्पश्चात्सोमोधेनुमिति स्मृतः ६६ आकृष्णेनेति मंत्रेण सूर्याय विधिवन्नरः । अश्वत्थार्कसमिद्भिश्च शतमष्टोत्तरं तथा ६७ इदंविष्णुरिति मंत्रेण होमः स्यात्पायसेन च । व्याहृतीनां फलैर्होमं कुर्यादष्टोत्तरं शतम् ६८ त्रयोदशब्राह्मणांश्च भोजयेल्लड्डुपायसैः । एवमाराधितान्विप्रान् दक्षिणाभिश्च तोषयेत् ६९ आचार्यं पूजयेत्पश्चाद्गां च दद्यात्पयस्विनीम् । इत्थं व्रतं तु यः कुर्यान्नरो भक्तिसमन्वितः ७० कोटिजन्मकृतैः पापैर्मुच्यते नात्र संशयः । अस्मिन् कृते व्रते राजन्वैधव्यं स्त्री न चाप्नुयात् ७१ अकालमृत्युर्दारिद्र्यं शोको दुःखं न जायते । सर्वसौख्यमवाप्नोति व्यतीपातप्रसादतः ७२

॥ इति श्रीनारदपु० व्यतीपातव्रत संपूर्णम् ॥ ॥ अथ आश्विनशुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यंतं मासोपवासव्रतं लिख्यते ॥ हेमाद्रौ विष्णुरहस्ये– । नारद उवाच । भगवन् श्रोतुमिच्छामि व्रतानामुत्तमं व्रतम् । विधिं मासोपवासस्य फलं चास्य यथोदितम् ॥ यथाविधा नरैः कार्या व्रतचर्या यथा भवेत् । आरभ्यते कथं पूर्वं समाप्य च यथाविधि ॥ यावत्संख्यं च कर्तव्यं तद्ब्रवीहि पितामह । व्रतमेतत्सुरश्रेष्ठ विस्तरेण ममानघ ॥ ब्रह्मोवाच । साधु नारद पृष्टं हि सर्वेषां हितकारकम् । यास्यतिमतां श्रेष्ठ तच्छृणुष्व ब्रवीमि ते ॥ सुराणां च यथा विष्णुस्तपतां च यथा रविः । मेरुः शिखरिणां यद्वद्वैनतेयस्तु पक्षिणाम् ॥ तीर्थानां तु यथा गंगा प्रजानां तु यथा द्विजः । श्रेष्ठं सर्वव्रतानां हि तद्वन्मासोपवासकम् ॥ सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यद्भवेत् । सर्वदानोद्भवं वापि लभेन्मासोपवासकृत् ॥ अग्निष्टोमादिभिर्यज्ञैर्विविधद्भूरिदक्षिणैः । न तत्पुण्यमवाप्नोति यन्मासपरिलंघनात् ॥ तेन दत्तं हुतं जप्तं तपस्तप्तं स्वधाकृतम् । यः करोति विधानेन नरो माससुपोषणम् ॥ प्रविश्य वैष्णवं यज्ञं पूजयेच्च जनार्दनम् । गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासकम् ॥ वैष्णवानि यथोक्तानि कृत्वा चैव व्रतानि तु । द्वादश्यादीनि पुण्यानि ततो माससुपावसेत् । अतिकृच्छ्रं पराकं च कृच्छ्रं चांद्रायणं तथा । मासोपवासं कुर्वीत ज्ञात्वा देहबलाबलम् ॥ वानप्रस्थो यतिर्वापि नारी वा विधवा मुने । मासोपवासं कुर्वीत गुरुविप्राज्ञया ततः ॥ आश्विनस्यामले पक्षे एकादश्यामुपोषितः । व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनावधि ॥ वासुदेवं समुद्दिश्य कार्तिकं सकलं नरः । मासं चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् ॥ अच्युतस्यालये भक्त्या त्रिकालं कुसुमैः शुभैः । मालतीदीवरैः पद्मैः कमलैस्तु सुगंधिभिः ॥ कुङ्कु-

१ पराकेनमासफलमनवम् । यदाह मनुः—पतारमनामयमस्य प्रासराहमभोजनम् । पराकोनामकृच्छ्रोयं सर्वपापापनोदन इति । तथा—प्रासशाहोपवासेन पराकः सर्वपापहृदि ।

मागरुकर्पूरैर्विलिप्य च सुगंधकैः । नैवेद्यैर्धूपदीपाद्यैरर्चयेत्तु जनार्दनम् ॥ मनसा कर्मणा वाचा पूजयेद्गरुडध्वजम् । कुर्यान्नरस्त्रिषवणं महद्भक्त्या जितेंद्रियः ॥ नाम्नामेव तथालापं विष्णोः कुर्यादहर्निशम् । मुखेन च स्तुतिर्वाच्या मृषावादं विवर्जयेत् ॥ सर्वसत्वदयायुक्तः शांतवृत्तिरहिंसकः । सुप्तो वा आसनस्थो वा वासुदेवं प्रकीर्तयेत् ॥ स्मृत्वा लोको न गंधादि स्वाद्वन्नं न च कीर्तयेत् । अन्यस्य वर्जयेत्सर्वमात्मनः शुभकांक्षिभिः ॥ गात्राभ्यंगं शिरोभ्यंगं तांबूलं च विलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यत्र निराकृतम् ॥ व्रतस्थोन सदा किंचिद्दुष्कर्म ह्यत्र कारयेत् । देवतायतने तिष्ठन्न गृहस्थश्चरेद्व्रतम् ॥ कृत्वा मासोपवासं तु संयतात्मा जितेंद्रियः । ततोऽर्चयेन्महाभक्त्या द्वादश्यां गरुडध्वजम् ॥ पूजयेत्पुष्पमालाभिर्गंधधूपविलेपनैः । वस्त्रालंकारवाद्यैश्च तोषयेदच्युतं नरः । स्नापयेत्तु हरिं भक्त्या तीर्थचंदनवारिभिः ॥ चंदनेनानुलिप्तांगं पुष्पधूपैरनेकशः । वस्त्रदानादिभिश्चैव भोजयेच्च द्विजोत्तमान् ॥ दद्याच्च दक्षिणां तेभ्यो तांबूलादि च दापयेत् । क्षमापयित्वा विप्रांश्च विसृजेन्नियतो व्रती ॥ एवं वित्तानुसारेण भक्तियुक्तेन चेतसा । एवं मासोपवासं तु कृत्वाऽभ्यर्च्य जनार्दनम् । भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते ॥ एवं मासोपवासस्य त्रिंशदह्नि द्विजोत्तमः । निर्वापयेत्ततश्चोच्चैर्विधिना येन तच्छृणु ॥ कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः । पूजयित्वा च देवेशमाचार्यानुज्ञया हरिम् ॥ अर्चयित्वा हरिं भक्त्या अभिवाद्य गुरुं तथा । ततोऽनुभोजयेद्विप्रान्यथाशक्ति यथाविधि ॥ विशुद्धकुलचारित्रान् विष्णुपूजनतत्परान् । पूजयित्वा द्विजान् सम्यक् त्रिंशद्वै भोजयेत्सुधीः ॥ तावंति वस्त्रयुग्मानि आसनादिकमण्डलून् । योगपट्टादिशुभ्राणि ब्रह्मसूत्राणि चैव हि ॥ दद्याच्चैव द्विजाग्र्येभ्यः पूजयित्वा प्रणम्य च । ततो ऽनुकल्पयेच्छय्यां शस्तास्तरणसंस्थिताम् ॥ वितानसंयुतां श्रेष्ठां सोपधानामलंकृताम् । विष्णोस्तु का-

रयेन्मूर्ति कांचनीं तु स्वशक्तितः । न्यसेत्तस्यां तु शय्यायामर्चयित्वा स्रगादिभिः ॥ आसनं पादुके च्छत्रं वस्त्रयुग्ममुपानहौ । पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् ॥ एवं शय्यां तु संकल्प्य प्रणिपत्य च तान् द्विजान् । प्रार्थयेत्सानुमोदार्थी विष्णुलोकं व्रजाम्यहम् ॥ एवमभ्यर्चिता विप्रा वदेयुर्व्रतिनं तदा । व्रज व्रज नरश्रेष्ठ विष्णोः स्थानमनामयम् ॥ विमानं वैष्णवं दिव्यं सशय्यापरिकल्पितम् । तेन विष्णुपदं गच्छ सदानंदमनामयम् ॥ ततो विसर्जयेद्विप्रान् प्रणिपत्यानुगम्य च । ततस्तु पूजयेद्भक्त्या गुरुं ज्ञानप्रदायकम् ॥ तां शय्यां कल्पितां सम्यग्गुरुं व्रतसमापकम् । प्रणम्य शिरसा शांतो गुरवे प्रतिपादयेत् ॥ एवं पूज्य हरिं विप्र गुरुं ज्ञानप्रकाशकम् । कृत्वा मासोपवासं च निर्याप्य विधिवन्मुने ॥ कुलानां शतमुद्धृत्य विष्णुलोकं व्रजेन्नरः । यस्मिन्वंशे महापुण्ये कुले मासोपवासकृत् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ नरो मासोपवासानां कर्ता पुण्यकृतां वरः । पितृमातृकुलाभ्यां च समं विष्णुपुरं व्रजेत् ॥ नारी या विधवा जाता यथोक्तव्रतचारिणी । कृत्वा मासोपवासं च व्रजेद्विष्णुं सनातनम् ॥ नारद उवाच । सुदुष्करमिदं देव मूर्च्छाग्लानिकरं परम् । व्रतं मासोपवासाख्यं भक्तिं जनयते ऽच्युते ॥ पीडितस्य भृशं देव मुमूर्षोर्व्रतिनस्तदा । त्यागो वानुग्रहो वाथ किं तु कार्यं पितामह ॥ ब्रह्मोवाच । व्रतस्थं कर्षितं दृष्ट्वा मुमूर्षुं वा तपोवनम् । दृष्ट्वा तु ब्राह्मणास्तस्य कुर्युः सम्यगनुग्रहम् ॥ अमृतं पायसं क्षीरमिक्षुमानं सकृन्निशि । यथेह न वियुज्येत प्राणैः क्षुत्पीडितो व्रती ॥ अतिमूर्च्छान्वितं क्षीणं मुमूर्षुं क्षुत्प्रपीडितम् । पाययित्वा शृतं क्षीरं रक्षेद्दत्त्वा फलानि च । अहोरात्रं च यो नित्यं व्रतस्थः परिपालयेत् । पयो मूलं फलं दत्त्वा रक्षेच्च व्रतिनं सदा ॥ एवं मासोपवासस्य आरूढप्राणसंशये । अव्रतघ्नगुणैर्दिव्यैः परीप्सेद्ब्राह्मणाज्ञया ॥ नैते व्रतं विनिघ्नंति हविर्विप्रानुमोदनम् । क्षीरौषधं गुरोराज्ञा आपो मूलं फलानि

च ॥ एवं कृत्वापि रक्षेत सुगुडं पायसं तथा । पाययेत्क्षीरं तोयं च व्रतं पश्चात्समापयेत् ॥ अथ विष्णवर्चनं विष्णुर्दाता विष्णुर्व्रती तथा । सर्वं विष्णुमयं ज्ञात्वा व्रतस्थं क्षीणमुद्धरेत् ॥ यदा मुमूर्षुर्निश्रेष्ठः परिग्लानोतिमूर्छितः । तदा समुद्धरेत्क्षीणमिच्छंतं विमुखं स्थितम् ॥ परिपाल्य व्रती देहं व्रतशेषं समापयेत् । यथोक्तं द्विगुणं तस्य फलं विप्रमुखोदितम् ॥ इंद्रियार्थेष्वसक्तो यो सदैव विमलाम तिः । परितोपयते विष्णुं नोपवासो यतात्मनाम् ॥ किं तस्य बहुभिस्तीर्थैः स्नानहोमजपव्रतैः । अजितोपींद्रियगणो जितो येन स्वचेतसा ॥ जितेंद्रियः सदा शांतः सर्वभूतहिते रतः । वासुदेवपरो नित्यं न क्लेशं कर्तुमर्हति ॥ कृत्वा नूनं यथोक्तं तु वैष्णवं पदमव्ययम् । प्राप्नोति पुरुषो नित्यं पुनरावृत्तिदुर्लभम् ॥ ये स्मरंति सदा विष्णुं विशुद्धेनांतरात्मना । ते प्रयांति भयं त्यक्त्वा विष्णुलोकमानामयम् ॥ ततो विष्णवर्चनं सम्यक् प्रातः सायाह्नमेव च । कीर्तयंत्यच्युतं ये वै ते तरंति भवार्णवम् ॥ आनंदितो ऽथ दुःखार्तः क्रुद्धः शांतोऽथवा हरिम् । एवं यः कीर्तयेद्भक्त्या स गच्छेद्वैष्णवीं पुरीम् ॥ गर्भजन्मजरारोगदुःखसंसारबंधनैः । न बाध्यते नरो नित्यं वासुदेवं मनःस्मरन् ॥ स्थावरे जंगमे सत्वे स्थूले सूक्ष्मे शुभाशुभे । विष्णुं पश्यति सर्वत्र यः स विष्णुः स्वयं नरः ॥ सर्वं विष्णुमयं ज्ञात्वा त्रैलोक्यं सचराचरम् । यस्य शांता मतिस्तेन पूजितो गरुडध्वजः ॥ इदं कल्पानुकल्पाभ्यां व्रतानामुत्तमं व्रतम् । विष्णुलोकमवाप्नोति चक्रपाणेः प्रसादतः ॥ विधिर्मासोपवासस्य यथावत्परिकीर्तितः । सुतस्नेहान्मुनिश्रेष्ठ सर्वलोकहिताय च । कृत्वा विष्णवर्चनं भक्त्या नरो विष्णुपुरीं व्रजेत् । नाभक्ताय प्रदातव्यं न देयं दुष्टचेतसे ॥ इति श्रीविष्णुरहस्योक्तं मासोपवासव्रतं संपूर्णम् ॥ ॥ अथाषाढशुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यंतं धारणापारणाव्रतं लिख्यते ॥ कृष्ण उवाच । शृणु कौं

तेप वक्ष्यामि धारणापारणाव्रतम् । बांधवादिवधोत्पन्नदोषघ्न च सुखप्रदम् ॥ कुलवृद्धिकरं चैव सर्वेंद्रियनियामकम् । चातुर्मास्ये तथा चाद्यो मासि कौंतेय सुव्रत ॥ पुण्याहं कारयेत्पूर्वमेकादश्याः शुभे दिने । पश्चात्संकल्प्य राजेंद्र तदारभ्य व्रतं चरेत् ॥ आद्ये मासि तथा चान्ते चातुर्मास्यमथापि वा । एकस्मिन्धारणं कार्यं पारणं च तथा ऽपरे ॥ उपवासो धारणं स्यात्पारणं भोजनं भवेत् । पारणे तु दिने प्राप्ते अर्घ्यं पूर्वं निवेदयेत् ॥ पारणं तु ततः कार्यं मन्त्रमष्टाक्षरं जपम् । अष्टोत्तरशतं दद्यादर्घ्यं देवाय तन्मना ॥ समाप्ते मासि राजेंद्र कुर्यादुद्यापनं बुधः । चातुर्मास्यव्रतं चाथ मासे मासे तु कारयेत् । उपवासदिने प्राप्ते पुण्याहं कारयेत्सुरा ॥ आचार्यं वरयेत्पश्चाद्ब्राह्मणं तु ततः परम् ॥ कुर्यात्तु प्रतिमां पूज्यां लक्ष्मीनारायणस्य वै । पञ्चामृतैस्तथा पुष्पैस्तुलसीदलपंचकैः ॥ मालतीकेतकीमिश्रैः मल्लिकाकुसुमैस्तथा । रात्रौ जागरणं कुर्यात्पुराणपठनादिभिः ॥ प्रातःकाले समायाते ब्राह्मणांस्तु निमंत्रयेत् । मासे विप्रा पंचदश द्विमासे द्विगुणं भवेत् । चातुर्मास्ये तथा राजंस्तथा विंशतिमुत्तरान् । आनीय सत्स्वया राजन्ब्राह्मणांस्तु शुचिव्रतान् । पश्चात्स्नानादिकं कृत्वा देवपूजां समाचरेत् । पश्चादग्निं समाधाय होमं कुर्याद्यथाविधि ॥ निषुसीदेति मंत्रेण जुहुयाच्च तिलोदनम् । अराधिकाणेमंत्रेण जुहुयाच्च घृतौदनम् ॥ अष्टाक्षरेण मंत्रेण पायसं जुहुयात्ततः । लक्ष्मीनारायणं देवं स्थापयेत्तत्र देवता ॥ पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् । ब्राह्मणान्भोजयेत्पश्चादाचार्यं पूजयेत्ततः ॥ एवं कृत्वा महाभाग ब्रह्महत्यादिपातके । मुच्यते नात्र संदेहस्तस्मात्कुरु महाव्रतम् ॥ सुग्रीवस्तु पुरा राजन् हत्वा वालिनमाहवे । रामादिष्टं ततो कृत्वा धारणापारणाव्रतम् । विमुक्तः स तदा दोषान्नानापातकसंचयात् । नारदेन तथा राजन्पूर्वजन्मनि सुव्रत ॥ द्विजानामुपदेशाच्च धारणापारणा कृता । होमादिकं विधायाथ तस्य पुण्यप्रभावतः ॥ जितेंद्रि

यस्ततो जातो ब्रह्मलोकादिकांश्चरन् । तस्मात्सर्वप्रयत्नेन कुर्याद्धारणपारणम् । इंद्रियाणां वशार्थाय सर्वपापापनुत्तये । तस्मात्त्वमपि राजेंद्र कुरुष्व व्रतमुत्तमम् । किं दानैस्तपसा किं वा नियमैश्च व्रतैर्यमैः । धारणापारणं कुर्याद्व्रतानामुत्तमंव्रतम् ॥ सर्वयज्ञेषु तीर्थेषु सर्वदानेषु यत्फलम् । तत्फलं समवाप्नोति कृत्वा धारणपारणम् ॥ इदं व्रतं महापुण्यं तपसामुत्तमं तपः । तस्मात्त्वमपि राजेंद्र कुर्विदं विधिपूर्वकम् ॥ बांधवादिवधाद्दोषान्मुच्यते नात्र संशयः ॥ इति तं संवदिष्याथ विष्णुः स्वां च पुरीं ययौ । वंद्यमानः पौरजनैः समस्तैः पांडुनंदनैः ॥ युधिष्ठिरोपि राजर्षिश्चकारेदं महाव्रतम् । विमुक्तः सर्वपापेभ्यो वंशवृद्धिस्ततोऽभवत् ॥ इति श्रीभविष्यपु० धारणापारणाव्रतं संपूर्णम् ॥ ॥ अथ संक्रांतिव्रतानि लिख्यंते ॥ ॥ तत्रादौ धान्यसंक्रांतिव्रतम् ॥ हेमाद्रौ स्कांदे—नंदिकेश्वर उवाच । अथाहं संप्रवक्ष्यामि धान्यव्रतमनुत्तमम् । यत्कृत्वेह नरो राजन्सर्वान्कामानवाप्नुयात् ॥ अयने विषुवे चैव स्नानं कृत्वा यथाविधि । व्रतस्य नियमं कुर्याद्ध्यात्वा देवं दिवाकरम् ॥ करिष्यामि व्रतं देव त्वद्भक्तस्त्वत्परायणः । तत्र विघ्नो न मे भूयात्तव देव प्रसादतः ॥ इत्युच्चार्य लिखेत्पद्मं कुंकुमेनाष्टपत्रकम् । भास्करं पूर्वपत्रे तु आग्नेये च । तथा रविम् ॥ विवस्वंतं तथा याम्ये नैर्ऋत्ये पूषणं तथा । आदित्यं वारुणे पत्रे वायव्ये तपनं तथा ॥ मार्तंडमिति कौबेरे ऐशान्ये भानुमेव च एवंच क्रमशोऽभ्यर्च्य विश्वात्मा मध्यदेवता[1] ॥ कृतांजलिपुटो भूत्वा अर्घ्यं दद्यात्समंत्रकम् ॥ कालात्मा सर्वदेवात्मा वेदात्मा विश्वतोमुखः । व्याधिमृत्युजराशोकसंसारभयनाशनः । इत्यर्घ्यमंत्रः ॥ पुष्पैर्धूपैः समभ्यर्च्य शिरसा प्रणिपत्य च । रविं ध्यात्वा ततो दद्याद्धान्यप्रस्थं द्विजातये ॥ प्रतिमासं पुनस्तद्वत्पूज्यो देवः सहस्रपात् । एवं सदा प्रदातव्यं धान्यप्रस्थं द्विजातये ॥ एवं संवत्सरे पु-

१ विश्वात्मा मध्यदेशे । इत्यपि पाठः स धुः ।

र्ण कुर्यादुद्यापनक्रियाम् । अर्घ्यपात्रं हि सौवर्णं कारयेन्मण्डलं शुभम् ॥ द्विभुजं पूजयेद्भानुं रक्तवस्त्रयुगान्वितम् । धान्यद्रोणेन सहितं तद्दद्यात्स्वशक्तितः ॥ स्वर्णशृंगीं रौप्यखुरीं कांस्यदोहां पयस्विनीम् ॥ रविरूपं द्विजं ध्यात्वा तत्सर्वं विनिवेदयेत् ॥ अग्निष्टोमसहस्राणां फलं प्राप्नोति मानवः ॥ सप्तजन्मसहस्राणि धनधान्यसमन्वितः । निर्व्याधिर्निरुजो धीमान् रूपवानभिजायते ॥ इति श्रीस्कंदपु० धान्यसक्रांतिव्रतं संपूर्णम् ॥ ॥ अथ लवणसक्रांतिव्रतम् ॥ तत्रैव । अथातः संप्रवक्ष्यामि लवणसक्रांतिमुत्तमाम् । संक्रांतिवासरं प्राप्य स्नानं कृत्वा शुभे जले ॥ वस्त्रालंकारसंवीतो भक्तिभावसमन्वितः । कुंकुमेन लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥ भास्करं पूजयेद्भक्त्या धान्यप्रस्थसमन्वितं । तदग्रे लवणं पात्रं सगुडं स्थापयेत्ततः ॥ पूजितस्त्वं यथाशक्त्या प्रसीद मम भास्कर ॥ लवणं सगुडं पात्रं ब्राह्मणाय निवेदयेत् । एवं संवत्सरे पूर्णे भानुं कुर्याद्धिरण्मयम् ॥ रक्तवस्त्रयुगच्छन्नं रक्तचंदनचर्चितम् । कवलं लवणं पात्रं धेन्वा सार्द्धं द्विजातये । प्रदद्याद्भानुमुद्दिश्य विश्वात्मा प्रीयतामिति ॥ एवं कृत्वा तु यत्पुण्यं प्राप्यते भुवि मानवैः । तत्केन गदितुं शक्यं वर्षकोटिशतैरपि ॥ लवणाचलदानस्य फलं प्राप्नोति मानवः । सर्वकामसमृद्धात्मा विमानवरमध्यगः ॥ सूर्यलोके वसेत्कल्पं पूज्यमानः सुरासुरैः ॥ इति लवणसक्रांतिव्रतम् ॥ ॥ अथ भोगसक्रांतिव्रतम् ॥ तत्रैव । संक्रांतिदिवसं प्राप्य स्नात्वा चैव शुचिव्रतः । सुवासिन्यै प्रदातव्यं नानासौभाग्यकंचुकम् ॥ कुंकुमं कज्जलं चैव सिंदूरं कुसुमानि च । सुगंधीनि च द्रव्याणि तांबूलं च शताधिकम् ॥ तंडुलान् गुडसंयुक्तांस्ताभ्यो दद्याद्विचक्षणः । दद्यात्प्रहृष्टमनसा मिथुनेभ्यो यथाविधि ॥ भोजयित्वा यथाशक्त्या वस्त्रयुग्मं प्रदापयेत् । एवं संवत्सरस्यांते रविं संपूज्य पूर्ववत् ॥ धेनुं सदक्षिणां दद्यात्सपत्नीकद्विजाय च । स्यात्सुखी सर्वमर्त्येषु भोगी जन्मनि जन्मनि ॥ इति भोगसक्रांतिव्रतम् ॥ ॥

॥ अथ रूपसंक्रांतिव्रतम् ॥ तत्रैव । संक्रांतिवासरे स्नानं कुर्यात्तैलेन वै सुधीः । हेमपात्रं घृतयुतं हिरण्येन समन्वितम् ॥ स्वरूपं वीक्ष्य तत्पात्रे ब्राह्मणाय निवेदयेत् । एकभक्तं ततः कृत्वा पूजयित्वा रविं व्रती । व्रतांते कांचनं दद्याद्व्रतधेनुसमन्वितम् ॥ इति रूपसंक्रांतिव्रतम् ॥ ॥

॥ अथ तेजःसंक्रांतिव्रतम् ॥ शालितंडुलसंयुक्तं करकं कारयेच्छुभम् । दीपं संस्थाप्य तन्मध्ये ज्वलितं तु स्वतेजसा ॥ तन्मुखे मोदकं स्थाप्य ब्राह्मणाय निवेदयेत् । रविं संपूज्य यत्नेन अर्घ्यं दद्याद्विचक्षणः ॥ एकभक्तं च कर्तव्यं यावत्संवत्सरं भवेत् । संवत्सरे तु संपूर्णे कुर्यादुद्यापनं बुधः ॥ शोभनं दीपकं कार्यं सुवर्णेन तु नारद । ताम्रस्य करकं कुर्याद्दीपं न्यस्य तथोपरि ॥ कपिला सहदातव्यं करकेण द्विजातये ॥ इति तेजःसंक्रांतिव्रतम् ॥ ॥ अथ सौभाग्यसंक्रांतिव्रतम् ॥ संक्रांतिवासरे प्राप्ते स्नात्वा चैव शुचिव्रतः । पूर्ववद्भानुमभ्यर्च्य तथैव च सुवासिनीम् । सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मं तु योषिते । विप्राय वेदविदुषे भक्त्या तत्प्रतिपादयेत् ॥ एवं संवत्सरे पूर्णे कुर्याद्ब्राह्मणपूजनम् । पर्वतं लावणं कृत्वा यथाविभवसारतः ॥ कांचनं कमलं कृत्वा भास्करं चैव कारयेत् । गंधपुष्पादिना पूज्य विप्राय प्रतिपादयेत् ॥ ऐक्षवं तृणराजं च निष्पावाश्च सुशोभनाः । धान्यकं जीरकं चैव कौसुंभं कुंकुमं तथा । लवणं चाष्टमं तत्र विप्राय विनिवेदयेत् ॥ इति सौभाग्यसंक्रांतिव्रतम् ॥ ॥ अथ तांबूलसंक्रांतिव्रतम् ॥ संक्रांतौ प्रातरुत्थाय स्नात्वा चैव यथाविधि । रविमभ्यर्च्य यत्नेन चंदनेन सुगंधिना ॥ तांबूलं चंदनाद्यैश्च पूजयेच्च द्विजोत्तमान् । एवं संवत्सरं कार्यं संक्रांतौ रविपूजनम् ॥ तांबूलं भक्षयेद्विप्रैः कारयेत्तत्पुरःसरम् । वत्सरांते तु कमलं कृत्वा चैव तु कांचनम् । पर्णकोशं प्रकुर्वीत तथा पूगफलालयम् । चूर्णभांडं प्रकुर्वीत पूगप्रस्फोटनं तथा ॥ मुखवासादिचूर्णानां भांडानि विविधानि च । द्विजदापत्यमावाह्य सर्वोपस्करसंयुतैः ॥ द्रव्यैस्तु पूजयेद्भक्त्या प-

इसेभोजयेद्विजान् । उपकल्पितं तु यत्किंचिद्ब्राह्मणाय निवेदयेत् । एवं करोति या नारी तांबूलाख्य व्रतोत्तमम् । भर्त्रा पुत्रैश्च पौत्रैश्च मोदते स्वगृहे सदा ॥ इति तांबूलसंक्रांतिः ॥ ॥ अथ मनोरथसंक्रांतिव्रतम् ॥ गुडेन पूर्णकुंभेन वत्सरं तु स्वशक्तितः । संक्रांतिवासरे स्याद्ब्राह्मणाय कुर्याद्दिने ॥ एवं संवत्सरे पूर्णे मतिसंक्रमणेर्जिते । रविमभ्यर्च्य यत्नेन कुर्यादुद्यापनं शुभम् ॥ गुडस्य पर्वतं कृत्वा वस्त्रैश्च भूषितम् । अयने चोत्तरे दद्याद्वित्तशाठ्यं न कारयेत् ॥ यं य कामयते कामं तं तं प्राप्नोति पुष्कलम् । शेषं धान्यसंक्रांतिवत् ॥ इति मनोरथसंक्रांतिव्रतम् ॥ ॥ अथ अशोकसंक्रांतिव्रतम् ॥ अयने विषुवे चैव व्यतीपातो भवेद्यदि । एकभुक्तं ततः कुर्यात्तिलदानमथैकम् ॥ कांचनं भास्करं कृत्वा यथाविभवशक्तितः । स्नापयेत्पंचगव्येन गंधपुष्पैस्तु पूजयेत् ॥ वेष्ट्याथ रक्तवस्त्राभ्यां ताम्रपात्रे निधाय च । भास्कराय नमः पादौपू० । रवयेन० जंघेपू० । आदित्याय० जानुनी० । दिवाकराय० ऊरू० । अर्यम्णे० कटी० । भानवे० उदरं० । पूष्णेन० बाहुपू० । मित्राय० स्तनौ० । विवस्वते० कंठंपू० । सहस्रांशवे० मुखंपू० । तमोहन्त्रेन० नेत्रे० । तेजोराशये० शिरः पू० । अरुणसारथयेन० सर्वांगपू० ॥ अर्घ्यं च पूर्ववत्कार्यं ब्राह्मणाय निवेदयेत् ॥ एवं संवत्सरे पूर्णे कांचनेन दिवाकरम् । संपूज्य पद्मकुसुमैर्यथाविभवसारतः ॥ धूपैर्दीपैश्च नैवेद्यै रक्तवस्त्रेण वेष्टितम् । ततो होमं प्रकुर्वीत रविमंत्रेण नारद । द्वादश कपिला देया वस्त्रालंकारसयुताः । अशक्तः कपिलामेकां वित्तशाठ्यविवर्जितः ॥ आयुरारोग्यमैश्वर्यं भार्यापुत्रसमन्वितः ॥ इति अशोकसंक्रांतिः ॥ ॥ अथ आयुःसंक्रांतिव्रतम् ॥ अथान्यां च प्रवक्ष्यामि आयुःसंक्रांतिमुत्तमाम् । संक्रांतिदिवसे स्नात्वा पूजयेच्च दिवाकरम् ॥ कांस्ये क्षीरं घृतं दद्यात्सहिरण्यं स्वशक्तितः । मंत्राः पृथक् वक्तव्याः पूजा सैव प्रकीर्तिता ॥ सत्क्षीरं सुरभीजातं पीयूषसमम[illegible]

अनेन विधिना वर्षं सर्वं दद्यादतंद्रितः । उद्यापनादिकं सर्वं धान्यसंक्रांतिवद्भवेत् ॥ निर्व्याधिश्चैव दीर्घायुस्तेजस्वी कीर्तिमांस्तथा । अपमृत्युभयं नास्ति जीवेच्च शरदां शतम् ॥ इति आयुःसंक्रांतिः ॥ ॥ अथ धनसंक्रांतिव्रतम् ॥ संक्रांतिदिवसे पूज्यो भास्करस्तु विधानतः । कलशं निर्व्रणं गृह्य वारिपूर्णं निदापयेत् ॥ सुवर्णप्रतिमां कृत्वा प्रतिमासं तु दापयेत् । विधिनाऽनेन वर्षांते प्रीयतां मे दिवाकरः ॥ भानोरुदयवेळायां स्नात्वा सूर्यं प्रपूजयेत् । कृसरान्नेन पक्वान्नघृतयुक्तेन भूरिणा ॥ ब्राह्मणान्भोजयेद्यत्नाच्चापे प्राप्ते दिवाकरे । पूजाविधानं तद्वत्तु धान्यसंक्रांतिवद्भवेत् ॥ सौवर्णं कलशं कृत्वा सूर्यं चोपरि विन्यसेत् । सुवर्णघटितं पद्मं सूर्याय विनिवेदयेत् ॥ गोदानं तत्र दातव्यमेवं संपूर्णतां व्रजेत् । जन्मनां शतसाहस्रं धनयुक्तो भवेन्नरः ॥ आयुरारोग्यसंपन्नो सूर्यलोके महीयते ॥ इति धनसंक्रांतिः ॥ ॥ अथ सर्वसंक्रांत्युद्यापनम् ॥ ॥ हेमाद्रौ मात्स्ये—। नंदिकेश्वर उवाच । अथान्यदपि वक्ष्यामि संक्रांत्युद्यापने फलम् । विषुवे चायने चैव संक्रांतिव्रतमाचरेत् ॥ पूर्वेद्युरेकभक्तेन दंतधावनपूर्वकम् । संक्रांतिवासरे प्राप्ते तिलैः स्नानं समाचरेत् ॥ रविसंक्रमणे भूमौ चंदनेनाष्टपत्रकम् । पद्मं सकर्णिकं कुर्यात्तस्मिन्नावाहयेद्रविम् ॥ कर्णिकायां न्यसेद्देवमादित्यं पूर्ववत्तथा । नमः सोमार्चिषे चाग्ने याम्ये ऋङ्मण्डलाय च ॥ नमः सवित्रे नैर्ऋत्ये वारुणे तपनं बुधः । वायव्ये मित्रमावाह्य पूजयेत्तु यथाक्रमम् ॥ मार्तंडमुत्तरे विष्णुमीशान्ये विन्यसेत्सदा । द्विजाय सोदकं कुंभं तिलपात्रं हिरण्मयम् ॥ कमलं तु यथाशक्त्या कारयित्वा निवेदयेत् । चंदनोदकपुष्पैश्च देवायार्घ्यं न्यसेद्भुवि ॥ विश्वाय विश्वरूपाय विश्वधाम्ने स्वयंभुवे । नमोऽनंत नमो धात्रे ऋक्सामयजुषांपते ॥ अनेन विधिना सर्वं मासि मासि समाचरेत् । वत्सरांते तथा कुर्यात्सूर्यं द्वादशधा नरः ॥ संवत्सरांते घृतपायसेन संतर्प्य वह्निं द्विजपुंगवान्वै ।

शुभान् पुनर्द्वादश धेनुयुक्तान्समर्प्य हैरण्मयपद्मगर्भान् ॥ पयस्विनीः शीलवतीश्च दद्यात्ताश्च स्वरूपेण सुवस्त्रयुक्ताः । गावो ऽथवा सप्त
च कांस्यदोहा माल्यांबरा वा चतुरोप्यशक्तः ॥ तत्राप्यशक्तः कपिलामथैकां निवेदयेद्ब्राह्मणपुंगवाय । हैमीं च दद्यात्पृथिवीमशेषां कृ
त्वाऽथ रौप्यामथवा सुताम्रीम् ॥ पैष्टीमशक्तोऽथ तिलैर्विधाय सौवर्णसूर्येण समं प्रदद्यात् । न वित्तशाठ्यं पुरुषोत्र कुर्यात्कुर्वन्नधो याति न
संशयो ऽत्र ॥ यावन्महेंद्रप्रमुखा नगेंद्राः पृथ्वी च सप्ताब्धियुतेह तिष्ठेत् । तावत्स गंधर्वगणैरशेषैः संपूज्यते नारद नाकपृष्ठे ॥ ततस्तु भूमौ
द्विजवर्यजो वा क्षत्राधिपः स्यात्कुलशीलयुक्तः । सुरेंर्मुखे त्वमवपुः समार्य प्रभूतपुत्रो रिपुवर्दितांघ्रिः ॥ इति सर्वसंक्रांत्युद्यापनम् ॥ ॥
॥ अथ धनुःसंक्रमणे विशेषः ॥ रवौ धनुषि संप्राप्ते नद्यां स्नात्वोरुणोदये । सर्वं नैत्यं च संपाद्य मुहूर्तं न गतो रविः ॥ कृसरान्नेन विप्रान्वै
भोजयेद्वृतपायसैः । दक्षिणाभिश्च संतोष्य स्वयं भुंजीत वाग्यतः ॥ एवं निरंतरं कुर्यादशक्तो भानुवासरे । इह भुक्त्वा तु भोगान्वै सूर्य
लोकं स गच्छति ॥ इति धनुर्मासविशेषः ॥ ॥ अथ रवेर्घृतस्नपनम् ॥ हेमाद्रौ भविष्ये– । उत्तरे त्वयने मासे घृतप्रस्थेन यो रविम् ।
स्नापयित्वा ब्राह्मणेभ्यो यः प्रयच्छति मानवः ॥ घृतधेनुं तथा दद्याद्ब्राह्मणाय कुटुंबिने । सर्वपापविनिर्मुक्तः सूर्यलोके चिरं वसेत् ॥ ततो
भवति भूपालः प्रजानंदविवर्धनः ॥ इत्युदगयने घृतस्नपनम् ॥ ॥ अथ मकरसंक्रांतौ शिवरहस्ये घृतकंबलदानमहिमा ॥ माघे मासि
महादेवं यः कुर्याद्घृतकंबलम् । स भुक्त्वा सकलान्भोगानंते मोक्षं च विंदति ॥ नरा भूपतयो जाता घृतकंबलदानतः । जातिस्मराश्च
ते जाता मुक्ताश्चांते शिवार्चकाः ॥ पुरा सुनागस विप्र जाबालिं श्रुतिपारगम् । पप्रच्छ शूलकर्णाभो धर्मं दारिद्र्यनाशकम् ॥ सुनागा
उवाच । असितायाः सितायाः वा धेनोर्घृतमनुत्तमम् ॥ संपादनीयं यत्नेन घनीभूतं च शोभनम् ॥ तद्घृतं तुलयोत्तीर्णं प्रस्थसार्धशतत्रयम् ।

महाकंबलमेतद्धि घृतस्य परिकीर्तितम् ॥ तदर्द्धं वा तदर्धं वा सायं नेयं शिवालये । घृतेनान्यन देवेशमभिषिंच्य महेश्वरम् ॥ ततो घृतं घनीभूतमर्पयेच्छिवमस्तके । ततस्तिलैः सर्षपैश्च बिल्वपत्रैश्च कोमलैः ॥ हेमपद्मैश्च देवेशः पूजनीयो महेश्वरः। धूपदीपादिकं देयं महानैवेद्यमादरत् ॥ ततो नीराजं दत्त्वा देयः पुष्पांजलिस्ततः ॥ प्रदक्षिणां नमस्कान् कृत्वा च तदनंतरम् ॥ शैवं पंचाक्षरं जप्त्वा शिवायैतन्निवेदयेत् । ततो जागरणं कुर्याच्छिवस्मरणपूर्वकम् ॥ ततः प्रातः समुत्थाय कृत्वा स्नानादिकं पुनः । पूजनीयो महादेवो घृतसेचनपूर्वकम् ॥ भोजनीयास्तथा शैवा भक्ष्यैर्भोज्यैश्च यत्नतः । ततः स्वयं च भोक्तव्यं बंधुभिः सह सादरम् ॥ अनेन तव दारिद्र्यं नाशमेष्यति सर्वथा । भोगांश्च विपुलान्भुक्त्वा शिवलोकं गमिष्यसि ॥ इति मकरसंक्रांतौ घृतकंबलदानम् ॥ ॥ अथ मकरसंक्रमणे दधिमंथनदानम् ॥ तद्विधिः– । मासपक्षाद्युल्लिख्य । ममेहजन्मनि जन्मांतरे चाखंडितसौभाग्यपुत्रपौत्रधनधान्याभिवृद्ध्यर्थं श्रीसवितृसूर्यनारायणस्वरूपिणे ब्राह्मणाय दधिमंथनदानं करिष्ये । इति संकल्प्य तिलोद्वर्तनपूर्वकं स्नात्वा शुचिवस्त्रं परिधाय यशोदाकृष्णसुवर्णप्रतिमां संपूज्य प्रार्थयेत् ॥ यशोदे त्वं महाभागे सुतं देहि मनोरमम् । पूजितासि मया देवि दधिमंथनभाजने ॥ श्रीकृष्ण परमानंद संसारार्णवतारक । पुत्रं देहि मनोज्ञं च ऋणत्रयविमोक्षणम् । इति प्रार्थ्य ॥ दानमंत्रः । गृहाण त्वं द्विजश्रेष्ठ दधिमंथनभाजनम् । नवनीतेन सहितं देवकया सहितं हरिम् । प्रसादः क्रियतां मह्यं सूर्यरूप नमोऽस्तु ते ॥ इदं ब्रह्मांडपुराणे रंगदानमाहात्म्ये कुर्पीप्रति दुर्वाससोपदिष्टम् ॥ ॥ अथ कथा ॥ कुप्युवाच । पीडिता ऽहं दरिद्रेण ह्यपुत्रा च तपोधन । तपसो भंगभीत्या च यत्नं नाचरते पतिः १ मम सर्वस्वमेका गौः स्वल्पदोहा वयो महत् । जीवनं मम तक्रेण धर्मवार्ता गरीयसी २ केनोपायेन भो ब्रह्मन् तन्मे ब्रूहि सुखं मम ॥

दुर्वासा उवाच । दानं देहि च सुभगे येन पूर्णमनोरथाः ३ नदजाया सुतं लेभे ब्रह्माद्यैः पूजितं महत् । श्रीकृष्णाख्यं परं तत्त्वं योगिभिश्च दुरासदम् ४ दधिमंथनदानं च पुत्रप्राप्तिकरं परम् । नान्यदस्ति दरिद्राणां दानादस्मात्कथंचन ५ तस्मात्त्वमपि देयं मे क्षुधिताय तपस्विने । भविष्यति तव सुतश्चिरंजीवी शुचिव्रतः ६ विरच्य स्वस्तिकं पूर्वमनुलिप्य महीतलम् । द्रोणमानं धान्यपुंजं गोधूमैश्च विशेषतः ७ दध्यमत्रकमासाद्य कृष्णलीलां हृदि स्मरन् । ससिद्धमथने तस्मिन्सौवर्णीं प्रतिमां तथा ८ संकल्पादि विधायाशु पूज्य भाजनमग्रकम् । हरिद्राकुंकुमाद्यैश्च दधिभांडं विलेपयेत् ९ रक्तसूत्रेण संवीतं रक्तवस्त्रेण वेष्टयेत् । माल्यैरन्यैश्च संयुक्तैर्देवीमावाहयेत्तया १० सूर्यं चावाहयेद्देवं दीपानष्टौ प्रदीपयेत् । लड्डुकान् पृथुकाँल्लाजानिक्षुखंडानि वै तथा ११ नानाविधानि खाद्यानि समंतात्स्थापयेत्ततः । कृष्णप्रीतिकरं ह्येतद्धनधान्यसमृद्धिदम् १२ क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकंपं च सुभ्रूः । रज्वाकर्षश्रमभुजचलत्कंकणौ कुंडले च स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममंथ १३ परिधीवत्रमासाद्य ययाचे जननीं हरिः । गृहीत्वा दधिमंथानं न्यषेधत्प्रीतिमावहन् १४ नानाखाद्यैर्वारितोपि न च मुंचति माधवः । अकमात्स स्तन्यं स पिबन्मुखं विलोकयन् १५ विचित्रैः पट्टकूलैश्च गंधमाल्यैर्विशेषतः । पूजयित्वा प्रसाद्यैवं यशोदां पुत्रवत्सलाम् १६ यशोदे त्वं महाभागे सुतं देहि मनोरमम् । पूजितासि मया देवि दधिमंथनभाजने १७ श्रीकृष्णपरमानंद संसारार्णवतारक । पुत्रं देहि मनोज्ञं मे ऋणत्रयविमोक्षणम् १८ ब्राह्मणं वेदवेत्तारमुपवेश्य सुखासने । गंधमाल्यैश्च संपूज्य दानं दद्याद्द्विजातये १९ गृहाण त्वं द्विजश्रेष्ठ दधिमंथनभाजनम् । नवनीतेन सहितं देवकया सहितं हरिम् २० प्रसादः क्रीयतां मम सूर्यरूप नमोस्तु ते । दुर्वाससोपदिष्टा

सा द्रोणभार्या सुलोचना २१ मकरस्थे यदा सूर्ये तिलोद्वर्तनपूर्वकम् । स्नात्वा च जाह्नवीतोये संप्रार्थ्य मुनिपुंगवम् २२ पूजयित्वा मुनिं सापि अददद्दधिमंथनम् । अश्वत्थामानं च सुतं दधिमंथनदानतः २३ कृपी लेभे सुयशसं ऋणत्रयविमोक्षणम् । मुक्ता दारिद्र्यदुःखात्सा बुभुजे भोगमुत्तमम् २४ एवं पूर्वं कृपी कृत्वा आनंदं समपद्यत ॥ एवं या कुरुते नारी वित्तशाठ्यविवर्जिता ॥ सर्वान्कामानवाप्नोति सूर्यलोके महीयते २५ ॥ इति श्रीब्रह्मांडपु० मकरसंक्रांतौ दधिमंथनदानकथा० ॥ ॥ अथ तांबूलोद्यापनम् ॥ युधिष्ठिर उवाच । तांबूलदानमाहात्म्यं कथयस्व मम प्रभो । उद्यापनविधिं तस्य सर्वकामार्थसिद्धये ॥ श्रीकृष्ण उवाच । सर्वेषामेव दानानां तांबूलं चोत्तमं स्मृतम् । आनंदो दीर्घमायुष्यं सौमनस्यं च पुष्टिदम् ॥ सौभाग्यं चंदनादिभ्यो विद्यालाभस्तथैव च । एतच्चतुष्टयं राजंस्तांबूलाल्लभते नरः । क्षुत्पिपासाहरं स्वादु सौभाग्यं निर्मलं स्मृतम् । द्वात्रिंशत्पत्रकैर्युक्तं पूगीफलसमन्वितम् ॥ एलालवंगकर्पूरैर्युक्तं तांबूलमुच्यते । यथालाभं भवेद्वापि देयं द्विजवराय च ॥ द्विजाभावे सुवासिन्यै तदभावे कुमारिकाम् । उद्यापनं प्रकर्तव्यं यथाविभवसारतः ॥ शुभेह्नि मासे कर्तव्यं ऋक्षे वैवाहिके ततः । पंच सप्त च सद्विप्रान्सपत्नीकान्प्रपूजयेत् ॥ पूर्वरात्रौ च संपूज्य लक्ष्मीनारायणावुभौ । उमामहेश्वरौ पूज्यौ सावित्री ब्रह्मणा सह ॥ रतिं च पंचबाणं च पूजयेच्च यथाविधि । ऋद्धिं सिद्धिं विघ्नराजं लोकपालांश्च पूजयेत् । रात्रौ पूजा प्रकर्तव्या षोडशैरुपचारकैः । तांबूलोपस्करांस्तत्र संस्थाप्योत्तरदेवताः ॥ पुरुषोत्तमायन० शार्ङ्गपाणये० गरुडध्वजाय० अनंताय० यज्ञपुरुषाय० पुंडरीकाक्षाय० नित्याय० वेदगर्भाय० गोवर्धनाय० सुब्रह्मण्याय० शौरिणेन० ईश्वराय० ॥ एतानि द्वादशनामानि पूजने हवने तथा । घृतं वा पायसं वापि पंचामृततिलोदनम् ॥ तत्तन्मंत्रैश्च होतव्यमष्टाविंशतिसंख्यया । पर्णस्थापनपात्रं च चूर्णपात्रं तथैव

च ॥ स्वर्णरौप्यमयं वापि पैत्तलं सीससंभवम् । सर्वशोभासमायुक्तां लोहजां पूगभाजिकाम् ॥ तेषां पूजा प्रकर्तव्या गंधपुष्पादिभिस्त
था । पूर्णाहुतिं ततः कुर्याद्ब्राह्मणान्भोजयेत्ततः ॥ तांबूलं सुष्ठु यो दद्याद्ब्राह्मणेभ्योऽतिभक्तितः । मेधावी सुभगः प्राज्ञो दर्शनीयश्च
जायते ॥ फलेन तृप्यते ब्रह्मा पत्रेण भगवान् हरिः । चूर्णमीश्वरतृप्त्यर्थं खदिरं कामतुष्टये ॥ कर्पूरैलालवंगादिजातिपत्रफलैस्तथा । इ
न्द्राद्या लोकपालाश्च संतुष्टा भवंति हि ॥ वारिदः सुखमाप्नोति राज्यं प्राप्नोति चान्नदः । दीपदश्चक्षुराप्नोति त्रयं तांबूलदानतः ॥ एवं कृते
विधानेन सर्वान्कामानवाप्नुयात् ॥ इति वायुपु० तांबूलव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ मौनव्रतोद्यापनम् ॥ नारद उवाच । ब्रह्मन् ब्रूहि
मम त्वं वै मौनव्रतफलं शुभम् । फलं किमस्य दानं वा कथमुद्यापनं भवेत् ॥ ब्रह्मोवाच । शृणु नारद यत्नेन सावधानेन चेतसा । चा
तुर्मास्यव्रतं कुर्यान्मौनाख्यं व्रतमुत्तमम् ॥ यस्याचरणमात्रेण गम्यते विष्णुमंदिरम् । विधिं तस्य प्रवक्ष्यामि शृणु नारद मत्सुखात् ॥ व्रत
मध्ये व्रतस्यांते व्रतादौ वा यथाविधि । उद्यापनं प्रकुर्वीत व्रतसंपूर्णहेतवे । स्नात्वा नित्यविधिं कृत्वा कुर्यात्संकल्पमादृतः । सर्वतोभद्र
मालिख्य तत्र विष्णुं प्रपूजयेत् ॥ लक्ष्म्यायुतं तु देवेशं ब्रह्माद्या देवतास्तथा । द्वारदेशे तु संपूज्यौ पुण्यशीलसुशीलकौ ॥ ज
यं च विजयं चैव गदादीन्यायुधानि च । मंडपं तोरणैर्युक्तं पट्टवस्त्रेण भूषितम् ॥ सुवर्णप्रतिमां तत्र घंटां गरुडलांछि
ताम् । उपचारैः षोडशभिरर्चयित्वा रमापतिम् ॥ रात्रौ जागरणं कुर्याद्गीतवाद्यादिमंगलैः । घृतेनाष्टोत्तरशतं पावके हवनं च
रेत् ॥ अतोदेवेति मंत्रेण ब्राह्मणान्भोजयेत्ततः । पीठदानं ततः कुर्याद्घंटादानं तथैव च ॥ घंटादानस्य माहात्म्यं वक्तुं केन
सुशक्यते । दीपदानं ततः कुर्याद्व्रतसंपूर्णहेतवे ॥ इदं व्रतं मया पूर्वं कृतमुत्पत्तिहेतवे । तेन व्रतप्रभावेण सृष्ट्युत्पत्तिर्मया कृता । कर्तं

र्व्यं तु प्रयत्नेन सर्वकामार्थसिद्धये । य इदं कुरुते वत्स स साक्षान्मामकी तनुः ॥ इति श्रीब्र० पु० ब्रह्मनारदसंवादे मौनव्रतोद्यापनं सं० ॥ अथ प्रपादानविधानम् ॥ युधिष्ठिर उवाच । कथं कृष्णतरंत्यत्र संसारगह्वरान्नराः । स्वल्पेनैव तु कालेन तथा दानेन मे वद ॥ कृष्ण उवाच । विधानमेकमतुलं सामान्यं नरसेवितम् । विधिं प्रपाख्यं राजेंद्र कथ्यमानं शृणुष्व तत् ॥ यस्मिन्पथि जलं नास्ति नास्ति ग्रामः समीपगः । प्रपा तत्र प्रकर्तव्या स्वर्गकामेप्सुभिर्नरैः ॥ माघमासे सिते पक्षे शिवरात्रौ विशेषतः । कृत्वा तु मंडपं रम्यं चतुर्द्वारं सुशोभितम् ॥ छाया शीतमयी कार्या दृढैः स्तंभैर्विशेषतः । एकवक्त्रा द्विवक्त्रा वा पूर्वोत्तरमुखा शुभा ॥ मार्गानां यत्र बाहुल्यं तत्र कार्या विचक्षणैः । दृढास्ताम्रमयान्रम्यान्मृन्मयान्वा समाहितः ॥ [ पूजां चैव समादिश्य सर्वकामैः प्रयत्नतः ] ॥ प्रावृडायाति यावद्वै जलैः कुंभान्प्रपूरयेत् । यवागूं[1] तक्रसंयुक्तां व्यंजनैस्तु समन्विताम् ॥ अन्यैश्च बहुभिर्द्रव्यैः शर्करापानकैर्युताम् ॥ तक्रं लवणसंयुक्तं तांबूलं च यथाविधि । प्रपायां भोजयेच्छक्त्या जलं वा केवलं शुभम् ॥ ब्राह्मणार्थं पृथक्पात्रं ब्रह्मचिह्नेन लक्षितम् । स्वस्तिवाचनपूर्वं तु सर्वमेतत्प्रकल्पयेत् । एवंविधा प्रपा प्रोक्ता विद्वद्भिर्धर्मकोविदैः ॥ शिशूनां जननी यद्वत्क्षुत्तृडाहरणे क्षमा । सर्वेषामपि वर्णानां प्रपा वै पोषणे क्षमा ॥ नंदंति पितरस्तस्य तुष्यंति कुलदेवताः । स्तुवंति मनुजास्तं तु येनाध्वनि कृता प्रपा ॥ क्रतुकोटिशतैर्यत्तु पुण्यं च लभते नरः । उद्यापनविधिं कृत्वा प्रपादानमनुत्तमम् ॥ तस्याः सर्वाणि पात्राणि ब्राह्मणाय निवेदयेत् । भोजयेच्च यथाशक्त्या ब्राह्मणांस्तोषयेत्ततः ॥ प्रपामंदिरदानेन कृतकृत्यो भवेन्नरः । दुर्भिक्षे ग्रासमात्रान्नं ग्रीष्मे बिन्दुसमं जलम् ॥ तत्तुल्यं क्रतुलक्षेण द्वयमेतत्ततोधिकम् ॥ इति श्रीभ०

१ बहुगुणजले पक्वीभूता घनद्रव्यविशेषा यवागूः ( कण्हेरी इति देशभाषया ख्याता ) ।

पु॰ मपादान सोद्यापन सपूर्णम् ॥ ॥ अथ लक्षपद्मविधिः ॥ युधिष्ठिर उ॰ ॥ ब्रूहि कृष्ण व्रत श्रेष्ठं सुखिद दुःखनाशनम् । पुत्रपौत्रादिक
चैव कृपया मधुसदन ॥ श्रीकृष्ण उवाच । श्रृणु राजन्प्रवक्ष्यामि व्रतानामधिक व्रतम् । सर्वदुःखहर स्त्रीणां सर्वकामफलप्रदम् ॥
लक्षपद्म रंगवल्या शुभे मासि समारभेत् । गुरुशुक्रास्तरहिते शुक्लवर्णेन यत्नतः ॥ तण्डुलैः पूजयेच्छ्वेतैः सूर्यस्य जगदीश्वरम् । उद्यापन समाप्तौ च
कुर्याद्धनेन सिद्धये ॥ सपूर्णं जायते येन तत्पुण्य प्रयत्नतः । सूर्यस्य प्रतिमां कुर्यात्सुवर्णस्य च शक्तितः ॥ वेदिकायां प्रकर्तव्य स्वस्तिक, पद्मस
युतम् । त मध्ये कलश स्थाप्य रक्तवस्त्रेण वेष्टितम् ॥ पचामृतेन सस्थाप्य देव तत्र प्रपूजयेत् ॥ गंधपुष्पाक्षतैर्दिव्यैर्धूपदीपादिभिः शुभैः । सुवर्ण
निर्मित पद्म देवाय विनिवेदयेत् ॥ आचार्यं वरयेत्तत्र वेदवेदांगपारगम् । ततो होमः प्रकर्तव्यस्तिलाज्यैः पायसैस्तथा ॥ अष्टोत्तर सहस्र
वा शतपत्रमथापि वा । गायत्रीमन्त्रतः कुर्यान्मूलमन्त्रेण होमयेत् ॥ गोदानं च प्रकर्तव्यं सूर्यस्य हरितुष्टये । ब्राह्मणान्भोज
येच्छक्त्या शर्कराघृतपायसैः ॥ तेभ्योपि दक्षिणां दद्याद्वित्तशाठ्यविवर्जित । प्रतिमां कलशं चैव दद्यात्पूजादिक तथा ॥ अतो-
देवेति मन्त्रेण आचार्याय निवेदयेत् । प्रदक्षिणां नमस्कारं कुर्यान्मूर्ध्नि कृतांजलिः ॥ श्रीकृष्ण उवाच । एवं ते व्रतमाख्यातं
स्त्रीणां कामफलप्रदे । पुत्रपौत्रादिसंतानवृद्ध्यर्थं कुरुनंदन ॥ या नारी कुरुते भक्त्या हरिस्तस्याः प्रसीदति ॥ इति श्रीसौरपु॰ लक्ष
पद्मप्रकरणोद्यापन सपूर्णम् ॥ ॥ अथ लक्षदीपदानविधिः ॥ स्कंद उवाच । लक्षसंख्यं शिवायाथ अर्पयेद्दीपमुत्तमम् । वर्षमेकं तदर्द्धं वा
र्धमथापि वा ॥ लक्षसंख्यं तदर्द्धं वा द्विलक्षं वा स्वशक्तितः । लक्षदीपं प्रकुर्वीति नराः परमधार्मिका ॥ घृतेन ये प्रकुर्वीत तेषा
पुण्य वदामिते । दीपमाला यथाशक्त्या कार्तिके श्रद्धयान्वितः ॥ यावत्काल प्रज्ज्वलति दीपा यस्य शिवाग्रतः । तावद्युगसहस्राणि

स्वर्गलोके महीयते ॥ कौसुंभेन च तैलेन दीपान्दद्याच्छिवालये । तेन पुण्येन कैलासे वसते शिवसन्निधौ ॥ अतसीतैलसंयुक्तान् दीपान्दद्याच्छिवालये । दश पूर्वान्दश परान्युक्तो गच्छेच्छिवालये ॥ ज्ञानिनो हि भविष्यंति दीपदानफलेन हि । तिलतैलेन ये दीपान्ददंते च शिवालये ॥ तेजस्विनो महाभागाः कुलेन च शतेन वै । तैलयुक्ताः कृता दीपा दापिताश्च शिवालये ॥ आर्तिक्यं च सकर्पूरं ये कुर्वंति दिने दिने । ते प्राप्नुवंति सायुज्यं नात्र कार्या विचारणा । लक्षदीपस्य संपूर्त्यै कार्यमुद्यापनं बुधैः । उपवासं प्रकुर्वीत पूर्वस्मिन्दिवसे तदा ॥ कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः । प्रतिमां शंकरस्याथ उमया सहितस्य च ॥ आचार्यं वरयेत्तत्र अभिज्ञं वेदपारगम् । कलशं स्थापयेद्रात्रौ स्वस्तिवाचनपूर्वकम् ॥ उमामहेश्वरं रम्यं स्थापयेत्कलशोपरि । उपचारैः षोडशभिः स्थापयेच्च पृथग्पृथक् । रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः ॥ प्रातःस्नानं विधायाथ होमकर्म समारभेत् । तिलसर्षपयवैश्चापि चरुणा बिल्वपत्रकैः ॥ आज्यप्लुतैश्च प्रत्येकं सद्योजातादिमंत्रतः । शतमष्टोत्तरं हुत्वा होमशेषं समापयेत् ॥ उमामहेश्वरं देवं पूजयेत्तु पुनर्व्रती । प्रतिमां वस्त्रसहितामाचार्याय निवेदयेत् । सहिरण्यां सवत्सां च धेनुं दद्यात्प्रयत्नतः ॥ अनेन विधिना यस्तु व्रतमेतत्समाचरेत् । स भुक्त्वा विपुलान्भोगान् शिवसायुज्यमाप्नुयात् ॥ ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रालंकारभूषणैः । गुरोराज्ञां गृहीत्वा तु भुंजीयाद्बंधुभिः सह । एवं यः कुरुते मर्त्यो लक्षदीपप्रदीपनम् ॥ नरो वाप्यथवा नारी सोऽश्नुते पदमव्ययम् । ज्ञानमुत्पद्यते तस्य संसारभयनाशनम् ॥ सर्वपापक्षयकरं जन्मजन्मार्जितं च यत् । बाल्ये वयसि यत्पापं यौवने वापि यत्कृतम् ॥ वार्धकेपि कृतं पापं तत्सर्वं नश्यति ध्रुवम् ॥ सर्वपापविनिर्मुक्तो भुक्त्वा भोगान्महीतले । सर्वान्कामानवाप्याथ सोऽश्नुते पदमव्ययम् ॥ इति श्रीस्कंदपुराणे लक्षदीपोद्यापनं संपूर्णम् ॥ ॥ अथ

लक्षदूर्वापूजनविधिः ॥ शूरसेन उवाच । लक्षपूजाविधिं सम्यक् कथयस्व ममाग्रतः । य कृत्वा प्राणिनः सर्वे भवंति सुखभागिनः ॥ श्रावणे च चतुर्थ्यां तु भौमवारो यदा भवेत् । शुभेह्नि वासरे वापि पूजाकर्म समारभेत् ॥ ॥ अथ दूर्वामाहात्म्यम् ॥ कौंडिन्य उवाच । सं ऊचे श्रूयतां वाक्यं यन्मया प्रोच्यतेऽनघो । मिथिलाधिपतेः कीर्तिं श्रुत्वाहं क्षुधितो भृशम् १ तृप्तिकामः समायातो न स तृप्तिमथाकरोत् । कर्मणा दांभिकेनैव सत्य न परिरक्ष्यते २ मम तृप्तिकरं किंचिद्गृहे चेदस्ति दीयताम् ३ दंपती ऊचतुः । चक्रवर्ती नृपो जातो तेन तृप्तिं न वै गतः । आवाभ्यां तु दरिद्राभ्यां किं देयं तृप्तिकारकम् ४ नदीनदजलैर्योऽब्धिरसरूयैर्नापि पूर्यते । बिंदुमात्रेण सहसा स कथं पूर्यते वद ५ द्विज उवाच । भक्त्या दत्तं स्वल्पमपि बहुतृप्तिकरं मम । अभक्त्या यच्च दत्तेन बहुदत्तं वृथा भवेत् ६ दंपती ऊचतुः । आवयोर्न गृहे किंचिच्छुभं वस्तु द्विजोत्तम । पूजार्थे गणनाथस्य प्रातर्दूर्वांकुरा हृताः ७ पूजितो गणनाथस्तु स एको ह्यव शिष्यते ॥ द्विज उवाच । भक्त्या दत्तः स एकोपि तृप्तये स्यात्प्रदीयताम् ८ कौंडिन्य उवाच । विरोचना ददौ तस्मै श्रुत्वा वाक्यं तदीरितम् । एकं दूर्वांकुरं भक्त्या तेन तृप्तो ऽभवद्द्विजः ९ शाल्यन्नं पायसान्नं च नानापक्वान्नमेव च । व्यंजनान्यपि सर्वाणि लेह्यचोष्याण्यनेकधा १० भक्त्या विरोचनादत्ते जाते दूर्वांकुरेऽखिलं । गृहीत्वा ब्राह्मणस्तत्तु बुभुक्षुः परया मुदा ११ तस्मिन्दूर्वांकुरे भक्त्या दत्ते तेनाथ भक्षिते । प्रशमः स्याद्द्विजस्यास्य तत्क्षणाज्जठरानलः १२ तृप्तिश्च परमा तेन प्राप्ता तत्क्षणमात्रतः । आलिलिंग त्रि

१ कदाचिद्गणराजोऽयमस्यापरस्य राजः सर्वं मिथिलेशं कुत्सितविभवेपेन जनकराजयमात् । स तत्र विप्रुलीभूत्वा विरोचनाभिधिरत्नोर्द्विजपोर्मंदिरं प्राप्तः स विप्ररूपः कथ इति पूर्वसंबंधो गणेशपुराणे उपासनाखण्डे पञ्चषष्टितमेऽध्याये द्रष्टव्यः ।

शिरसं तृसः सन्हर्षितो द्विजः १३ तत्याज कुत्सितं रूपं प्रकटोऽभूद्गजाननः । चतुर्भुजोरविंदाक्षः शुंडादंडविराजितः १४ कमलं परशुं
मालां दंतं करतले दधत् । महार्हमुकुटो राजन् कर्णकुंडलमंडितः १५ दिव्यवस्त्रपरीधानो दिव्यगंधानुलेपनः । उवाच तौ प्रसन्नात्मा
दंपती स गजाननः १६ वृणीत तं वरं शीघ्रं मनसा यं यमिच्छथः ॥ तावूचतुः । जन्मजन्मांतरे वापि भक्तिरस्तु दृढावयोः १७ मुक्तिर्वा
दीयतां देव अस्मात्संसारसागरात् । न याचे किंचिदन्यद्धि पादपद्मादिभानन १८ कौंडिन्य उवाच । इति तद्वाक्यमाकर्ण्य तथेत्युक्त्वा गजा-
ननः । पुनरालिंग्य प्रददे भक्तिं त्रिपुरसूदनः १९ एतस्माद्दूर्वाभारोऽस्मै दीयतां दीयते मया । असंख्यभक्षणाद्देवो यस्तृप्तिं न समाययौ २०
दूर्वांकुरेण चैकेन स तृप्तिं परमां ययौ । इति सम्यक् समाश्राव्य महिमानं परं शुभम् २१ दूर्वासमर्पणेनैव स भवेत्सर्वकामदः । इतिहासमि-
मं भक्त्या शृणुते श्रावयेच्च यः २२ स पुत्रधनमाप्नोति स्वर्गलोके च मोदते । गजानने च यो भक्तिं निष्कामो मुक्तिमाप्नुयात् २३
श्रुत्वापीत्थमितीहासमाश्रया संशयं पुनः । प्रपेदे हृदि तं ज्ञात्वा कौंडिन्यो मुनिरब्रवीत् २४ आश्रये शृणु मे वाक्यं संशयस्यापनुत्तये ।
यद्वदामि हृदिस्थस्य मया ज्ञातस्य तेनघे २५ एकं दूर्वांकुरं गृह्य गच्छ शीघ्रं बिडौजसम् । वदाशीर्वचनं पूर्वं पश्चाद्याचस्व कांचनम् २६
दूर्वांकुरेण तुलितं गृहीत्वा तु इहानय । न न्यूनं नाधिकं ग्राह्यं तस्य भाराच्छुभानने २७ आज्ञां प्राप्य मुनेः सा तु प्रस्थिता स्वार्थसि-
द्धये । एकं दुर्वांकुरं गृह्य शक्रसन्निधिमाययौ २८ तामुवाचाश्रया शक्र देहि मे कांचनं शुभम् । याचितुं त्वां समायाता भर्तृवाक्यात्सुरेश्वर
२९ इंद्र उवाच । किमर्थं त्वमिहायाता ममाज्ञा प्रेषिताभवत् । मया तु प्रेषितं तस्य स्वशक्त्या तु सुवर्णकम् ३० आश्रयोवाच । दू-
र्वांकुरस्य तुलया यद्भवेत्कांचनं शुभम् । गृहीष्ये शचिभर्तस्तन्न्यूनं न च ततोधिकम् ३१ इंद्र उवाच ॥ दूर्वांकुरप्रमाणं मे नास्ति द्रव्यं

शुभानने। कुबेरभवनं गच्छ जातरूपं प्रदास्यति ३२ इंद्रेण प्रेषिता साध्वी मुनिपत्नी मया सह। प्रापितं भवनं तेषां देहि दूर्वामित
नम् ३३ कुबेर उवाच। अत्याश्चर्यमहं मन्ये मुनेः शक्रस्य चाश्रये। मोहाविष्टो न जानाति दूर्वांकुरमितं कियत् ३४ कांचनेन कि
मेतेन बहुलं नेच्छते कुतः। आज्ञापयद्धनाध्यक्षो कोशकारं धनस्य च ३५ देहि अस्या धनं स्वेच्छं मुनिपत्न्या ममाज्ञया। एवं श्रु
त्वा ददौ तस्यै बहुलं कांचनं तु सः ३६ न जग्राह मयाद्भर्तुर्दूर्वाधिकविशंकया। स्वर्णकारतुलायां तं दूर्वांकुरम धारयत् ३७ नाभवत्तुलया
तस्य पर्याप्तं तत्तु हाटकम्। वणिक्तुला समानीता तत्रापि नाभवत्समम् ३८ तैलकारसमानीता न जाता पूरणे क्षमा। घटे महत्यतो
क्षिप्तं हाटकं दत्तमेकतः ३९ दूर्वांकुरो हि तत्रापि अधस्ताद्याति भारतः। अन्यदन्यद्ददौ तत्र कुबेरः कांचनं बहु ४० तदपि नाभवत्तेन समं दूर्वांकु
रेण च। सर्वकोशगतं द्रव्यं दत्तं गुरुतरं महत् ४१ तथापि नाभवत्तुल्यं तेन दूर्वांकुरेण च। पत्नीमाहूय तां प्राह कुबेरः कौतुकान्वितः ४२ कुरु
मद्वाक्यतः सुभ्रु घटारोहणमग्रतः। न समं चेत्समारोक्ष्ये निजसत्त्वरिरक्षया ४३ पतिव्रताज्ञया तस्य घटमारुरुहे तदा। ततोपि न समा जाता ततः
सर्वां पुरीं ददौ ४४ घटमध्ये कुबेरोपि नोर्ध्वं जातोंकुरस्ततः। श्रुत्वा वृत्तमुखादिंद्रो गजारूढः समाययौ ४५ स्वकीयद्रव्यसहितो घटमारुरुहे स्व
यम्। समं न याति दूर्वा वै घटभारेण चानघ ४६ अथ गोमुखो गतश्चिंता किमेतदिति चिंतयन्। विष्णुं हरं च सस्मार तत्रारोहणकाम्यया ४७ शि
वविष्णू समागत्य घटमारुरुहतुर्स्तदा। तथापि नोर्ध्वगमनं तदा दूर्वांकुरस्य हि ४८ शिवो विष्णुः कुबेरोपि चाश्चर्यं समपद्यत। वरुणेंद्राग्निमरु
तो नैर्ऋत्य च समाययुः ४९ देवा देवर्षयश्चापि सिद्धविद्याधरोरगाः। दिनांते समनुप्राप्ते यथा गच्छंति पक्षिणः ५० नमस्कृत्य मुनिं सर्वे
मोनुर्विद्याधरोरगाः॥ सर्वे ऊचुः। अज्ञानं विळयं यातं दर्शनात्तो मुने तव ५१ पूर्वपुण्यप्रवादग्रे कल्याणं नो भविष्यति। सत्य पत्न्या

हृतं सर्वं सर्वेषामनघ स्फुटम् ५२ महिमानं न जानीमो दूर्वांकुरसमुद्भवम् । एवं दूर्वांकुरतुलां त्रैलोक्यमपि नाभवत् ५३ गजाननशिरःस्थस्य त्वया भक्त्यार्पितस्य च । जानीयान्महिमानं कः सम्यग्दूर्वांकुरस्य च ५४ गजाननैकभक्तस्य तपतस्तपतो भृशम् । तवापि महिमानं को जानाति भुवनत्रये ५५ एवमुक्त्वा मुनिं सर्वे पूज्यमानं गजाननम् । सर्वे सभार्यं पुपुजुस्तुष्टुवुर्ननृतुर्जगुः ५६ देवा ऊचुः । न ब्रह्मा न हरिः शिवेंद्रमरुतो नाग्निर्विवस्वान्मरुच्छेषो शेषकलानिधिश्च वरुणो नो चंद्रमा नाश्विनौ । नो वाचामधिपो न चैव गरुडो यक्षाधिपो नांगिरा माहात्म्यं परिवेद वेदनिगमैरज्ञातरूपस्य ते ५७ एवं संतोष्य सर्वे ते देवदेवं गजाननम् । मुनिं च समनुप्राप्य ययुः स्वं स्वं निकेतनम् ५८ आश्रयापि ततो ज्ञात्वा दूर्वामाहात्म्यमुत्तमम् । विश्वस्ता भर्तृवाक्येन सा दूर्वां पर्यपूजयत् ५९ विघ्नेश्वरं सर्वदेवं सर्वं दूर्वाभिरर्चितम् । प्रणनाम च कौडिन्यं भर्तारं सत्यवादिनम् ६० उवाच तं प्रसन्नात्मा सात्मानं निंदती भृशम् । मादृशी नैव दुष्टास्ति पतिवाक्येन शासिता ६१ विशेषविदुषा स्वामिन् विशेषविदुषा त्वया । सम्यक्कृतं मम विभो सर्वभूतदयावता ६२ तत्क्षमस्वापराधं मे त्वामहं शरणागता । ततः प्रातः समुत्थाय दूर्वामादाय सत्वरौ ६३ स्नात्वा देवं समभ्यर्च्य दूर्वार्पणमकुर्वताम् । अनन्यभक्त्या ज्ञात्वा तौ दूर्वामाहात्म्यमुत्तमम् ६४ सायं प्रातर्देवदेवं पूजयंतौ निरंतरम् । त्यक्त्वा यज्ञं व्रतं दानं ज्ञात्वा देवो गजाननः ६५ कृपया परयाविष्टो स्वधाम प्रत्यचोदयत् ॥ गणा ऊचुः । अगाधं वर्णितं दूर्वामाहात्म्यमिदमुत्तमम् ६६ अशेषवर्णने शेषो न शक्तिं समपद्यत । त्रैलोक्यं तुलया ह्यस्या न समं जायते मुने ६७ दूर्वेति स्मरणात्पापं त्रिविधं विलयं व्रजेत् । तत्स्मृतं स्मर्यते देवो यतः सोपि गजाननः ६८ इति चिंतामणेः क्षेत्रमहिमा वर्णितः स्फुटम् । श्रवणात्कीर्तनाद्ध्यानाद्भुक्तिमुक्तिफलप्रदः ६९ एतस्मात्कारणाद्दानं त्रयाणां प्रेषितं शु-

मम् । रासभस्य मुखाद्दूर्वा गता देवोपरि प्रभो ७० चांडालशीतनाशाय आनीता तृणभारतः । वायुना प्रेरिता सापि गता दूर्वा गजानने ७१ यतश्चास्य प्रिया दूर्वा सतुष्टोसौ विनायकः । निष्पापत्वात्त्रयाणां च सान्निध्य दत्तवान्निजम् ७२ गंधमात्रेण दूर्वायाः सतुष्टो जायते विभुः । प्रसन्नाऽवति भक्त्या वै किं पुनर्मस्तकार्पणात् ७३ ब्राह्मणा ऊचुः । इति दूतमुखाद्राजन् सश्रुतो महिमा तदा । दूर्वाया मुनिभिः सर्वैं सतुष्टो न च संश्रुतः ७४ स्नात्वा दूर्वांकुरान् गृह्य पुपुजुस्ते विनायकम् । सेवकाश्चापि दूर्वाभिरानर्चु श्रीगजाननम् ७५ आसन् सर्वे दिव्यदेहास्तेजसा सूर्यवर्चसः । शृण्वतो दिव्यविद्यानां नानारावान् समततः ७६ विमानवरमारूढा दिव्यवस्त्रानुलेपनाः । याता वैनायक धाम केचिद्रूप च धारिणः ७७ नरा नागरिकाः केचिदागतास्त महोत्सवम् । द्रष्टुं दूर्वाभिरानर्चुरेकविंशत् पृथक् पृथक् ७८ मुक्त्वा भोगांश्च ते सर्वे गणेशस्थानमागमन् । विमानमपि चलितमूर्ध्वं तत्पुण्यतेजसः ७९ तस्माद्गणेशभक्तेन कार्यं दूर्वाभिरर्चनम् । न करोति नरो यस्तु प्रमादात्ताभिरर्चनम् ८० चांडालः स तु विज्ञेयो नरकान्प्राप्नुयाद्बहून् । न तन्मुख निरीक्षेत कदाचिदपि मानवः ८१ यस्तु दूर्वाभि पूज्येत देवदेवं गजाननम् । तस्य दर्शनतोन्योपि पापी शुद्धत्वमाप्नुयात् ८२ लक्षसख्याकदूर्वाभिः पूजयेद्यो गजाननम् । तेनापि कोटिगुणिता कृता पूजा न सशयः ८३ ब्रह्मोवाच । उद्यापन च कुर्यात्तु देशकालानुसारतः । माघे वा कार्तिके भाद्रे आषाढे श्रावणेपि वा ८४ अन्येषु पुण्यमासेषु व्रतमेतत्समाचरेत् । प्रातःस्नान विधायाथ दतधावनपूर्वकम् ८५ धौतवस्त्रधरो भूत्वा नित्यकर्म समाचरेत् । देवपूजागृहे वापि देवालयमथापि वा ८६ गोमयेनानुलिप्याथ धातुना मृन्मयेन वा । पंचभिर्ब्राह्मणै सार्द्धं कृत्वा च स्वस्तिवाचनम् ८७ नांदीश्राद्ध प्रकुर्वीत लक्षपूजाविधौ द्विजः । प्राणायामत्रयं कृत्वा देशकालौ स्मरेत्सुधीः ८८

गजाननं चतुर्बाहुं एकदंतं विपाटितम् । विधाय हेम्ना विघ्नेशं हेमपीठासनस्थितम् ८९ तथा हेममयीं दूर्वां तदाधारे व्यवस्थिताम् । सं-
स्थाप्य विघ्नहर्तारं कलशे ताम्रभाजने ९० वेष्टितं रक्तवस्त्रेण सर्वतोभद्रमंडले । पूजयेदुक्तकुसुमैः शमीदूर्वाभिरर्चयेत् ९१ गंधपुष्पैश्च धू-
पैश्च दीपैर्नैवेद्यतोषकैः । पश्चाद्गंधादिदूर्वाभिरर्चयेद्गणनायकम् ९२ गणाधीशं सहस्रेण अथवा शतनामभिः । सुसंख्या सफला पूजा सं-
ख्याहीना तु निष्फला ९३ एवं संपूज्य विधिवत्पूजांते होममारभेत् । आचार्यं वरयेत्पूर्वमृत्विग्भिश्चैकविंशतिः ९४ गणानांत्वेति मंत्रेण
अयुतं होममाचरेत । अथवा दूर्वामंत्रेण अयुतं तु समाचरेत् ९५ दूर्वामंत्रः—त्वंदूर्वेऽमृतजन्मासि वंदितासि सुरासुरैः । सौभाग्यंसंततिंदेहि
सर्वकार्यकरीभव ९६ यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले । तथामामपिसंतानंदेहित्वमजरामरम् ९७ सहस्रनामभिर्होमं स्वाहाकार-
समन्वितम् । मधुमिश्रैस्तिलैर्लाजैः पृथुकैरिक्षुखंडकैः ९८ लड्डुकैः पायसान्नेन सघृतेन हुनेत्ततः । पूर्णाहुतिं ततः कृत्वा बलिदानं ततश्च-
रेत् ९९ होमशेषं समाप्येत ब्राह्मणान्भोजयेत्ततः । आचार्यं पूजयेत्पश्चाद्वस्त्रालंकारभूषणैः १०० एवं मे ब्रह्मणादिष्टं व्रतं लोकोपकारक-
म् । तदेतत्कथितं तेद्य कुरु पुत्रार्थमादरात् १ इति नानाविधो राजन्महिमा कथितस्तव । सेतिहासस्तु दूर्वाणां श्रवणात्पापनाशनः २ ना-
ख्येयो दुष्टबुद्धेस्तु प्रियपुत्रे निवेदयेत् । य इदं शृणुयाद्भक्त्या वाजपेयफलं लभेत् १०३ इति गणेशपु० उपासनाकांडे दूर्वामाहात्म्ये लक्ष-
दूर्वापूजनोद्यापनं संपूर्णम् ॥ ॥ अथ शिवलक्षप्रदक्षिणाविधिः ॥ युधिष्ठिर उवाच । पुरा तु ऋषयः सर्वे नैमिषारण्यवासिनः । शौनकाद्या
महात्मानः सर्वशास्त्रविशारदाः १ तीर्थयात्राप्रसंगेन गंगाद्वारमुपागमन् । तत्र स्नाताः कृतजपा विधिवद्दत्तदक्षिणाः २ यावत्सुखोपविष्टा-
स्ते हर्षनिर्भरमानसाः । तावत्ते ददृशुस्तत्र सूतं शास्त्रार्थकोविदम् ३ ददर्श सोपि तांस्तत्र ऋषीन्विगतकल्मषान् । ननाम दंडवद्भक्त्या तै-

श्रापि प्रतिपूजितः ४ ते चक्रुः परमातिथ्यं कुशलं प्रश्नमेव च । सुखोपविष्टं तं सूतं पप्रच्छुरिदमादरात् ५ ऋषय ऊचुः । सूत सूत महाप्राज्ञ
चिरं दृष्टोसि सुव्रत । कस्मिंस्तीर्थेऽथवा देशे कालो हि निहतस्त्वया ६ त्वद्दर्शनेन सौख्यं तु जातं नः परमाद्भुतम् । कं विधिं ज्ञातुमिच्छाम
स्तच्छृणुष्व महामते ७ त्वयोक्ता विविधा धर्मास्तथा नानाविधाः कथाः । व्रतानि च विचित्राणि मनोरथकराणि च ८ इदानीं वद देवस्य
व्रतं परमपावनम् । यत्कृत्वा सर्वसिद्धिः स्यान्नराणां वांछितप्रदम् ९ सूत उवाच । सम्यक् पृष्टमृषिगणा व्रतं देवस्य चाद्भुतम् । ममापि कथितुं
हर्षो जायते नात्र संशयः १० युधिष्ठिर उवाच । धर्मा बहुविधाः प्रोक्तास्त्वयानंतफलप्रदाः । इदानीं श्रोतुमिच्छामि व्रतं सपरिकरं शुभम् ११
श्रीकृष्ण उवाच । शृणु राजन्प्रवक्ष्यामि शिवस्य व्रतमुत्तमम् । लक्षप्रदक्षिणानाम व्रतमस्ति सुदुर्लभम् १२ ब्रह्मघ्नस्य सुरापस्य गुरुदारावम
र्शिनः । संकीर्णकानि पापानि सकलीकरणानि च १३ प्रकीर्णकानि पापानि मलिनीकरणानि च । भ्रातृपत्नीसुतादीनां गामिनः काममो
हिता १४ गुरोर्विश्वासहीनस्य व्रतभ्रष्टस्य पापिनः । संध्याकर्मविहीनस्य जगद्दुष्टमार्गवर्तिनः १५ दासीवेश्यासंगिनश्च चांडालीगामिन
स्तथा । परस्वहारिणश्चापि देवद्रव्यापहारिणः १६ ब्राह्मणद्वेषिणश्चापि वृत्तिच्छेदकरस्य च । रहस्यभेदकस्यापि रहसि कृतपापिनः १७ ब्र
ह्मयज्ञविहीनस्य दुःशासननिरतस्य च । गुरुनिंदादिश्रोतुश्च गुरुद्रव्यापहारिणः १८ ब्रह्महत्यादिपापानां प्रायश्चित्तं यदीच्छसि । सकलीकर
णानां च मलिनीकरणस्य च १९ अपात्रीकरणानां च प्रायश्चित्तं यदीच्छसि । भ्रातृपत्नीसुतानां च गामिनः शमनं तथा २० श्वश्रूभ्रातृवधू
नां च इच्छयागामिनो तथा । लक्षप्रदक्षिणानाम व्रतं कुर्यान्महीपते २१ संध्याकर्मादित्यागस्य चांडालीगामिनस्तथा । दासीवेश्यासंगिनश्च
क्षयं यांति न संशयः २१ वर्धनं सर्वभूतीनां सदा विजयकारणम् । किमेभिर्बहुभिर्वाक्यैः कथितैश्च पुनः पुनः २२ दारिद्र्यनाशनं पुण्य

सर्वैश्वर्यप्रदं शिवम् । दुर्लभं सर्वमर्त्यानां पुत्रपौत्रप्रवर्द्धनम् । यो यान् प्रार्थयते कामान् सतानाप्नोति मानवः २४ ऋषय ऊचुः । सूत सूत महाभाग वेदविद्याविशारद । यथा प्रदक्षिणा कार्या मनुजैर्विधिपूर्वकम् २५ सूत उवाच । एवमेव पुरा पृष्टो भगवान् शिवया शिवः । तद्ब्रवीमि मुनिश्रेष्ठाः शृण्वंतु विधिमुत्तमम् २६ देव्युवाच । भगवन् देवदेवेश प्रदक्षिणविधिं वद कृतेनये नमनुजो निष्पापः पुण्यवान्भवेत् २७ श्रीमहादेव उवाच । श्रावणे माधवे ऊर्जे माघमासे व्रतं चरेत् । लिंगप्रदक्षिणाः कुर्यात्सुंदरि विधिपूर्वकाः २८ श्रीदेव्युवाच । लिंगप्रदक्षिणे देव नियमाः के भवंति तान् । वदस्वेति तदाशेषविश्वनाथ कृपानिधे २९ शिव उवाच । प्रतिग्रहं परान्नं च परदाराभिभाषणम् । परस्वग्रहणं स्नेहादसद्वार्तां च वर्जयेत् ३० असतां पापिनां संगं न कुर्यात्प्रयतो नरः । असत्समागमात्सर्वं निष्फलं जायते नृणाम् ३१ मम द्रोहपरैः साकं न व्रजेद्विष्णुनिंदकैः । परापवादं नो कुर्यात्परद्रोहं न कारयेत् ३२ निंदां च गुरुशास्त्राणां शिवधर्मरतात्मनाम् । तीर्थलिंगतपोनिंदां न कुर्यात्तु कदाचन ३३ ब्रह्महत्यादिपापानां प्रायश्चित्तं न चापरम् । शिवलिंगे महादेवि ये कुर्वंति प्रदक्षिणाः ३४ अनंतकोटिगुणितं भवेत्सर्वं न संशयः । शिवापतेः प्रत्यहं च पूजा कार्या प्रयत्नतः ३५ उमापतेः पूजनेन सिद्धिर्भवति नान्यथा । एवं यः कुरुते मर्त्यो व्रतमेतत्सुदुर्लभम् ३६ यं यं चिंतयते कामं तं तं प्राप्नोत्यसंशयम् । लक्षं समाप्य पश्चात्तु कुर्यादुद्यापनं व्रती ३७ एवं संपाद्य विधिवच्छुभे मासे शुभे दिने ॥ देव्युवाच । व्रतस्योद्यापनं कर्म कथं कार्यं च मानवैः । को विधिः कानि द्रव्याणि कथयस्व मम प्रभो ३८ ईश्वर उवाच । शृणु भद्रे प्रयत्नेन लोकानां हितकाम्यया । उद्यापनविधिं चैव कथयामि तवाग्रतः ३९ यथा संजायते वित्तं भक्तिः श्रद्धासमन्विता । स एव व्रतकालश्च

यतोऽनित्य हि जीवितम् ४० कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जित । संपाद्य सर्वसंभारान्मंडपं तत्र कारयेत् ४१ प्रातः स्नात्वा शुचिर्भूत्वा कुर्यादुद्यापनं बुधः । मासतिथ्यादि संकल्प्य कुर्यात्स्वस्त्ययनं ततः ४२ पुण्याहवाचनं कार्यमाचार्यवरणं ततः । ततो ब्राह्मणमाहूय वेदवेदांगपारगम् ४३ आचार्यं वरयेत्पूर्वमृत्विगेकादशैः सह । देवागारे तथा गोष्ठे शुद्धे वा स्वीयमंदिरे ४४ पुष्पमंडपिकां कृत्वा पट्टकूलादिवेष्टिताम् । तन्मध्ये लिंगतोभद्रं रचयेल्लक्षणान्वितम् ४५ अव्रणं सजलं कुंभं तस्योपरि तु विन्यसेत् । सौवर्णं राजतं ताम्रं मृन्मयं वापि कारयेत् ४६ तस्योपरि न्यसेत्पात्रं ताम्रं वैणवमृन्मयम् । कुंभोपरि न्यसेद्देवमुमया सहितं शिवम् ४७ उमामाहेश्वरीं मूर्तिं पूजयेद्वृषभेस्थिताम् । ब्रह्माणं दक्षिणे भागे सावित्र्या सह सुप्रभम् ४८ कौबेर्यां स्थापयेद्विष्णुं लक्ष्म्यासह गरुत्मता । महेशं स्थापयेन्मध्ये शिवारूपसमन्वितम् ४९ ततः पूजां विनिर्वर्त्य महासंभारविस्तरैः ॥ परमान्नं च नैवेद्यं भक्त्या देवाय दापयेत् ५० उपोष्य जागरं कुर्याद्रात्रौ सत्कथया मुदा । ततः प्रभातसमये स्नात्वा शुद्धे जले शुचिः ५१ मृदा च स्थंडिलं कार्यं कुर्यादग्निमुखं ततः । प्रदक्षिणादशांशेन हवनं कारयेद्व्रती ५२ हवनस्य दशांशेन तर्पणं कारयेत्ततः । तर्पणस्य दशांशेन मार्जनं कारयेत्ततः ५३ प्रदक्षिणाशतांशेन ब्राह्मणान्भोजयेत्सुधीः । स्वशाखोक्तेन विधिना होमयेद्रुद्रमंत्रकैः ५४ मूलमंत्रेण गायत्र्या शंभोर्नामसहस्रकम् । पलाशस्य समिद्भिश्च यवव्रीहितिलाज्यकैः ५५ पूर्णाहुतिं ततो दद्यात्कृत्वा स्विष्टकृदादिकम् । होमांते च गुरुं पूज्य सपत्नीकं समाहितः ५६ प्रतिमां कुंभसहितामाचार्यायनिवेदयेत् ५७ शंभो प्रसीद देवेश सर्वलोकेश्वर प्रभो । तवरूपप्रदानेन मम संतु मनोरथाः ५८ यद्रूपया देवदेवेश मया व्रतमिदं कृतम् ॥ न्यूनं चाथ क्रियाहीनं परिपूर्णं तदस्तु मे ५९ अनेनैव विधानेन य इदं व्रतमाच

रेत् । यं यं चिंतयते कामं तं तं प्राप्नोति मानवः ६० इहलोके सुखी भूत्वा भुक्त्वा भोगान् यथेप्सितान् । अंते विमानमारुह्य शिवलोकं स गच्छति ६१ ॥ इति श्रीस्कंदपु० शिवलक्षप्रदक्षिणाव्रतोद्यापनं सं० ॥ ॥ अथाश्वत्थप्रदक्षिणाविधिः ॥ ऋषिरुवाच । भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद । स्त्रीणां पुत्रविहीनानां नराणां सुखसंपदाम् १ उपायं चैव मे ब्रूहि सुतसिद्धिः कथं भवेत् ॥ अथर्वण उवाच । पुरा ब्रह्मादयो देवाः सर्वे विष्णुं समाश्रिताः २ अपृच्छन्देवदेवेशं राक्षसैः पीडिता वयम् । कथं भवेच्च तच्छांतिरस्माकं वद निश्चितम् ३ ऋषय ऊचुः । पलाशत्वं कथं प्राप्तं ब्रह्मणा वै महात्मना । वटत्वं च शिवो वापि विष्णुर्वै पिप्पलोऽभवत् ४ वालखिल्या ऊचुः । ब्रह्मणा तु पुरा सृष्टाः सर्वे देवाः सवासवाः । मिलित्वा सर्व एवैते ब्रह्माणं वाक्यमब्रुवन् ५ ब्रह्मन् सर्वाधिको रुद्रः सर्वदेवेषु पठ्यते । कर्तुं तद्दर्शनं देव गच्छामो भवतासह ६ इतींद्रादिवचः श्रुत्वा सर्वदेवपुरोगमः । ब्रह्मा कैलासमगमत्सर्वदेवगणैर्वृतः ७ शिवद्वारं समासाद्य देवाः सर्वेपि संस्थिताः । न दृश्यते द्वारपालः शिवश्चाभ्यंतरे स्थितः ८ गंतव्यं वा न गंतव्यमस्माभिः शिवसन्निधौ । परावृत्याथवा स्वस्मिन्स्थाने गंतव्यमेव वा ९ एवं चिंतयमानैस्तैर्नारदो मुनिसत्तमः । पुरो दृष्टो देववृंदैस्तमूचुः प्रणताश्च ते १० देवा ऊचुः । मुने वेदविदां श्रेष्ठ ब्रूहि प्रश्नं सुशोभनम् । किं करोति महादेवो गंतव्यं वा न वांतरे ११ नारद उवाच । चंद्रनाशदशायां तु देवाः संप्रस्थिता गृहात् । तस्मात्कश्चिन्महाविघ्नो भवतां संभविष्यति १२ किं करोति शिवश्चेति प्रश्नोद्यंते तथा विधोः । तस्मात्संभोगकार्येऽयं वर्तते त्रिपुरांतकः १३ इंद्र उवाच । सर्वेषामेव दुःखानां नाशकर्ता दिवस्पतिः । मय्यागते कथं नाशो देवतानां भविष्यति १४ बिभीषणाय देवानां वल्गनां चाकरोन्मुनिः । इतींद्रस्य वचः श्रुत्वा व्याकुलो

ऽभून्मुनिस्तदा १५ कथ मद्वचनं सत्यं भविष्यत्यथ वज्रिणि । अथ मद्वचनं सत्य यदि शीघ्र भविष्यति १६ लक्ष्मीनारायणमुद्दे क-
रिष्ये व्रतमुत्तमम् । एवं संचिंत्य मानसा तूष्णीं भूत्वा मुनीश्वरः १७ इन्द्रो विचारयन्देवैः किमिदानीं विधीयताम् । ततो वज्री सु
वाचेद वह्ने मद्वचन शृणु १८ गृहीत्वा विप्ररूप त्व शिवस्याभ्यतर विश । यदि प्रसंगोस्त्यस्माकं तदा वार्तां निवेदय १९ यदि नास्ति
प्रसंगश्वेधाचकत्वेन याहि च । अवध्यत्वाद्गताभ्यत्वाद्भिक्षुकत्वेन तद्व्रज २० इति देवेंद्रवचनं श्रुत्वा वह्निस्तथा ऽकरोत् । अभ्यंतरे ददर्शा-
थ शिवयासहसंगतम् २१ शिवयापि च सो दृष्टो लज्जिता भोगमत्यजत् । कोसि कोसीति संपृष्टो भिक्षुकोहं क्षुधायुतः २२ वृद्धोस्म्य-
रोगोस्मि दीनोस्मि भोजनं मम दीयताम् । तेनाश्वष्टमिति ज्ञात्वा पार्वती तमभोजयत् २३ सोपि भुक्त्वा समाचार वक्तुं समस्थितो बहिः ।
तस्मिन्नेव क्षणे गुहो नारदः पार्वतीं ययौ २४ शिरो निधाय पार्वत्याः पदयो स रुरोद ह ॥ पार्वत्युवाच । अहो बालक किं जात त-
च्छीघ्रमभिधीयताम् २५ करोमि निष्कृतिं तस्य साध्यासाध्यस्य नान्यथा ॥ नारद उवाच । मातर्वक्तुं न शक्नोमि ह्युपहासस्य कारणम्
२६ कृत तवेंद्रादिदेवैस्तथा कोन्यः करिष्यति । इति तस्य वचः श्रुत्वा पुनः पुनरपृच्छत २७ मुद्रयित्वा ततो नेत्रे कराभ्या स मुनीश्व
र । उवाच वचन नीचमुखोसौ गद्गदाक्षरम् २८ नारद उवाच । इन्द्रोयं युवयोर्भोग देवताभ्यो ह्यदर्शयत् । युवयोश्च कृता निंदा तां
श्रुत्वा दुःखितो भृशम् २९ भोगविच्छित्तये वह्निः प्रेपितो द्विजरूपकः । अथवा किमनेनापि कथनेन मर्मांतिके ३० जगन्मातासि देवि
त्व का ते स्यादुपहासता । इति तस्य वचः श्रुत्वा पार्वती क्षुब्धमानसा ३१ स्फुरदोष्ठा रक्तनेत्रा द्रष्टा तां नारदो ययौ । देवान्प्रति सु
वाचेद सभोगाद्विरतो हरः ३२ आगम्यतां दर्शनार्थं दूरतोसौ विलोकितः । वह्नेरेव वचः श्रुत्वा देवेंद्रः सगणो ययौ ३३ प्रणिपत्य

महादेवं कृतांजलिपुटोऽभवत् । दृष्ट्वा तथाविधं शक्रं पार्वती वाक्यमब्रवीत् ३४ अहल्याजार दुष्टात्मन् सहस्रभग वासव । उपहासः कृतः ।।
मेध्य फलं तत्समवाप्नुहि ३५ यावंत्यः संति देवानां स्वजना सर्व एव ते । अजानतः स्त्रीसुखानि शाखिनः संतु सस्त्रियः ३६ इति देवी-
वचः श्रुत्वा कंपिताः सर्वदेवताः । ब्रह्मविष्णुमहेशाद्यास्तुष्टुवुर्जगदंबिकाम् ३७ ततो देवीप्रसन्ना ऽभूद्देवेंद्रं वाक्यमब्रवीत् । देवा मद्वचनं मि-
थ्या त्रिकालेपि न जायते ३८ तस्मादेकांशतो वृक्षा यूयं सर्वे भवंतु वै । इति देव्या वचः श्रुत्वा जाता देवास्तु पादपाः ३९ अश्वत्थरूपी भग-
वान्वटरूपी सदाशिवः । पलाशोऽभूद्विधाता च वज्रः[1] शक्रो बभूव ह ४० इंद्राणी सालता जाता देवनार्यो लतास्तथा । मालत्याद्याः पुष्पवृ-
क्षा उर्वश्याद्यप्सरोऽभवन् ४१ तस्मात्सर्वप्रयत्नेन सर्वदाश्वत्थमर्चयेत् । नारी वा पुरुषो वापि लक्षं कुर्यात्प्रदक्षिणाः ४२ लक्ष्मीनारायणं पूज्य
मंदवारे च तत्तले । दंपती भोजयेल्लक्ष्मीनारायणस्वरूपिणौ ४३ भावयित्वा सपत्नीकान् पश्चाद्भुंजीत वाग्यता । वंध्यादिर्लभते पुत्रमित-
रासां तु का कथा ४४ मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे । अग्रतःशिवरूपायपिप्पलायनमोस्तुते ४५ विष्णोश्च प्रतिमाभावे कीर्तनं
जागरादिकम् । अश्वत्थमूले कर्तव्यं विष्णोराराधनं परम् ४६ सदा सन्निहितो विष्णुर्द्दषस्तु ब्राह्मणे तथा । विष्णुर्यदुक्तवांस्तेभ्यस्तद्व्रतं त
वदाम्यहम् ४७ विष्णुरुवाच । अहमश्वत्थरूपेण शालग्रामशिलासु च । तस्मात्सर्वप्रयत्नेन कुरुध्व तरुसेवनम् ४८ तेन सर्वाणि भद्राणि
भविष्यंति न संशयः । अश्वत्थपूजास्पर्शौ न कर्तव्या शनिवासरे ४९ अन्यवारेश्वत्थसंगाद्दरिद्री जायते नरः । न दानैश्च तपोभिश्च नाध्व-
रैर्भूरिदक्षिणैः ५० अश्वत्थसेवनादन्यत्कलौ नास्त्यपरा क्रिया ५१ तद्विधानं निमित्तानि संख्याकृतिश्च पूजनम् । हवनं तर्पणं विप्रभोजनं

१ वज्रः स्नुहीवृक्षः ( निवडुंग इति भाषया प्रसिद्धः ) ।

नियमं तथा ५२ व्रताधिकारिणस्तत्र विधानं च विशेषत ५३ एतत्सर्वं पिप्पलादीन् वक्ष्यामि तव सुव्रत । दारुणो विविधोत्पातो दिव्यभौमांतरिक्षजः ५४ परचक्रभयं देशविप्लवो देशविग्रहः । दुःस्वप्नद दुर्निमित्त संग्रामोद्भुतदर्शनः ५५ मारीभय राजभय तथा चोराग्निजं भयम् । क्षयापस्मारकुष्ठाद्याः प्रमेहो विषमज्वरः ५६ उदरं मूत्रकृच्छ्रं च ग्रहग्रस्तस्तथैव च । अन्ये च रक्तरोगा ये व्रणरोगास्तथैव च ५७ एतेषां च विनाशाय कुर्यादश्वत्थसेवनम् । प्रातरुत्थाय नद्यादौ स्नात्वा सम्यक्कृतक्रियः ५८ अश्वत्थदेशमाश्रित्य गोमयेनोपलेपयेत् । तमश्वत्थमलङ्कृत्य सूत्रेण गैरिकादिना ५९ पूजाद्रव्याणि संपाद्य पुण्याह वाचयेत्तथा । आचार्यमृत्विजैः साकं कृत्वा पूजां समाचरेत् ६० ध्यानमावाहन चैव पाद्यमाचमन तथा । तथैव पिप्पलतरु तथा नारायणं प्रभुम् ६१ श्वेतगंधाक्षतैः पुष्पैर्धूपदीपैर्निवेदनैः । अर्चयेत्पुरुषसूक्तेन तथैव ध्यानपूर्वकम् ६२ तेनैव हवन कुर्यात्तर्पणं वा नमस्क्रियाम् । श्वेतवर्णं सलक्ष्मीक चिंतयेत्पुरुषोत्तमम् ६३ इति ध्यात्वावाहनाद्यैरुपचारैश्च षोडशै ६४ तत्राश्वत्थमभिमन्त्र्य । आराच्छत्त्वस्याग्निकांतःपातित्वादग्निऋषि वनस्पतिर्देवता अनुष्टुप्छंदः । वनस्पत्यभिमन्त्रणे विनियोगः ॥ ॐ आरात्तेअग्निरस्त्वाचआरात्परशुरस्तुते । निवातेत्वाभिवर्षतुस्वस्तितेस्तुवनस्पते ॥ अक्षिस्पद भुजस्पद दुःस्वप्नं दुर्विचिंतितम् । शत्रूणां च समुत्पन्नमश्वस्थ शमयस्व मे ६५ तत प्रदक्षिणाः कुर्यात्तत्सर्वं सफल भवेत् । लक्षमेकं द्विलक्षं वा त्रिचतुःपचलक्षकम् ६६ कार्यस्य गौरव ज्ञात्वा द्वादशांत समाचरेत् । ब्रह्मचारी हविष्याशी अधःशायी जितेंद्रियः ६७ मौनी ध्यानपरो भूत्वा पिप्पलस्य स्तुतिं पठेत् । विष्णोर्नामसहस्रं च पौरुषं वैष्णवं तथा ६८ एव संपाद्य विधिवच्छुभे मासे शुभे दिने । प्रातः स्नात्वा शुचिर्भूत्वा कुर्यादुद्यापनं बुधः ६९ गणेशपूजनं स्वस्ति वाच्य नांदीं च कारयेत् । आचार्यं वरयेत्पश्चात्सर्वलक्षणसंयुतम् ७० देवागारे

तथा गोष्ठे चाश्वत्थे स्वीयमंदिरे । पुष्पमंडपिकां कृत्वा पट्टकूलादिवेष्टिताम् ७१ तन्मध्ये सर्वतोभद्रं रचयेल्लक्षणान्वितम् । तन्मध्ये स्थापयेत्कुंभं सजलं वस्त्रसंयुतम् ७२ तस्योपरि न्यसेत्पात्रं ताम्रं मृन्मयवैणवम् । अष्टपत्रान्वितं पद्मं कर्णिकाभिः समन्वितम् ७३ पंचकृष्णकलादूर्ध्वं सुवर्णपरिनिर्मितम् । लक्ष्मीनारायणीं मूर्तिमश्वत्थेन समन्विताम् ७४ स्थापयेत्पद्ममध्ये तु ब्रह्माद्यावाहनं ततः । ततः पूजां विनिर्वर्त्य महासंभारविस्तरैः ७५ परमान्नं च नैवेद्यं भक्त्या देवाय दापयेत् । उपोष्य जागरं कुर्याद्रात्रौ सत्कथया मुदा ७६ ततः प्रभातसमये स्नात्वा शुद्धे जले शुचिः । मृदा च स्थंडिलं कार्यं कुर्यादग्निमुखं ततः ७७ कृतलक्षदशांशेन हवनं कारयेद्व्रती । हवनस्य दशांशेन तर्पणं कारयेत्ततः ७८ पुरुषसूक्तेन जुहुयात्तिलाज्यं पायसं समित् । स्वशाखोक्तेन विधिना जुहुयाद्विष्णुमंत्रकैः ७९ उक्तैः षोडशभिर्मंत्रैः कुर्याद्धोमं यथाविधि । हवनस्य दशांशेन मिष्टान्नं भोजयेद्द्विजान् ८० ब्राह्मणानां स्वयं कुर्याद्यथोक्तनियमं तथा । असामर्थ्ये स्वयं कर्तुं सर्वमन्येन कारयेत् ८१ उक्तप्रमाणादधिकं पलं दशगुणं भवेत् । ततश्चतुर्गुणं पीठं रजतं चतुरस्रकम् ८२ उपरिद्रोणमर्द्धं वा तिलान् परिविनिक्षिपेत् । श्वेतवस्त्रेण संछाद्य पूर्ववत्पूजयेत्तरुम् ८३ दरिद्राय सुशीलाय श्रोत्रियाय कुटुंबिने । उदङ्मुखाय विप्राय स्वयं पूर्वमुखस्थितः ८४ सुवर्णवृक्षराजं च मंत्रेण प्रतिपादयेत् ॥ इहजन्मनि वाऽन्यस्मिन्बाल्ययौवनवार्द्धके। मनोवाक्कायजैर्दोषैर्मुच्यते नात्र संशयः ८५ आचार्येणाथ विप्रेण सर्वं यत्नेन कारयेत् ८६ एवं कृत्वा व्रती सम्यग्व्रतस्य परिपूर्तये । हेमाश्वत्थतरुं दद्याच्छुक्लां गां च पयस्विनीम् ८७ पिप्पलो वृक्षराजेंद्र ह्यग्निगर्भस्त्वमेव हि । प्रभुर्वनस्पतीनां च सर्वजन्मनि यत्कृतम् ८८ अघौघं नाशय क्षिप्रं तव रूपप्रदानतः । अमुं तरुं गृहाण त्वं विष्णुरूप द्विजोत्तम। स्वीकृत्य दुष्करं घोरं क्षिप्रं शांतिं प्रयच्छ मे ८९ एवं व्रतं यः कुरुते पुत्रपौत्रप-

वर्द्धकम् । मुक्त्वा भोगान् स विपुलान्विष्णुसायुज्यमाप्नुयात् ९० ॥ इति श्रीभविष्यपु० अश्वत्थप्रदक्षिणाव्रतकथोद्यापन स० ॥ ॥ अथ विष्णुलक्षप्रदक्षिणाविधिः ॥ युधिष्ठिर उवाच । भगवन् देवदेवेश सर्वविद्याविशारद । किंचिद्विज्ञप्तुमिच्छामि वक्तुमर्हस्यशेषतः ॥ अज्ञानादथवा ज्ञानात्प्रमादाच्च कृतानि भोः । दायादवधपूर्वाणि कथं यांति क्षयं विभो । पापानि सुबहून्यत्र वदस्व मुनिसत्तम ॥ व्यास उवाच । लक्षप्रदक्षिणावर्त्तं नारदोक्तं विधिं शृणु ॥ नारद उवाच । ये लोकाः पापसंयुक्ता धर्माधर्मविवर्जिताः । व्रतहीना व्रतभ्रष्टा दुराचाराश्च कुत्सिताः ॥ अग्निकार्येण रहिताः शास्त्रधर्मबहिष्कृताः । नास्तिका भिन्नमर्यादा हेतुकाः कितवाः शठाः ॥ मातापित्रोर्विरुद्धाश्च गुरुमित्रद्रोहकाः । एतेषां निष्कृतिं तात कृपया वद मेऽधुना ॥ अज्ञानां तु हि जीवानां साधूनां त्वं सुहृत्स्मृतः । अनाथनाथ देवेश तद्रूपास्तादृशा जनाः ॥ एतच्छ्रुत्वा ततो ब्रह्मा हर्षोत्फुल्लविलोचनः । साधु साध्विति देवेशो वचनं चेदमब्रवीत् । ब्रह्मोवाच । किं वर्णयामि साधूनां माहात्म्यं च भवादृशाम् । हरेर्लोकैकनाथस्य करुणा मुक्तिदायिनी ॥ ब्रह्महत्यादिपापेषु संकलीकरणेषु च । जातिभ्रंशकरेष्वेकमभक्ष्यभक्षणेषु च ॥ हरिणा निर्मितं पूर्वं व्रतं लक्षप्रदक्षिणम् । सर्वेषामपि पापानां मूलादुत्कृंतनं परम् ॥ पापांधकारनाशाय पापेंधनदवानलम् । नारायणे जगन्नाथे योगनिद्रामुपेयुषि ॥ प्रारभेत व्रतमिदं कुर्याद्यावत्प्रबोधिनी । द्वादश्यां वा चतुर्दश्यां पौर्णमास्यामथापि वा । स्नानं कृत्वा नदीतोये नित्यकर्म समाप्य च । पश्चात्प्रदक्षिणावर्त्तं कर्तव्यो हरिरीश्वरः ॥ अनंतमव्ययं विष्णु लक्ष्मीनारायणं हरिम् । जगदीश नमस्तुभ्यं प्रदक्षिणपदेपदे ॥ इति मंत्रं समुच्चार्य कुर्यादावर्तमादरात् । प्रदक्षिणाः प्रकर्तव्या दिवसे दिवसे विभोः ॥ यावत्प्रदक्षिणावर्तस्तावन्मणिं विनिक्षिपेत् । आवाहनादितः सम्यग्धूपदीपादिभिस्तथा ॥ नैवेद्यं पायसं मोक्षं तां-

बूलं दक्षिणान्वितम् ॥ भोजयेच्च यथाशक्त्या विप्रान् सर्वफलप्रदान् । सर्वपापविनाशार्थं नारीभिः पुरुषैरपि ॥ प्रदक्षिणाः प्रकर्तव्या यावद्बोधिनी भवेत् । लक्षप्रदक्षिणाः कार्या अंते उद्यापनं चरेत् ॥ उपवासः प्रकर्तव्यो अधिवासनवासरे । सौवर्णीं प्रतिमां कृत्वा विष्णोरमिततेजसः । गरुडेन समायुक्तां स्थापयेत्कलशोपरि ॥ आचार्यं वरयित्वा तु ऋत्विजश्च निमंत्रयेत् । होमं च विष्णुगायत्र्या तद्दशांशेन वाग्यतः ॥ पायसं जुहुयात्तत्र अयुतं तिलसर्पिषा । हुत्वा स्विष्टकृदाज्यं च दद्याद्दानानि सर्वशः ॥ कार्पासं लवणं चैव गामेकां चपयस्विनीम् । आचार्याय सपीठां तां प्रतिमां च निवेदयेत् ॥ ब्राह्मणान्भोजयेत्पश्चात्पंचविंशतिसंख्यकान् । इति तस्य वचः श्रुत्वा नारदस्तु तथाऽकरोत् । धर्मेण च कृतं सर्वं मुनेश्च वदनाद्व्रतम् ॥ इति श्रीभविष्ये विष्णुलक्षप्रदक्षिणाव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ तुलसीलक्षप्रदक्षिणाविधिः ॥ नारद उवाच । रोप्यते येन विधिना तुलसी पूज्यते सदा । तदाचक्ष्व महादेव ममानुग्रहकारणात् ॥ महादेव उवाच । शुभे पक्षे शुभे वारे शुभ ऋक्षे शुभोदये । सर्वथा केशवार्थं तु रोपयेत्तुलसीं मुने ॥ गृहस्यांगणमध्ये वा गृहस्योपवनेऽपि वा । शुचौ देशे च तुलसीमर्चयेद्बुद्धिमान्नरः ॥ मूले च वेदिकां कुर्यादालवालसमन्विताम् । प्रातःसंध्याविधिं कृत्वा स्नानपूर्वं दिने दिने ॥ गायत्र्याष्टशतं जप्त्वा तुलसीं पूजयेत्ततः । प्राङ्मुखोदङ्मुखो वापि स्थित्वा प्रयतमानसः । ध्यायेच्च तुलसीं देवीं श्यामां कमललोचनाम् । प्रसन्नां पद्मवदनां वराभयचतुर्भुजाम् ॥ किरीटहारकेयूरकुंडलादिविभूषणाम् । धवलांशुकसंयुक्तां पद्मासननिषेविताम् । ध्यानम् ॥ देवि त्रैलोक्यजननि सर्वलोकैकपावनि । आगच्छ भगवत्यत्र प्रसीद तुलसि प्रिये । आवाहनम् ॥ सर्वदेवमये देवि सर्वदा विष्णुवल्लभे । देवि स्वर्गमयं दिव्यं गृहाणासनमव्यये । आसनम् ॥ सर्वदेवमये देवि सर्वदेवनमस्कृते । दत्तं पाद्यं गृहाणेदं तुलसि त्वं प्रसीद मे । पाद्यम् ॥

सर्वतीर्थमयाकारे सर्वागमनिषेविते । इदमर्घ्यं गृहाण त्वं देवि दैत्यांतकप्रिये । अर्घ्यम् ॥ सर्वलोकस्य रक्षार्थं सदा सन्निधिकारिणि । गृहाण तुलसि प्रीत्या इदमाचमनीयकम् । आचमनीयम् ॥ गंगादिसर्वतीर्थेभ्यो मयानीतं शुभं जलम् । स्नानार्थं तुलसि स्वच्छं प्रीत्या तत्प्रतिगृह्यताम् । स्नानम् ॥ क्षीरोदमथनोद्भूतचंद्रलक्ष्मीसहोदरे । गृह्यतां परिधानार्थमिदं क्षौमांबरं शुभे । वस्त्रम् ॥ कञ्चुकीम् ॥ आचमनीयम् ॥ अर्घं पुष्पं तथा धूपं दीपं नैवेद्यमेव च तांबूलं दक्षिणां चैव मन्त्रपुष्पं ततश्चरेत् ॥ प्रसीद मम देवेश कृपया परया मुदा । अभीष्टफलसिद्धिं च कुरु मे माधवप्रिये ॥ देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः । नमो नमस्ते तुलसि पापं हर हरिप्रिये । तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये । केशवार्थं विचिन्वामि वरदा भव शोभने। इति प्रार्थना ॥ इत्येवमर्चयेन्नित्यं प्रातरेव शुचिर्नरः । मध्याह्ने वाथ सायाह्ने पूजयेत्प्रयतो नरः ।वैशाखे कार्तिके माघे चातुर्मास्ये विशेषतः । पूजयेत्तुलसीं देवीमपूपफलपायसैः ॥ अन्यद्गुह्यतमं किंचित्कथयामि तवाग्रतः । प्रदक्षिणाफलं चैव नमस्कारं तथैव च ॥ एवं कुर्याद्वृद्धिकामः सर्वकामःसदैव तु । पंचाशद्भिर्भवेल्लक्ष्मीः शतैश्च विजयः स्मृतः ॥ विद्यार्थी तु सहस्रं वै प्रयुते सर्वसंपदः । लक्षे तु सर्वसिद्धिः स्यान्नात्र कार्या विचारणा ॥ यं यं चिंतयते कामं तं तं प्राप्नोति सर्वशः । भुक्त्वा यथेप्सितान्भोगानंते मोक्षमवाप्नुयात् ॥ इदं फलं कोटियुतं भवेदत्र न संशयः । लक्षसंख्याश्च कर्तव्यास्तुलस्याश्च प्रदक्षिणाः ॥ तदा उद्यापनं कुर्यात्तेन सम्यक्फलं भवेत् । उद्यापनं विना विप्र फलं नैव भवेत्कचित् ॥ तस्मात्सर्वप्रयत्नेन उद्यापनविधिं शृणु । सौवर्णीं प्रतिमां विष्णोः शंखचक्रगदान्विताम् ॥ तुलस्यायतनं चैव कुर्यात्सौवर्णनिर्मितम् । हेमादिनिर्मिते कुंभे पूर्णपात्रसमन्विते । पुण्योदकैः पंचरत्नैः कुशदूर्वाप्रपूरिते ॥ तस्योपरि न्यसेद्विष्णुं लक्ष्म्या च तुलसीसमम् । पूजां पुरुषसूक्तेन कुर्यात्सर्वप्रयत्नतः ॥

उपचारैः षोडशभिर्भक्तिभावसमन्वितः । रात्रौ जागरणं कुर्यात्पौराणैर्वेदपाठकैः ॥ वैष्णवैश्च प्रबंधैश्च नृत्यैर्वाद्यैस्तथैव च । ततः प्रातः समुत्थाय होमं कुर्याद्विधानतः ॥ वैष्णवेन तु मंत्रेण तिलाज्येन विशेषतः । पायसेन घृताक्तेन अष्टोत्तरसहस्रकम् ॥ आचार्याय सवत्सां गां दक्षिणावस्त्रसंयुताम् । ब्राह्मणान्भोजयेत्पश्चात्सहस्रं वाथ शक्तितः ॥ शतं वा भोजयेद्धीमानष्टाविंशति वा पुनः । तेभ्योपि दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत् ॥ एवं यः कुरुते मर्त्यो तस्य पुण्यफलं शृणु ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च । तत्पुण्यं लभते मर्त्यो नात्र कार्या विचारणा ॥ इदं रहस्यं परमं न वाच्यं यस्य कस्यचित् । विष्णुप्रीतिकरं यस्मात्तस्मात्सर्वव्रताधिकम् ॥ तुलसीप्रदक्षिणानां तु माहात्म्यं शृणुयान्नरः । सकृद्वा पठते यो वै स गच्छेद्वैष्णवं पदम् ॥ इति श्रीभविष्यपु० लक्षतुलसीप्रदक्षिणोद्यापनं संपूर्णम् ॥ ॥ अथाग्निगोब्राह्मणहनुमल्लक्षप्रदक्षिणाविधिः ॥ युधिष्ठिर उवाच । भगवन् ज्ञानिनां श्रेष्ठ सर्वविद्याविशारद । किञ्चिद्विज्ञप्तुमिच्छामि वक्तुमर्हस्यशेषतः ॥ अज्ञानादथवा ज्ञानात्प्रमादाद्वा कृतं हि यत् । पापानि च बहून्यत्र विलयं यांति तद्वद ॥ व्यास उवाच । लक्षप्रदक्षिणाः कार्या ब्राह्मणेऽग्नौ गवे तथा ॥ नारद उवाच । ये च पापरता नित्यं धर्माधर्मविवर्जिताः । व्रतहीना दुराचारा ज्ञानहीनाश्च जंतवः ॥ तेषां पापविनाशार्थं प्रायश्चित्तं कथं भवेत् ॥ ब्रह्मोवाच । किं वर्णयामि साधूनां माहात्म्यं च भवादृशाम् । साधु साधु च विप्रेंद्र वच्मि ते व्रतमुत्तमम् ॥ ब्रह्महत्यादिपापेषु संकलीकरणेषु च । जातिभ्रंशकरे वापि अभक्ष्यभक्षणे तथा ॥ विष्णुना निर्मितं पूर्वं व्रतं लक्षप्रदक्षिणम् । सर्वेषामपि पापानां नाशकं परमं शुभम् ॥ आषाढे शुक्लपक्षे तु एकादश्यां विशेषतः । द्वादश्यां पौर्णमास्यां वा प्रारभेद्व्रतमुत्तमम् ॥ देशकालौ तु संकीर्त्य नत्वा गुरुविनायकौ । लक्षप्रदक्षिणाः कार्यास्त्रीनर्भीश्च शुचिव्रत ॥ जितेंद्रियो जितप्राणो मुखेन मनुमुच्चरेत् ।

नमस्तेगार्हपत्यायनमस्तेदक्षिणाग्नये । नम आहवनीयाय महावेद्यैनमोनमः ॥ गवां प्रदक्षिणा कार्या लक्षसंख्या यथाविधि । पूर्वं पूज्य च गामेकां दत्त्वा नैवेद्यमुत्तमम् । पश्चात्प्रदक्षिणा कार्या नत्वा तां च पुनः पुनः ॥ गवामंगेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्तस्मान्छिवं मेस्यादिह लोके परत्र च ॥ एवं प्रदक्षिणा कृत्वा सर्वपापैः प्रमुच्यते । कर्मनिष्ठं शुचिं विप्रं पूजयेद्विविधबुधः ॥ ततः प्रदक्षिणा कार्या यावल्लक्षं भवेद्धृतम् ॥ भूमिदेवनमस्तुभ्यनमस्तेब्रह्मरूपिणे । पूजितोदेवदैत्यैस्त्वमतःशांतिंप्रयच्छमे ॥ एव हनूमते कार्या भूतप्रेतविनाशिने । षोडशैरुपचारैश्च पूजयेद्वायुनंदनम् ॥ ततः प्रदक्षिणाः कार्या आत्मकार्यार्थसिद्धये । मंत्रः—मनोजवमारुततुल्यवेगं जितेंद्रियबुद्धिमतांवरिष्ठम् । वातात्मजवानरयूथमुख्यंश्रीरामदूतशरणंप्रपद्ये ॥ एव प्रदक्षिणावर्तीं कुर्याद्देवं प्रयत्नतः । भूतप्रेतपिशाचाद्या विनश्यंति न संशयः ॥ आदित्यादिग्रहाः सर्वे शांतिं यांति शिवाज्ञया । उद्यापन च सर्वासां कुर्यात्पूर्णफलाप्तये ॥ उद्यापनविधानादौ पुण्याहं वाचयेत्ततः । आचार्यं वरयित्वा च प्रतिमाः स्वर्णसंभवाः ॥ अव्रण कलश पूर्णं स्थापयेन्मंडले शुभे । विरच्य लिंगतोभद्रं पूजयेद्देवमंजसा ॥ पायसं जुहुयाच्चन तत्तन्मंत्रैर्विचक्षणाः । अष्टोत्तरसहस्र तु प्रायश्चित्तं चरेच्छुभम् ॥ भद्रक दक्षिणायुक्तमाचार्याय निवेदयेत् । ब्राह्मणान्भोजयेच्छक्त्या वित्तशाठ्यविवर्जित । ये कुर्वंति व्रतमिद पापमुक्ता भवंति ते । भुक्त्वा यथेप्सितान्भोगानते सायुज्यमाप्नुयात् ॥ इति श्रीभविष्यपु० अग्निगोब्राह्मणहनुमल्लक्षप्रदक्षिणोद्यापनं संपूर्णम् ॥ ॥ अथ लक्षबिल्वपत्रपूजा ॥ व्यास उवाच । पूर्वजन्मनि व्याघोसौ क आसीद्राक्षसोपि स । किमर्थं कर्म कृतवान् कथ पुत्रः समर्पितः १ किं शील कः समाचारस्तन्ममाचक्ष्व नाभिज । किं नाम स कथं प्राप्तः सालोक्य तद्वदस्व मे २ ब्रह्मोवाच । विदर्भदेशे नगरं मोदाशाख्य बभूव ह । विख्यातं त्रिषु लोकेषु कुबेरनगरोपमम् ३ भीमो

नामा भवेद्व्याधो नगरे मांसविक्रयी । परेषां दोषकथने दोषो यद्यपि वर्तते ४ प्रश्ने कृते प्रवक्तव्यं याथातथ्यं न मत्सरात् ॥ ब्रह्मोवाच । स राज्यकार्यं कुरुते स्वयं भुंक्ते वरांगनाः ५ राष्ट्रे शृणोति रामां स यां तां वा सपतिं यथा । बलादानीयते भोक्तुं क्रंदतीं रुदतीमपि ६ वरांगनानां कुरुते वेषं विषयलंपटः । वाचोक्तं कुरुते नारी तस्य दृष्टिपथं गता ७ तामालिंग्य स्वसौ कामी चुंबत्येतां भजत्यपि । परद्रव्याणि गृह्णाति धनानि स बलात्पुनः ८ सोपि तादृग्गुणो मंत्री दुष्टबुद्धिरघे रतः । एवं दुराचाररतां न कन्यां न च मातरम् ९ न वर्जयति संभोगे भगिनीमपि निर्घृणः । न ब्रह्महत्यां मनुते न स्त्रीबालवधं तथा १० एवं पापसमाचारो पापस्य पर्वताविव । आस्तामुभौ दुष्टबुद्धी राजामात्यौ सुदुःसहौ ११ न ब्राह्मणो न संन्यासी तद्गृहे याति भिक्षितुम् । न राष्ट्रे नाम तस्यासद्गृह्णाति प्राकृतोपि च १२ एकदा मृगयार्थं तौ यातौ च गहनं वनम् । हतानि मृगयूथानि पक्षिरूपाण्यनेकशः १३ तानि प्रापय्य नगरे अश्वारूढो स्वयं पुनः । शिवस्य च महास्थानं पथि तौ पश्यतः स्म ह १४ यस्मिन्विराजते मूर्तिः शक्त्या सह शिवस्य च । स्थापिता रामपित्रा सा पुत्रार्थं कुर्वता तपः १५ भक्त्या साक्षात्कृतो यत्र देवदेवो ह्युमापतिः । पंचाक्षरेण मंत्रेण ध्यायता बहुवासरम् १६ दत्त्वा तस्मै वरान्देवो प्रददे वांछितान्यपि । ततो वसिष्ठहस्तेन तेनेयं स्थापिता दृढा १७ उमामहेश्वरीमूर्तिर्वसिष्ठेन पुरा कृता । यस्या दर्शनतो नृणां पुरुषार्थाश्चतुर्विधाः १८ स्मरणात्पूजनाच्चापि सेव्यंते नात्र संशयः । एवं वसिष्ठवाक्येन सापतद्भुवि पप्रथे १९ शिवस्य भजनेनास्य स्मरणेनार्चनेन च । रामलक्ष्मणशत्रुघ्नभरताः सदृशाः सुताः २० जाता लोकेषु विख्याताः सर्वज्ञाः शूरसंमताः । एवं दृष्ट्वा महारम्यं प्रासादं राजनिर्मितम् २१ उमामहेश्वरीं मूर्तिं राजामात्यौ प्रपूजतुः । बिल्वपत्रैश्च संपूज्य अच्छिद्रैः कोमलैः शुभैः २२ प्रदक्षिणीकृत्य गृहमीयतुः क्षणमात्रतः ।

एतदेव पुरे पुण्यं देवाज्जात तयोस्तदा २३ एव पापसमाचारौ राज्य कृत्वाथ ममृतुः । बध्वा पाशैर्यम्यहस्तैर्नीतौ तौ शमनांतिकम् २४
चित्रगुप्तं समाहूय पप्रच्छ स शुभाशुभम् । तेनोक्त नैतयोरस्ति पुण्यलेशो रवे सुत २५ पापानां गणना नास्ति ततो दूतान्ब्रवीद्यम ।
बध्येतां बध्येतामेतौ क्षिप्येतां नरकेषु च २६ मृत्युलोके ततो ह्येतौ नीचयोनिं गतावुभौ । कुंडे वीचिमये पंके सहस्रं परिवत्सरान् २७
एकैकस्मिन्क्रमेणैतौ कुंडे भुक्त्वाघसंचयौ । अनयोः पुण्यलेशोस्ति दूता शृणुत सत्कृतिम् २८ प्रसंगादर्चितो दृष्टो देवो ह्याम्यासुमाप
तिः । तेन पुण्येन न ह्येतौ पापं व्यतितरिष्यतः २९ एवमाकर्ण्य तद्वाक्यं दूतैर्बध्वा हतं हकम् । कुंभीपाके शोणितोदे निरये रौरवेपि तौ ३०
निक्षिप्तौ कालकूटे च क्रमशः शतवत्सरान् । तामिस्रे चांधतामिस्रे पूयशोणितकर्दमे ३१ कंटकेषु क्षतांगौ तौ सततं तप्तवालुके । भ
क्षितौ कृमिभिस्तत्र भृशं शुनिमुखे शुभौ ३२ असिपत्रवने घोरे सततं नीतावुभावपि । यत्र शस्त्राभिघातेन मर्माभिद्येत पापिनाम् ३३
ततस्तप्तशिलायां तौ निष्पिष्टौ घनघाततः । भुक्त्वा तु नरकानेकविंशतिं बहुवासरम् ३४ तद्दुःखं शक्यते वक्तुं शेषेणापि कदाचन । एवं
बहुसहस्राणि भुक्त्वा भोगाननेकशः ३५ निस्तीर्णभोगौ तौ पापशेषेण भुवमागतौ । एको जातः काकयोनौ उलूकोऽभूत्परोपि च ३६
तत एको दर्दुरोऽभूदपरः सरठोऽभवत् । तत एको विषधरोऽपरोऽभूद्वृश्चिकोपि च ३७ तत्रापि कुर्वतः पापं नानालोकविदंशतः । शुनी-
मार्जारयोनौ तौ जातौ नकुलसूकरौ ३८ वृकजंबूकयोनौ तौ जातौ घोटकगर्दभौ । तत उष्ट्रगजौ जातौ ततो नक्रमहाझषौ ३९ ततो व्या-
घ्रमृगौ जातौ ततो वृषभकासरौ । एवं नानायोनिगतौ जातौ तौ पुल्कसांत्यजौ ४० राक्षसीं भिल्लयोनिं च ततश्चांते समीयतुः । पिंगाक्षिबुद्
द्धिरिति नाम्ना जातौ च भूतले ४१ आजन्मकृतपापस्य कथने बहुदोषता । यदा तौ राज्यभ्रष्टौ स्तः आस्तां पापरतौ सदा ४२ एकं

पुण्यं तयोरासीन्मृगयां सर्पतोः क्वचित् । शंकरस्य च नमनं दर्शनं च प्रदक्षिणा ४३ अर्चनं बिल्वपत्राद्यैस्तुष्ट आसीदुमापतिः । अगाधं
तत्तयोः पुण्यं पूर्वजन्मनि संचितम् ४४ यदा पुना राक्षसोऽसौ भूमिपं भक्षितुं गतः । स आरूढो बिल्ववृक्षं तत्पत्राणि च मस्तके ४५
पतितानि उमेशस्य तुष्टोऽभूत्स द्वयोरपि । दिव्यदेहं तयोर्दत्त्वा स्वर्लोकं प्रापयद्विभुः ४६ एतत्ते कथितं पूर्वजन्म कर्म च चैतयोः । बि-
ल्वपत्रार्चनादेव तुष्टोभूत्स उमापतिः ४७ लक्षपूजां प्रकुर्याच्च प्रसन्नो हि शिवो भवेत् । एवं हि बिल्वपत्रैश्च सर्वकामार्थसिद्धये४८श्रीका-
मो बिल्वपत्रैश्च पूजयेच्च तथा शिवम् । लक्षेण सर्वसिद्धिश्च नात्र कार्या विचारणा ४९ यं यं चिंतयते कामं तं तं प्राप्नोति सर्वशः । अथ
विप्र प्रवक्ष्यामि बिल्वपत्रैश्च पूजनम् ५० शंभुप्रीतिकरं नृणां शिवभक्तिविवर्द्धनम् । वैशाखे श्रावणे ऊर्जे बिल्वपत्रार्चनं स्मृतम् ५१दिने
दिने सहस्रेण अर्चयेद्बिल्वपत्रकैः । एवं मासत्रयं कुर्यात्तत उद्यापनं चरेत् ५२ उद्यापनं प्रवक्ष्यामि व्रतस्य परिपूर्तये । आहूय ब्राह्मणा-
न् सर्वान् सुचंद्रे च शुभे दिने ५३ यत्र चोद्यापनं कार्यं मंडलं तत्र कारयेत् । कर्तव्यं स्वगृहे विप्रैस्तत्सर्वं सुकृतं भवेत् ५४ वेदिका त-
त्र कर्तव्या मंडपे च सुशोभने । गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ५५ प्रविश्य मंडपे तस्मिन्नाचार्येण द्विजैः सह । मासतिथ्यादि सं-
कीर्त्य कुर्यात्स्वस्त्ययनं ततः ५६ पुण्याहवाचनं कार्यमाचार्यवरणं तथा । ततो ब्राह्मणमाहूय वेदवेदांगपारगम् ५७ आचार्यं वरयेत्पूर्वं-
मृत्विगेकादशैः सह । देवागारे तथा गोष्ठे शुद्धे वा स्वीयमंदिरे ५८ पुष्पमंडपिकां कृत्वा पट्टकूलादिवेष्टिताम् । तन्मध्ये लिंगतोभद्रं
रचयेल्लक्षणान्वितम् ५९ कुंभस्य रुद्रकोणे तु रचयेद्वेदिकां व्रती । वस्त्रेणाच्छादितां वेदीं रचयेत्तत्र तंडुलैः ६० कुर्यात्तंडुलकैलासं त्रि-
कूटं तस्य चोपरि । न्यसेद्देविकया सार्द्धं शंकरं लोकशंकरम् ६१ सौवर्णीं प्रतिमां कृत्वा स्थापयेत्तंडुलोपरि । ब्रह्माणं दक्षिणे भागे सा-



एतदेव पुरे पुण्य दैवाज्जात तयोस्तदा २३ एव पापसमाचारौ राज्य कृत्वाथ मम्रतु । बध्वा पाशैर्याम्यहस्तैर्नीतो तौ शमनान्तिकम् २४
चित्रगुप्तं समाहूय पप्रच्छ स शुभाशुभम् । तेनोक्तं नैतयोरस्ति पुण्यलेशो रवे सुत २५ पापानां गणना नास्ति ततो ब्रूवान्ब्रवीद्यम ।
बध्येतां बध्येतामेतौ क्षिप्येतां नरकेषु च २६ मृत्युलोके ततो ह्येतौ नीचयोनिं गतावुभौ । कुंडे वीचिमये पंके सहस्र परिवत्सरान् २७
एकैकस्मिन्क्रमेणैतौ कुंडे मुक्त्वाघसंचयौ । अनयोः पुण्यलेशोऽस्ति ब्रूता शृणुष्व सत्कृतिम् २८ प्रसंगाद्दर्शितो दृष्टो देवो ह्याम्याशुभाप
तिः । तेन पुण्येन न ह्येतौ पाप व्यतितरिष्यतः २९ एवमाकर्ण्य तद्वाक्यं दूतैर्बध्वा हतं दृढम् । कुंभीपाके शोणितोदे निरये रौरवेपि तौ ३०
निक्षिप्तौ कालकूटे च क्रमशः शतवत्सरान् । तामिस्रे चांधतामिस्रे पूयशोणितकर्दमे ३१ कंटकेषु क्षतांगौ तौ संतप्तौ तप्तवालुके । भ
क्षितौ कृमिभिस्तत्र भृश शुनिमुखे भ्रमौ ३२ असिपत्रवने घोरे ततो नीतावुभावपि । यत्र शस्त्राभिघातेन मर्माभिद्येत पापिनाम् ३३
ततस्तप्तशिलायां तौ निष्पिष्टौ घनघाततः । भुक्त्वा तु नरकानेकविंशतिं बहुवासरम् ३४ तद्दुःखं शक्यते वक्तुं शेषेणापि कदाचन । एवं
बहुसहस्राणि भुक्त्वा भोगाननेकशः ३५ निस्तीर्णभोगौ तौ पापशेषेण भुवमागतौ । एको जातः काकयोनौ उलूकोऽभूत्परोपि च ३६
तत एको दर्दुरोऽभूदपरः सरठोऽभवत् । तत एको विषधरोऽपरोऽभूद्वृश्चिकोपि च ३७ तत्रापि कुरुतः पाप नानालोकविदंशतः । शुनी
मार्जारयोनौ तौ जातौ नकुलसूकरौ ३८ वृकजम्बुकयोनौ तौ जातौ घोटकगर्दभौ । तत उष्ट्रगजौ जातौ ततो नक्रमहाझषौ ३९ ततो व्या-
घ्रमृगौ जातौ ततो वृषभकासरौ । एवं नानायोनिगतौ जातौ तौ पुल्कसांत्यजौ ४० राक्षसीं भिल्लयोनिं च ततश्चांते समीयतुः । पिंगाक्षिदुर्दु
द्विरिति नाम्ना जातौ च भूतले ४१ आजन्मकृतपापस्य कथने बहुदोषता । यदा तौ राज्यप्रभृति आस्तां पापरतौ सदा ४२ एकं

यद्यद्दत्तो भवेत्पुष्पं शंकरे तु समर्पयेत ॥ श्रावणे माधवे ह्यूर्जे विदध्याल्लक्षपुष्पिकाम् । एकैकं मूलमंत्रेण रुद्रमंत्रेण वा पुनः ॥ अथवा रुद्रसूक्तेन सहस्रेणाथवा व्रती । अर्चयेत्पार्वतीनाथं नमो रुद्राय वा जपेत् ॥ अनेनैव प्रकारेण लक्षपूजां समर्पयेत् ॥ ऋषय ऊचुः । यानि कानि च पुष्पाणि विशिष्टानि शिवार्चने । तानि सर्वाणि भो ब्रह्मन्कथयस्व यथा मम ॥ लोमश उवाच । बार्हतं कर्णिकारं च करवीरं तिलस्य च । बिल्वपुष्पं च कह्लारमर्कं मंदारमेव च ॥ नीलोत्पलं च कमलं कुमुदं च कुशेशयम् । मालतीचंपकं चैव तथा मोगरकं शुभम् । तगरं शतपत्रं च सौवीरं मुनिसंज्ञितम् । जातीपाटलकं चैव पुन्नागं च विशिष्यते । कदंबं च कुसुभं च अशोकं बकुलं तथा । पालाशं कोरटं चैव बकुलं धत्तुरं तथा । एतान्यन्यानि पुष्पाणि विशिष्टानि शिवार्चने । एतेषां लक्षपूजां वै यः करोति नरोत्तमः ॥ भुक्त्वा भोगान्स विपुलान् शिवेन सह मोदते । आयुःकामेन कर्तव्यं चंपकैः पूजनं महत् ॥ विद्याकामेन कर्तव्यमर्कपुष्पैर्विशेषतः । पुत्रकामेन कर्तव्यं बार्हतैः पूजनं महत् ॥ करवीरैर्जातिकुसुमैश्चंपकैर्नागकेसरैः । बकुलीतिलपुन्नागैर्धनकामेन पूजयेत् ॥ दुःस्वप्ननाशनार्थाय द्रोणपुष्पैस्तु पूजनम्। कल्हारैः कर्णिकारैश्च मांदारैः कुसुमैः शुभैः ॥ श्रीकामेन च कर्तव्यं बिल्वपत्रैस्तु पूजनम् ॥ विद्याकामेन कर्तव्यं शंकरस्य प्रपूजनम् । पालाशैः पाटलैश्चैव कदंबकुसुमैस्तथा ॥ महाव्याधिनिरासार्थं पारिजातैस्तु पूजनं ॥ वशीकरणकामेन सौवीरैस्तोषयेत्तु यः । तस्य विश्वं भवेद्वश्यं नात्र कार्या विचारणा ॥ देवदानवगंधर्वा वशे भवंति नान्यथा । पुत्रकामेन कर्तव्यं धत्तूरकुसुमैः शुभैः॥उत्तमां श्रियमाप्नोति प्रसादाच्छंकरस्य च । एवं सर्वैश्च पुष्पैश्च सर्वकामार्थसिद्धये ॥ पूजयेत्पार्वतीनाथं भक्तियुक्तेन चेतसा । यं यं चिंतयते कामं तं तं प्राप्नोति मानवः ॥ लक्षपुष्पैः पूजनेन प्रसन्नः शंकरो यथा । उद्यापनं प्रवक्ष्यामि व्रतस्य परिपूर्तये ॥ आहूय ब्राह्मणान्सर्वान् शुभे च ति-

विष्णा सह सुप्रभम् ६२ कौवेर्यां स्थापयेद्विष्णु लक्ष्म्या सह गरुत्मता । महेशं स्थापयेन्मध्ये पार्वत्या सह सुप्रभम् ६३ कलशं स्थापयेत्तत्र ताम्रं वा मृन्मयं शुभम् । गंगोदकसमायुक्तं पंचरत्नसमन्वितम् ६४ पंचपल्लवसंयुक्तं स्थापयेच्च ततोग्रतः । वस्त्र युग्मेन संवेष्ट्य कैलासं कलशं शुभम् ६५ यदुक्तं तत्र कल्पोक्तं पूजनं तत्र कारयेत् । वेदशास्त्रप्रमाणेन रात्रिं तां गम पेद्व्रती ६६ ततः प्रभातसमये स्नात्वा च शुचिर्भवेत् । स्थंडिलं कारयेत्तत्र स्वशाखोक्तविधानतः ६७ हवनं च प्रकुर्वीत सति लाज्येन पायसैः । मूलमंत्रेण गायत्र्या शंभोर्नामसहस्रकैः ६८ येन मंत्रेण पूजा तु कृता तेनैव कारयेत् । हवनं तद्दशांशेन तद्द शांशेन तर्पणम् ६९ वदनं तद्दशांशेन कुर्यात्तिलयवैः सह । एवं होमं प्रकुर्वीत अष्टोत्तरसहस्रकम् ७० बिल्वपत्रं सुवर्णस्य मर्पयेच्च उमापतिम् । आचार्यं पूजयेद्विप्रांस्तोषयेद्दक्षिणादिभिः ७१ पयस्विनीं च गां दद्याद्धिरण्येन सहैव तु । प्रतिमां च सवस्त्रां च कलशं पर्वतं तथा ७२ दत्त्वा क्षमापयेत्पश्चाद्देवदेवं जगद्गुरुम् । अनेनैव विधानेन लक्षपूजां करोति यः ७३ पुत्रपौत्रप्रपौत्रैश्च राज्यं प्राप्नोति शाश्वतम् । य इदं पठते नित्यं श्रद्धाभक्तिसमन्वितः ॥ देवदेवो महादेवो ददाति विपुलां गतिम् ७४ ॥ इति श्रीस्कंदपु० बिल्व दललक्षपूजनव्रतं सोद्यापनं संपूर्णम् ॥ ॥ अथ शिवस्य नानालक्षपूजाविधिः ॥ ऋषय ऊचुः । यानि कानि च तीर्थानि पुण्यान्यायतनानि च । किमुद्दिश्य च कार्याणि तत्सर्वं कथय प्रभो ॥ शिवाख्यानपरो लोके त्वत्तोन्यो न हि विद्यते । कृपया व्यासदेवस्य सर्वज्ञोऽसि महामते ॥ लोमश उवाच । पृथिव्यां यानि तीर्थानि सागरांतानि भो द्विज । माहात्म्यानि च शास्त्राणि कथितानि मया पुरा ॥ इदानीं वक्तुमिच्छामि लक्षपूजां शिवस्य च । स्कंदेन च समाख्याता अगस्त्याय महामते ॥ तेनैव कथिता पूजा ममाग्रे लक्षपुष्पिका ।

शीघ्रं कार्यप्रदो भव । अनेनैव विधानेन लक्षपूजां करोति यः ॥ पुत्रपौत्रप्रपौत्रैश्च राज्यं प्राप्नोति शाश्वतम् । य इदं पठते नित्यं श्रद्धाभक्तिसमन्वितः ॥ देवदेवो महादेवो ददाति विपुलां मतिम् ॥ इति श्रीस्कंदपुराणे उत्तरखंडे लक्षपुष्पपूजोद्यापनं संपूर्णम् ॥ ॥ अथ तुलसीलक्षपूजाविधिः ॥ मासपक्षाद्युल्लिख्य । मम समस्तपापक्षयार्थं श्रीमहाविष्णुप्रीत्यर्थं तुलसीलक्षपूजां करिष्य इति संकल्प्य । तुलसीप्रार्थना—देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः । नमो नमस्ते तुलसि पापं हर हरिप्रिये । प्रार्थना ॥ तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये । केशवार्थं विचिन्वामि वरदा भव शोभने ॥ अनेन मंत्रेण तुलसीपत्राणि संगृह्य विष्णोर्भक्त्या समर्पयेत् ॥ कृष्ण उवाच । अथ राजन्प्रवक्ष्यामि लक्षश्रीतुलसीव्रतम् । विष्णुप्रीतिकरं नृणां विष्णुभक्ति विवर्द्धनम् ॥ तुलसीप्रभवैः पत्रैर्यो नरः पूजयेद्धरिम् । न स लिप्येत पापौघैः पद्मपत्रमिवांभसा ॥ सुवर्णभारमेकं तु रजतं च चतुर्गुणम् । तत्फलं समवाप्नोति तुलसीदलपूजनात् ॥ रत्नवैडूर्यमुक्ताभिः प्रवालादिभिरर्चितः । न तुष्यति तथा विष्णुस्तुलसीपूजनाद्यथा ॥ तुलसीमंजरीभिस्तु पूजितो येन केशवः । आजन्मकृतपापस्य तेन संमार्जिता लिपिः ॥ या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुःपावनी रोगाणामभिवंदिता निरसिनी सिक्तांतकत्रासिनी । प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता यस्यार्चाकरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ कार्तिके मासि कुर्वंति माघे वा मधुसूदने[१] । दिने दिने सहस्रं तु ह्यर्पयेत्तुलसीच्छदान् ॥ एवं मासत्रयं कुर्यात्तत उद्यापनं चरेत् । वैशाखे माघ ऊर्जे वा कुर्यादुद्यापनं क्रमात् ॥ यस्मिन्मासे प्रकर्तव्यं गुरुशुक्रोदये सति । हरेर्दिने शुभे मासि कुर्यादुद्यापनं व्रती ॥ आचार्यं वरयेदादौ वेदवेदांगपारगम् । दांतं शांतं तथा

१ मधुसूदने माधवे मासे । वैशाखे इत्यर्थः ।

शिवासरे । यत्र उद्यापन कार्यं मंडप तत्र कारयेत् । स्वशाखोक्तेन कर्तव्यं तत्सर्वं सुकृतं भवेत् । वेदिका च प्रकर्तव्या मंडपे तत्र शोभने ॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा । प्रविश्य मंडपे तस्मिन्नाचार्येण द्विजैः सह ॥ तिथिमृक्ष च संकल्प्य कुर्यात्स्वस्त्ययनं ततः । पुण्याहवाचनं कार्यमाचार्यवरणं ततः ॥ वेदिकायां तु कर्तव्यं स्वस्तिकं परमं शुभम् ॥ तन्मध्ये विधिवद्दिप्र मंत्रैर्वेदोक्तस्वस्तिकैः । कुर्यात्तंडुलकैलासं त्रिकूटं तस्य चोपरि ॥ तस्योपरि न्यसेत्कुंभं ताम्रं मृन्मयमेव वा ॥ ब्रह्माणं दक्षिणे भागे उदीच्यां विष्णुमेव च । सौवर्णीं प्रतिमां कुर्यात् स्थापयेत्तंडुलोपरि । महेशं स्थापयेन्मध्ये पार्वत्या सह सुप्रभम् । पंचपल्लवसंयुक्तं स्थापयेत्तस्य चाग्रतः । वस्त्रयुग्मेन संवेष्ट्य कैलासं कलशं शुभम् । यदुक्तं रुद्रकल्पे तु पूजनं तत्र कारयेत् ॥ वेदशास्त्रपुराणेन रात्रौ जागरणं चरेत् । ततः प्रभातसमये नद्यां स्नात्वा शुभे जले ॥ स्थंडिलं कारयेत्तत्र स्वशाखोक्तविधानतः । हवनं रुद्रमंत्रेण तिलाज्येन सपायसैः ॥ नानाविधैर्भक्ष्यभोज्यैर्गंधधूपादिभिस्तथा । प्रार्थयेच्छंकरं देवं विरिंचिं विष्णुना सह । सावित्रीं पार्वतीं चैव लक्ष्मीं गणपतिं तथा । स्कंदभैरवचामुंडापरिवारांस्ततोऽर्चयेत् ॥ नैवेद्यैर्विविधैश्चैव तोषयेत्त्रिरिनापतिम् । शर्कराघृतचूर्णेन चरुणा जुहुयात्सह ॥ श्रेयःसंपादनं कार्यमाचार्यपूजनं तथा । ऋत्विजः पूजयेत्पश्चाद्वस्त्रालंकरणैः शुभैः ॥ गोभूहिरण्यवस्त्राद्यैस्तोषयेद्ब्राह्मणास्ततः । अभिषेकं ततः कुर्यात्पुराणश्रुतिचोदितम् ॥ ततः शिवालये गत्वा सभार्येण द्विजैः सह । स्नानं पंचामृतेनैव रुद्रसूक्तविधानतः ॥ पूजां सुवर्णपुष्पैश्च ऋतुकालोद्भवैस्तथा । कारयेत्तस्य लिंगस्य यथाशक्त्या तु पूजनम् ॥ वस्त्रयुग्मं समभ्यर्च्य दंपतीन्भोजयेत्ततः । प्रदक्षिणा नमस्कारान् कृत्वा मूर्ध्नि कृतांजलिः । क्षमापयेन्महादेवं मुहुर्मुहुरतंद्रितः ॥ महादेव जगन्नाथ भक्तानां कार्यकारक । [illegible]

शीघ्रं कार्यप्रदो भव । अनेनैव विधानेन लक्षपूजां करोति यः ॥ पुत्रपौत्रप्रपौत्रैश्च राज्यं प्राप्नोति शाश्वतम् । य इदं पठते नित्यं श्रद्धाभक्तिसमन्वितः ॥ देवदेवो महादेवो ददाति विपुलां मतिम् ॥ इति श्रीस्कंदपुराणे उत्तरखंडे लक्षपुष्पपूजोद्यापनं संपूर्णम् ॥ ॥ अथ तुलसीलक्षपूजाविधिः ॥ मासपक्षाद्युल्लिख्य । मम समस्तपापक्षयार्थं श्रीमहाविष्णुप्रीत्यर्थं तुलसीलक्षपूजां करिष्य इति संकल्प्य । तुलसीप्रार्थना–देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः । नमो नमस्ते तुलसि पापं हर हरिप्रिये । प्रार्थना ॥ तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये । केशवार्थं विचिन्वामि वरदा भव शोभने ॥ अनेन मंत्रेण तुलसीपत्राणि संगृह्य विष्णोर्भक्त्या समर्पयेत् ॥ कृष्ण उवाच । अथ राजन्प्रवक्ष्यामि लक्षश्रीतुलसीव्रतम् । विष्णुप्रीतिकरं नृणां विष्णुभक्तिविवर्द्धनम् ॥ तुलसीप्रभवैः पत्रैर्यो नरः पूजयेद्धरिम् । न स लिप्येत पापौघैः पद्मपत्रमिवांभसा ॥ सुवर्णभारमेकं तु रजतं च चतुर्गुणम् । तत्फलं समवाप्नोति तुलसीदलपूजनात् ॥ रत्नवैडूर्यमुक्ताभिः प्रवालादिभिरर्चितः । न तुष्यति तथा विष्णुस्तुलसीपूजनाद्यथा ॥ तुलसीमंजरीभिस्तु पूजितो येन केशवः । आजन्मकृतपापस्य तेन संमार्जिता लिपिः ॥ या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुःपावनी रोगाणामभिवंदिता निरसिनी सिक्तांतकत्रासिनी । प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता यस्याचार्चाकरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ कार्तिके मासि कुर्वंति माघे वा मधुसूदने[१] । दिने दिने सहस्रं तु ह्यर्पयेत्तुलसीच्छदान् ॥ एवं मासत्रयं कुर्यात्तत उद्यापनं चरेत् । वैशाखे माघ ऊर्जे वा कुर्यादुद्यापनं क्रमात् ॥ यस्मिन्मासे प्रकर्तव्यं गुरुशुक्रोदये सति । हरेर्दिने शुभे मासि कुर्यादुद्यापनं व्रती ॥ आचार्यं वरयेदादौ वेदवेदांगपारगम् । दांतं शांतं तथा

[१] मधुसूदने माधवे मासे । वैशाखे इत्यर्थः ।

सौम्य नित्यं ब्राह्मणवर्षसम् ॥ विधिज्ञ तत्त्ववेत्तारं श्रुधिष्मतं तपस्विनम् । स्वगृह्योक्तेन मार्गेण परेक्षुः स्वस्तिवाचनम् ॥ सौवर्णी प्रतिमां विष्णो शङ्खचक्रगदान्विताम् । तुलस्यायतन चैव कुर्याद्धेमविनिर्मित ॥ हेमादिनिर्मितं कुम्भं पूर्णपात्रसमन्वितम् । पुण्योदकैः पंचरत्न-कुशदूर्वाभिपूरितम् ॥ तस्योपरि न्यसेद्विष्णु लक्ष्म्या च तुलसीसमम् । पूजां पुरुषसूक्तेन कुर्याद्ब्रह्मादिदेवताः ॥ उपचारैः षोडशभिः पूजयेच्च तथा हरिम् । रात्रौ जागरण कुर्यात्पुराणैर्वेदपाठकैः ॥ ततः प्रातः समुत्थाय होमं कुर्याद्विधानतः । वैष्णवेन तु मन्त्रेण तिलाज्येन विधेयतः ॥ पायसेन घृताक्तेन ह्यष्टोत्तरसहस्रकम् । आचार्याय सवत्सां गां दक्षिणावस्त्रसंयुताम् ॥ ब्राह्मणान्भोजयेत्पश्चात्सहस्रं वाथ शक्तितः । शत वाऽष्टाविंशतिं च भोजयेद्ब्राह्मणान्बुधः ॥ तेभ्योपि दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत् । एव यः कुरुते मर्त्यो विष्णुसायुज्यतां व्रजेत् ॥ विष्णुप्रीतिकरं यस्मात्तस्मात्सर्वव्रताधिकम् । तुलसीलक्षपूजोक्तं माहात्म्य शृणुयान्नरः ॥ सकृद्वापि पठेन्नित्य स गच्छेद्वैष्णव पदम् । होमभस्म समादाय रक्षां कृत्वा तथात्मनः ॥ ब्रह्मराक्षसभूतानां शांतये कारयेदिदम् । सर्पादिबाधके प्राप्ते गर्भिण्याश्चा विनिर्गमात् । भस्मप्रोक्षणमात्रेण सर्वं नश्येद्भय नृणाम् ॥ इति श्रीभविष्यपु० लक्षतुलसीप्रदक्षिणाव्रतोद्यापन सं० ॥ ॥ अथ विष्णोर्लक्षपुष्पपूजाविधिः ॥ ऋषय ऊचुः । यानि कानि च तीर्थानि पुण्यान्यायतनानि च । किमुद्दिश्य च कार्याणि तत्सर्वं कथय प्रभो ॥ लोमश उवाच । पृथिव्यां यानि तीर्थानि सागरांतानि भो द्विजाः । माहात्म्यानि च सर्वाणि कथितानि मया पुरा ॥ इदानीं वक्तुमिच्छामि पुष्पाणां पूजन तव । लक्षपूजां प्रवक्ष्यामि विष्णोरमिततेजसः ॥ पुष्पाणां लक्षपूजां तु कार्तिक्यां च समाचरेत् । माघे वा वृद्धे वापि विदध्याल्लक्षपुष्पिकाम् । यद्यत्तौ भवेत्पुष्पं विष्णवे च समर्पयेत् । एकैकं मूलमंत्रेण विष्णुसूक्तेन वा पुनः ॥ अथवा वि

ष्णुगायत्र्या नाम्ना चैव प्रपूजयेत् । विष्णोः सहस्रनाम्ना वै लक्षपूजां तु कारयेत् ॥ अतसीकर्णिकारं च करवीरं तिलस्य च । बार्हतं केतकी चैव तथा मंदारमेव च ॥ नीलोत्पलं सकुमुदं मालती चंपकं तथा । जातीपाटलके चैव पुन्नागं च कदंबकम् ॥ कल्हारं मोगरं चैव ह्यशोकं बकुलं तथा । मुनिपुष्पाणि शस्तानि विष्णोरमिततेजसः ॥ पालाशं कंटकीपुष्पं कमलं कोरटं तथा । नीलपुष्पं धात्रिपुष्पं हरेः शस्तानि वै सदा ॥ एवं कुर्वंति ये भक्त्या ते यांति हरिमंदिरम् । आयुःकामेन कर्तव्यमतसीधात्रिजैस्तथा ॥ पुत्रकामेन कर्तव्यं बार्हतीपूजनं हरेः । करवीरैर्जातिकुसुमैश्चंपकैर्नागकेसरैः ॥ बकुलीतिलपुन्नागैर्धनकामेन पूजयेत् । कल्हारैः कर्णिकारैश्च मांदारैः कुसुमैः शुभैः ॥ विद्याकामेन कर्तव्यं विष्णोर्भक्त्या च पूजनम् । पालाशैः पाटलैश्चैव कदंबैः पूजनं महत् । महाव्याधिविनाशार्थे पारिजातैश्च पूजनम् । वशीकरणकामेन सौवीरैस्तोषयेद्धरिम् ॥ तस्य विश्वं भवेद्वश्यं नात्र कार्या विचारणा । देवदानवगंधर्वा वशीभवंति नान्यथा ॥ श्रीकामेन तु कर्तव्यं केतकीपूजनं महत् । एवं हि सर्वपुष्पैश्च सर्वकार्यार्थसिद्धये ॥ लक्षपूजां प्रकुर्याच्च प्रसन्नो हि हरिर्भवेत् । उद्यापनं तथा कार्यं मंडपं तत्र कारयेत् ॥ आहूय ब्राह्मणान् सर्वान्सुनक्षत्रे शुभे दिने । वेदिका च प्रकर्तव्या मंडपे तु शुभे दिने ॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा । प्रविश्य मंडपं तत्र आचार्येण द्विजैः सह ॥ पुण्याहवाचनं कृत्वा आचार्यादीन्वरेत्ततः । उपोष्य दिवसे तस्मिन् रात्रौ जागरणं चरेत् ॥ वेदिकायां तु कर्तव्यं स्वस्तिकं परमाद्भुतम् । तन्मध्ये तंडुलैः कुर्याद्घृतदीपं सुशोभनम् । पंचपल्लवसंयुक्तं न्यसेद्वस्त्रं सुशोभनम् । तस्योपरि न्यसेत्कुंभं पूर्णपात्रेण संयुतम् ॥ सौवर्णीं प्रतिमां तत्र स्थापयेच्च हरेर्विभोः । पूजां तत्र प्रकुर्वीत पंचामृतपुरःसरैः ॥ धूपदीपैश्च नैवेद्यैर्गीतवादित्रनृत्यकैः । वेदशास्त्रपुराणैश्च तां रात्रिं गमयेद्व्रती ॥ ततः प्रभातसमये सुस्नातश्च

शुचिर्भवेत् । स्थंडिलं कारयेत्तत्र स्वशाखोक्तविधानतः ॥ हवनं च प्रकुर्वीत सतिलाज्येन पायसैः । मूलमंत्रेण गायत्र्या विष्णोर्नामसहस्रकैः ॥ येन मंत्रेण पूजा वा कृता तेनैव होमयेत् । शर्कराघृतपूर्णेन चरुणा जुहुयात्ततः ॥ एवं होमः प्रकर्तव्य अष्टोत्तरसहस्रकैः । ततः स्विष्टकृत हुत्वा पूर्णाहुतिमतःपरम् ॥ श्रेयःसंपादनं पश्चादाचार्यं पूजयेत्ततः । ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ॥ आचार्यं पूजयेत्सम्यग्वस्त्रालंकरणैः शुभैः । पयस्विनीं च गां दद्याद्धिरण्यादि तथैव च ॥ प्रतिमां च सवस्त्रां च कुंभेनाचार्यमर्चयेत् । दत्त्वा क्षमापयेत्पश्चाद्देवदेवं जनार्दनम् ॥ येन येन प्रकुर्याच्च लक्षपूजां च विष्णवे । सौवर्णं चैव तत्पुष्पमर्पयेच्च हरिः ततः ॥ ब्राह्मणांश्च सपत्नीकान् भूषणैस्तोषयेत्ततः । प्रदक्षिणानमस्कारान् कृत्वा मूर्ध्नि कृतांजलिः । एवं यः कुरुते पूजां तस्य विष्णुः प्रसीदति ॥ इति श्रीविष्णुपु॰ विष्णोर्लक्षपुष्पपूजोद्यापनं संपूर्णम् ॥ ॥ अथ बिल्ववर्त्युद्यापनविधिः ॥ द्रौपद्युवाच । बिल्ववर्तिविधिं ब्रूहि दुर्वासः सर्वदर्शन । कस्मिन्काले समारंभ कस्मिंश्चैव समापनम् ॥ दुर्वासा उवाच । राजपुत्रि प्रवक्ष्यामि विधानं सर्वकामदम् । श्रद्धावित्तं यदा स्यात्तदा तदैव प्रारभेद्व्रतम् ॥ कार्पासस्य स्वहस्तेन तंतु निष्कास्य यत्नतः । स्वकीयैर्वा च विप्राद्यैरंगुलीत्रयसंमिता ॥ त्रिवृता शोभना चैव बिल्ववर्तिसदाहृता ॥ तत सवर्तयेद्वर्तिं स्वप्रदेशिनिसंमिताम् ॥ एवं लक्षमिताः कार्याः शक्तौ कोटिमिता अपि । सर्वशक्तौ तु कार्पासस्वांगुलैनैव निर्मिताः ॥ घृते निमज्ज्य वा तैले स्थापयेत्ताम्रपात्रके । स्थापयेन्मृन्मये पात्रे प्रत्यहं सरूपयान्विताः ॥ श्रावणे माघवे माघे कार्तिके तु विशेषतः । दिने दिने सहस्रं तु अर्पयेद्बिल्ववर्तिकाः ॥ त्र्यंबकेश्वरमुद्दिश्य देवागारे विशेषतः । गंगातीरेऽथवा गोष्ठे यद्वा ब्राह्मणसन्निधौ ॥ मठवालयेषु पूजाते ब्रह्मलोकजिगीषया । नारी वा पुरुषो वापि भक्तियुक्तेन चेतसा । एकस्मिन्नेव दि-

वसे ज्वालयेद्यदि संश्रुतिम् । नमःशंभव इत्येवं मंत्रो रुद्राक्षैर्मितः ॥ पूजनस्य दशांशेन शिवमंत्रेण कारयेत् । तर्पणं तद्दशांशेन तद्दशांशेन वंदनम् ॥ तद्दशांशेन वै होमं कुर्याच्चरुतिलाज्यकैः । अष्टोत्तरसहस्रं वा मंत्रैः पौराणिकैस्ततः ॥ दद्याद्वर्तिं यमुद्दिश्य तद्देवस्य मनुर्मतः । एवं संपाद्य वैशाख्यां कार्तिक्यां वा विशेषतः ॥ माघ्यां वाप्यथवा यस्यांकस्यांचित्पूर्णिमातिथौ । प्रातः स्नात्वा शुचिर्भूत्वा कुर्यादुद्यापनं बुधः ॥ गणेशपूजनं स्वस्ति वाच्य नांदीं च कारयेत् । आचार्यं वरयेत्पश्चात्सर्वलक्षणसंयुतम् । देवागारेऽथवा गोष्ठे शुद्धे वा स्वीयमंदिरे । पुष्पमंडपिकां कृत्वा पटकूलादिवेष्टिताम् ॥ तन्मध्ये लिंगतोभद्रं रचयेल्लक्षणान्वितम् । ततो वै रुद्रकोणे तु रचयेद्वेदिकां व्रती ॥ वस्त्रेणाच्छादितां वेदीं रचयेत्तत्र तंडुलैः । अष्टपत्रान्वितं पद्मं कर्णिकाभिः समन्वितम् ॥ कलशं स्थापयेत्तत्र अव्रणं सजलं तथा । ताम्रमृण्मयपात्रं वा तस्योपरि न्यसेत्सुधीः ॥ तस्योपरि न्यसेद्देवमुमया सहितं शिवम् । सुवर्णनिर्मितं देवं वृषभेण समन्वितम् ॥ रजतस्य दीपपात्रं कृत्वा शक्त्या यथाविधि । सुवर्णवर्तिकां कृत्वा तन्मध्ये स्थापयेत्सुधीः ॥ स्थापनं लिंगतोभद्रे ब्रह्माद्यावाहनं ततः । ततः पूजां विनिर्वर्त्य महासंभारविस्तरैः ॥ परमान्नं च नैवेद्यं भक्त्या देवाय दापयेत् । उपोष्य जागरं कुर्याद्रात्रौ सत्कथया मुदा । ततः प्रभाते विमले जले स्नात्वा प्रसन्नधीः । वर्तिसंख्यादशांशेन तर्पणं कारयेद्व्रती ॥ तर्पणस्य दशांशेन होमयेद्रुद्रमंत्रतः । तिलाज्यचरुभिर्बिल्वैः रुद्रमंत्रेण होमयेत् ॥ आचार्याय प्रदातव्या गौः सवत्सा पयस्विनी । ब्रह्मादिमंडलं मूर्तिं दद्यात्सोपस्करां तथा ॥ यजमानमथाचार्यस्त्वभिषिंचेद्गृहान्वितम् । विसर्जयेत्ततो देवं ब्रह्मादिसहितं पुनः ॥ दद्याच्च भूयसीं कर्म समाप्याथ विचक्षणः । होमस्य तु दशांशेन ब्राह्मणान्भोजयेत्ततः ॥ दत्त्वा च दक्षिणां तेभ्यो गृह्णी-

यादाशिषः शुभाः । वर्धमानं रौप्यमयं हैमवर्तिसमन्वितम् ॥ अथवा कांस्यपात्रं च घृतेनापूरितं शुभम् । ब्राह्मणाय प्रदातव्यं दक्षिणासहितं शुभम् ॥ ततो भुंजीत तच्छेषं शिष्टैरिष्टैश्च बन्धुभिः । एवं द्रुपदराजेन्द्रपुत्रि सत्यव्रते ऽनघे ॥ लक्षवर्तिव्रतविधिस्तवाग्रे कथितो मया । यं कृत्वा भक्तिभावेन नारी वा पुरुषोपि वा ॥ दारिद्र्यतमसः सद्यो मुच्यते नात्र संशयः । पुत्रपौत्रप्रपौत्रैश्च सुखं संप्राप्य भूतले । अंते दिव्यविमानेन लभते स्वलितं पदम् । नैषधाधिपतेर्भार्या भर्तृदर्शनलालसा ॥ कृत्वा व्रतमिदं प्राप शर्म भर्तृसुतान्वितम् ॥ अन्याभिर्ऋषिपत्नीभिर्ऋषिभिश्चापि तत्त्वगैः । कृतमेतद्व्रतं देवि स्वस्वकामार्थसिद्धये ॥ राजपुत्रि महाभागे वनव्यसनदुःखिते । कुरुष्वैतद्व्रतं सम्यक् कृपाः कालल्घनम् ॥ अयं कार्तिकमासश्च मासानामुत्तमोत्तमः । आगामिन्यां पौर्णमास्यामुद्यापनविधिं चर ॥ इदं दुर्वाससा ख्यातं द्रौपद्यै व्रतमुत्तमम् । ये करिष्यन्ति मनुजास्ते लभेयुः समीहितम् ॥ इति जैमिनीये आरण्यके बिल्ववर्त्युद्यापनं सं० ॥ ॥ अथ रुद्रवर्त्युद्यापनविधिः ॥ नारद उवाच । देवदेव जगन्नाथ जगदानंदकारक । कौतुकेनेप्सितं किंचिद्धर्मप्रश्नं करोम्यहम् १ श्रुतानि देवदेवेश व्रतानि नियमास्तथा । तीर्थानि च महेशान यज्ञदानान्यनेकशः २ नास्ति मे निश्चयो देव भ्रमितोऽहं त्वया पुनः । कथयस्व महादेव यच्छ्रेष्ठं व्रतमुत्तमम् ३ शिव उवाच । शृणु नारद यत्नेन व्रतानामुत्तमं व्रतम् । रुद्रवर्त्येभिधं पुण्यं सर्वोपद्रवनाशनम् ४ सुखसंपत्करं चैव पुत्रराज्यसमृद्धिदम् । शंकरप्रीतिजनकं शिवस्थानप्रदायकम् ५ स्वभर्त्रा सह नारीणां महास्नेहकरं परम् । शृणु नारद यत्नेन गिरीशो यत्र तुष्यति ६ दीपानां लक्षदानं यत्कुर्यात्परमधार्मिकः । यावत्कालं प्रज्वलति दीपास्तु शिवसन्निधौ ७ ब्राह्मणो युगसाहस्रं दाता स्वर्गे महीपते । कार्पासवर्तिकायुक्ता दीपा दत्ताः शिवालये ८ सुचिरं तेपि कैलासे तिष्ठंति शिवमूर्तयः । एवं हि बहवः संति दीपाश्च दि

जसत्तम ९ अधुना संप्रवक्ष्यामि यत्पूर्वैः कथितं तव। यत्कृत्वा कृतकृत्याः स्युर्देवाः सुरमुनीश्वराः १० एवं ज्ञात्वा न कुर्वंति ते ज्ञेया दुःखभागिनः। रुद्रवर्तिसमं नास्ति त्रिषु लोकेषु सुव्रतम् ११ अतएव सदा कार्यं व्रतमेतत्सुदुर्लभम्। मयाऽऽख्यातं व्रतमिदं किमन्यच्छ्रोतुमिच्छसि १२ नारद उवाच। केन चीर्णं व्रतमिदं कथयस्व प्रसादतः। पूजाविधिं च मे ब्रूहि उद्यापनसमन्वितम् १३ शिव उवाच। शृणु नारद देवर्षे यत्त्वं श्रोतुमिहेच्छसि। तदहं संप्रवक्ष्यामि विस्तरेण महामते १४ नर्मदोत्तरदेशे तु पुरी चोज्जयिनी शुभा। तस्यामासीत्सुगंधा च वारस्त्री अतिसुंदरी १५ तया शुल्कं कृतं विप्र युवभिश्च सुदुःसहम्। सुवर्णानां शतं साग्रं प्रतिज्ञातं च तैः कृतम् १६ युवानश्च तथा विप्रा भ्रंशिताश्च सुगंधया। राजानो राजपुत्राश्च नग्नीकृत्य पुनः पुनः १७ येषां द्रव्यं गृहीतं च धिक्कृतास्ते सुगंधया। एवं हि बहवो लोका लुंठिताश्च सदा तया १८ कदाचित्सा गता क्षिप्रां कौतुकाविष्टमानसा। ददर्श च मनोरम्यां पक्षिभिः परिसेविताम् १९ केचिद्ध्यानपरा विप्राः केचिज्जपपरायणाः। केचिच्छिवार्चका विप्राः केचिच्छक्तिप्रपूजकाः २० तेषां मध्ये वसिष्ठो हि तथा दृष्टो महामुनिः। उपविष्टः कर्मसु वै कुशलो नीतिमार्गवित् २१ तस्या धर्मे ऽभवद्बुद्धिर्भाविपुण्यबलात्तदा। विगताशा जीवने सा विषयेषु विशेषतः २२ विनम्रकंधरा भूत्वा प्रणिपत्य पुनः पुनः। स्वकर्मपरिहाराय पप्रच्छ मुनिपुंगवम् २३ सुगंधोवाच। अनाथनाथ विप्रेंद्र सर्वविद्याविशारद। प्रसीद पाहि मां देव शरणागतवत्सल २४ मया कृतानि विप्रेंद्र पापानि सुबहूनि च। तस्य पापस्य नाशाय कारणं ब्रूहि मे प्रभो २५ शिव उवाच। एवमुक्तस्तया विप्रो वसिष्ठो मुनिरादरात्। तेन ज्ञातं च तत्सर्वं तस्याः कर्म पुरातनम् २६ ततोऽब्रवीत्स च मुनिर्वचस्तां सत्यसागरः॥ वसिष्ठ उवाच। शृणु सुश्रोणि सुभगे तव पापस्य संक्षयः २७ येन यज्जायते पुण्यं तत्सर्वं कथयामि

ति । यच्च तीर्थं महत्पुण्य त्रिषु लोकेषु विश्रुतम् २८ प्रयागमिति विख्यातं सर्वदेवैश्च रक्षितम् । गत्वा तत्र प्रयागे वै व्रतं त्रैलोक्यदुर्लभम् २९ रुद्रवर्त्यभिधं पुण्यं शिवप्रीतिकरं परम् । कार्पासतन्तुभिः कार्या रुद्रवर्ती शिवप्रिया ३० हस्तेनैव प्रकर्तव्या युग्मकं सुदृढं शुभम् । एकादशैस्तन्तुभिश्च कारयेद्रुद्रवर्तिकाम् ३१ लक्षसंख्या च कर्तव्या गव्याज्येन परिप्लुता । सौवर्णं राजतं ताम्रं मृन्मयं वा नवं दृढम् ३२ तत्पात्रे स्थापयेद्वर्तिं घृततैलेन पूरयेत् । देया शिवालये नित्यं भक्तियुक्तेन चेतसा ३३ अथवा तिलतैलेन कर्तव्या लक्षवर्तिका । कृत्वा व्रतमिदं भद्रे प्राप्स्यसि त्वं परां गतिम् ३४ शिव उवाच । ततः सा कोशमादाय भृत्यं चैव सुमित्रकम् । आयता तीर्थराजे वै दत्त्वा दानानि सर्वशः ३५ एवं कृत्वा ययौ काश्यां सुमित्रेण समन्विता । कृत्वा सर्वाणि तीर्थानि विश्वेशं प्रणिपत्य च ३६ उपोष्य रजनीमेकां जागरश्च तथा कृतः । स्नात्वा चोत्तरवाहिन्यां दत्त्वा दानानि भूरिशः ३७ ततश्चक्रे व्रतं विप्र वसिष्ठेनोदितं च यत् । यथोक्तविधिना सर्वं तथा चानुष्ठितं व्रतम् ३८ ततः सा स्वशरीरेण तस्मिँल्लिंगे लयं ययौ । एवं या कुरुते नारी व्रतमेतत्सुदुर्लभम् ३९ यं यं चिंतयते कामं व्रतस्यास्य प्रभावतः । पुत्रपौत्रान् धनं राज्यं लभते नात्र संशयः ४० शिव उवाच । अथ चोद्यापनं वक्ष्ये व्रतसंपूर्णहेतवे । प्रारभेत्कार्तिके माघे वैशाखे श्रावणे तथा ४१ तेषु चोद्यापनं कार्यं यथोक्तविधिना ततः । अष्टकर्णिकया युक्तं मंडलं कारयेच्छुभम् ४२ कलशं स्थापयेत्तत्र विधानेन समन्वितम् । रौप्यं ताम्रं मृण्मयं वा वस्त्रयुग्मेन वेष्टितम् ४३ तस्योपरि न्यसेद्देवमुमया सहितं शिवम् ४४ राजतस्य दीपपात्रं कृत्वा रुचया यथाविधि । सुवर्णवर्तिकां कृत्वा तन्मध्ये स्थापयेत्सुधीः ४५ सुवर्णनिर्मितं देवं वृषभेण समन्वितम् । पूर्वोक्तेन विधानेन पूजां कृत्वा समाहितः ४६ आचार्यं वरयेत्पूर्वं द्विजैरेकादशैः सह । होमं चैव प्रकर्तव्यं तिलपायसबिल्वकैः ४७ अष्टोत्तरसहस्रं वा अथ-

वाऽष्टोत्तरं शतम् ४८ रुद्रसूक्तेन वा विप्र मूलमंत्रेण वा पुनः । दीपलक्षं प्रकुर्वीत नरः परमधार्मिकः ४९ दीपान्घृतेन संयुक्तान्नरो दद्याच्छिवालये । स्वर्णवर्तियुतं दीपमाचार्याय निवेदयेत् ५० ततः पूर्णाहुतिं कृत्वा ब्राह्मणैः स्वस्तिवाचनम् । आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः ५१ तस्मै देया सवत्सा च गौरेका सुपयस्विनी । ऋत्विजः पूजयेत्पश्चाद्वस्त्रालंकरणैः शुभैः ५२ वस्त्रोपानद्युगं चैव भोज्यैश्च विविधैरपि । ते चैव भोजनीयाश्च सपत्नीकाः प्रयत्नतः ५३ सुवर्णवर्तिकां कृत्वा रौप्यपात्रे तथैव च । दद्याच्छिवप्रीतये च सर्वकामार्थसिद्धये ५४ घृतपूर्णं रौप्यपात्रं कांस्यपात्रं तथैव च । सुवर्णवर्तिसहितमाचार्याय निवेदयेत् । रुद्रपीठं सप्रतिममाचार्याय समर्पयेत् ५५ कांस्यं विष्णुमयं रौप्यं गोघृतेन समन्वितम् । सुवर्णवर्तिसंयुक्तमतः शांतिं प्रयच्छ मे ५६ महादेव जगन्नाथ भक्तानुग्रहकारक ॥ त्वत्प्रसादादहं याचे शीघ्रं कार्यप्रदो भव ५७ अनेनैव विधानेन रुद्रवर्तिं करोति यः । पुत्रपौत्रैः परिवृतो राज्यं प्राप्नोति शाश्वतम् ५८ एवं या कुरुते नारी सर्वपापैः प्रमुच्यते । श्रुत्वा कथां विधानेन स्थाप्यं सर्वं निवेदयेत् ५९ अश्वमेधसहस्राणि वाजपेयशतानि च । कथाश्रवणमात्रेण तत्फलं लभते नरः ६० ॥ इति श्रीभविष्यपु० शिवनारदसंवादे रुद्रवर्तिव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ माणिक्यवर्त्युद्यापनम् ॥ अद्येत्यादिमासपक्षाद्युल्लिख्य । मम इहजन्मनि जन्मांतरे वा रजोदोषनिमित्तपापपरिहारार्थं पुत्रपौत्राऽवैधव्यप्राप्तये कृतं यल्लक्षवर्तिदीपदानं तत्सांगतासिद्ध्यर्थं तदुद्यापनं करिष्ये । तदंगं गणपतिपूजनं स्वस्तिवाचनमाचार्यवरणं च करिष्ये इति संकल्प्य । ( शिव उवाच । प्रसंगेनापि वक्ष्यामि वर्तिं माणिक्यसंज्ञिकाम् । तस्या दानेन देवि त्वं ममार्द्धासनभागिनी। जातासि मत्प्रिया हि त्वं यावदाभूतसंप्लवम्)॥ सूत उवाच । आर्यावर्ते पुरा काचिद्वेश्याऽभूल्लक्षणाह्वया । तस्या भुजंगो मित्रोऽभूद्दासो नाम महाबली १ सा लक्षणा ऋतुस्ना-

ता स्थिता गोदावरीतटे । बाल्वैधव्यदुःखेन रुदंतीं च कुमारिकाम् २ मृत पतिं पुरःस्थाप्य बंधुभिः परिवारिताम । विलपतीं ततो वीक्ष्य शनैस्तां प्रत्यपद्यत ३ लुठंतीं भुवि कायेन मुहुर्मतीमुरो बहु । जडानामपि कारुण्यं जायते तां प्रपश्य च ४ तदा तां लक्षणा वाक्य मुजंगोवाच सत्वमः ॥ भुजग उवाच ॥ कुळजानां च नारीणां दशेय च सुदारुणा ५ अवस्थात्रयमेतासां तत्रेय च सुदारुणा । कन्यात्व जीवपधीत्व विधवात्वमिति त्रिया ६ पारवश्य च नारीणां दुःखमामरणांतिकम् । मृतापत्यं च वैधव्य तथैवापुत्रता स्त्रियः ७ असह्यते तन्नितयं वैधव्य तत्र चोत्तरम् ॥ लक्षणोवाच । बालेयं शोचतेऽतीव कस्येदं कर्मणः फलम् ८ निवर्तते वा केनेयं को वा वेत्ति तथाविधम् । उवाच दासनामासौ भुजग सनृतं वचः ९ भुजग उवाच । शृणु भद्रे प्रवक्ष्यामि धात्रा सृष्टाः पुरा द्विजाः । देवानां चैव लोकाना हितार्थे मन्त्रकोविदा १० शास्त्रज्ञानात्स्वभावाच्च जीवानां यत्पुरा कृतम् । जानति कर्म च फल प्रष्टव्याश्च घृतव्रता ११ भुजंगवचनं श्रुत्वा तथेवोमिति सा पुनः । ततो गत्वा महावृद्धं याजक नाम वै द्विजम् १२ पप्रच्छ त दयालु च प्रश्नकातरमानसा ॥ लक्षणोवाच ॥ मुने त्वह दुराचार कुलटा लक्षणाह्वया १३ तथापि त्वां दयापात्रं पृच्छ्यते मां निबोधय । साधूनां समचित्तानां जनाः सर्वे समा भुवि १४ दुर्गंधो वा सुगंधो वा यथावायोः समो भुवि । मुने दशेय नारीणां तृतीयातीव दुःसहा १५ कर्मणा जायते येन केन वाथ निवर्तते । एतद्विचार्य मे ब्रह्मन् कृपया वद सुव्रत १६ शांडिल्य उवाच । इति तस्या वचःश्रुत्वा याजको वाक्यमब्रवीत् । दैवे कर्मणि पित्र्ये च नार्यः पाकेषु संस्थिताः १७ अकस्माद्र रजो दृष्ट्वा स्पृष्टभांडाधुपस्कराः । अज्ञानादाश्रयाद्वापि कामाल्लोभात्कचित्स्त्रियः १८ अवेदयित्वा तिष्ठंति तेन दुष्यति सत्कि

१ भुजंग' इत्यपेति पदच्छेदः । २ अत्र संधिरार्षः ।

याः । क्रियालोपकरा ह्येताः पापादस्माद्दुरत्ययात् १९ दशामिमां प्राप्नुवंति सर्वा अपि न संशयः । बाल्ये वा यौवने वापि वार्धक्ये वा कदाचन २० तत्र या तु दुराचारा परानेवाभिकांक्षति । श्वश्वोश्च पतिबंधूनां नित्यं वाचा सुदुःखिता २१ एतत्सहायतो नारी या दूषयति सत्क्रियाः । बाल्ये वैधव्यमाप्नोति सा नारी नात्र संशयः २२ ऋतुस्नाता तु या नारी बालकानवलोकयेत् । लब्धभर्ता ततो गर्भबालानामपि घातिनी २३ न तत्कर्म सहायेन रजसा दूषिता तु या । मृतापत्या तथा भूत्वा वैधव्यं यौवने व्रजेत् २४ या नारी रजसा दुष्टा सर्वभाण्डादिसंकरम् २५ कुरुते यदि सा नारी वैधव्यं वार्धके व्रजेत् । वाचानुकूलरहिता पतिधर्मेषु सर्वदा २६ बाल्ये वैधव्यमापन्ना गतिहीना भवत्यलम् । सर्वासामपि वैधव्यं निदानं पापसंभवम् २७ शांतिं तत्र प्रवक्ष्यामि कर्मणोऽस्यापि लक्षणे । कृतेपि मुनिपंचम्यां व्रते पापं विशोषितम् २८ हस्तेन कारयेद्वर्तिं कार्पासं शोध्य सुप्रभम् । अनेनैव विधानेन विष्णुवर्तिं करोति या २९ पापं गच्छति नारीणां इति वेदविदो विदुः । सशूर्पं वायनं कृत्वा कृते लक्षव्रतादिके ३० समूलशेषं व्रजति रजोदोषो न संशयः । निर्मूलं च भवत्याशु लक्षवर्तिव्रते शुभे ३१ रजसोत्थं महत्पापं नारीणां नात्र संशयः । इति तस्य वचः श्रुत्वा पुनः पप्रच्छ लक्षणा ३२ मनसा शंकिता भूत्वा सादरं मुनिपुंगवम् । साधु साधु महाभाग चित्तं मे भयविह्वलम् ३३ लक्षवर्तिव्रतस्यास्य विधानं कीदृशं वद । कस्मिन्मासे प्रकर्तव्यं कस्मिंश्चैव समर्पणम् ३४ उद्यापनं कथं कार्यं किं फलं तस्य वा मुने । तया पृष्टो याजकोपि लोकानां हितकाम्यया ३५ फलं विधानं तत्सर्वं तदाऽवोचन्महामुनिः ॥ शांडिल्य उवाच । कालो हि कार्तिको मासो माघो वैशाख एव वा ३६ सहस्रगुणितं तत्तु व्रतमेतद्धि कार्तिके । तस्मात्कोटिगुणं भद्रे माघे मासि व्रतोत्तमम् ३७ तस्मादनंतगुणितं फलं वैशाखमासि वै । तस्मान्मासत्रये कार्यं यस्मिन्मासे समाप्यते ३८ तस्मान्मा-

सद्यारपूर्वं प्रारभ्यस्य व्रत त्विदम् । अंते मासि प्रकुर्वीत समाप्तिं च विचक्षणः ३९ सहस्रवर्तिभिः कुर्यादारार्तिं विष्णवेऽन्वहम् । घृतेना प्यथ तैलेन सम्यग्धैर्मनोरमैः ४० यस्मिन्मासे समाप्तिः स्यात्पूर्णिमायां च कारयेत् । उद्यापनं विधानेन व्रतसपूर्तिकारणम् ४१ प्रातः स्नात्वा शुचिर्भूत्वा पंचगव्यं तु प्राशयेत् । पुण्याहवाचनं कृत्वा वरेदाचार्यमुत्तमम् ४२ ब्राह्मणमृत्विजश्चैव कुर्यात्तर्पणमंजसा । सतिलैश्च यवै कुर्यादिमेनय ऋचा द्विजः ४३ वर्याद्दशांशतः कुर्यात्तर्पणं तु विचक्षणः । तर्पणस्य दशांशेन होमं कुर्याद्विधानतः ४४तर्पणोक्तेन मंत्रेण पायसं च घृतान्वितम् । पालाशसमिधा चैव मंत्रैर्होमश्च वैष्णवैः ४५ घृतं तु विष्णुगायत्र्या होमस्याथ विधिः स्मृतः । अष्टकर्णिकया युक्तं सर्वतोभद्रं लिखेत् ४६ कलशस्तु तथा स्थाप्यः सपिधानः सवस्त्रकः । रौप्यस्ताम्रो मृन्मयो वा वस्त्रयुग्मेन वेष्टितः ४७ तस्योपरि न्यसेद्देवं लक्ष्म्या सह सुवर्णकम् । राजतं दीपपात्रं च स्वर्णवर्तिसमन्वितम् ४८ ततो मासाधिदेवांश्च स्थापयेद्देवसन्निधौ । काको विष्णुस्तथा वह्नी रविर्दामोदरो हरिः ४९ रुद्रः शेषो जगद्व्यापी तेजोरूपी निशाकरः । निरंजनः फलाध्यक्षो विश्वरूपी जगत्प्रभुः ५० समकायः स्वयंज्योतिश्चतुर्व्यूहो जलाश्रयः । परं ब्रह्म विंशतिभिः पूजयेज्जगदीश्वरम् ५१ शिरो ललाटं नेत्रे च कर्णौ नासा मुखं तथा । कंठं स्कंधौ तथा बाहू स्तनौ वक्षस्तथोदरम् ५२ नाभिं कटी च जघने ऊरू जानुनि गुल्फके । पादौ तदग्रक्रमशो युगान्येतैश्च पूजयेत् ५३ धूपदीपौ तथा दत्त्वा नैवेद्यं च निवेदयेत् । आचार्यं पूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा ५४ गां प्रदद्यात्सवत्सां च सालंकारां गुणान्विताम् । त्रिंशत्पलं कांस्यपात्रं घृतेन परिपूरितम् ॥ सुवर्णवर्तिसंयुक्तमाचार्याय निवेदयेत् ५५ कांस्यं विष्णुमयं रौप्यं गोघृतेन समन्वितम् । सुवर्णवर्तिसंयुक्तमतः शांतिं प्रयच्छ मे ५६ इति मंत्रेण दद्यात् ॥ तथा दशपलं कांस्यं तथा घृतसमन्वितम् । अथवा तु

यथाशक्त्या दद्यादावश्यकं त्विति ५७ व्रतभावे च यो दद्यात्कांस्यं च घृतपूरितम् । यावज्जीवं सुखप्राप्तिर्भवत्येव न संशयः ५८ रजोदोषाद्विमुक्ता स्यात्पौर्णमास्यां ददाति या । ब्राह्मणान्भोजयेत्पश्चाद्वित्तशाठ्यं न कारयेत् ५९ या चैवं कुरुते नारी तस्याः पुण्यफलं शृणु । यानि चान्यानि पापानि रहस्येव कृतानि च ६० नश्यंति तानि सर्वाणि व्रतस्यास्य प्रभावतः । चांडालगामिनी वाऽपि तथा शूद्राभिमर्शिनी ६१ कारुजरजकादीनां गामिनी दुष्टचारिणी । ब्रह्मक्षत्रियवैश्येषु प्रतिलोमेषु गामिनी ६२ मातुलेयपितृव्यादिभ्रातृपुत्राभिगामिनी । बालघ्नी वा पितृघ्नी वा भ्रातृमातृवधे रता ६३ गोघ्नी वा तस्करी वापि रजःसंकरकारिणी । वह्निदा गरदा चैव नित्यं चाप्रियवादिनी ६४ पत्यौ जीवति या नारी मृते वा व्यभिचारिणी । एवमादिमहापापैरावृतापि कुलांगना ६५ कृत्वा चैतद्व्रतं पुण्यं मुच्यते नात्र संशयः । व्रतानामुत्तमं चैव स्त्रीणामावश्यकं त्विदम् ६६ एकार्तिकं प्रयत्नेन विष्णोरत्वमिततेजसः । कोटयो ब्रह्महत्यानामगम्यागम्यकोटयः ६७ तथैवात्युग्रपापानां कोटयोऽथ सहस्रशः । नश्यंति नात्र संदेहो नारीणां वा नरस्य च ६८ विलक्षवर्तिभिर्विष्णोः कृते चारातिकार्पणे । किमत्र बहुनोक्तेन नानेन सदृशं व्रतम् ६९ पुरुषोपि व्रतं कृत्वा पूर्वोक्तैः पापसंचयैः । मुच्यते नात्र संदेहो मधुसूदनशासनात् ७० एतत्सर्वं मयाऽऽख्यातं पृच्छंत्यास्तव मानदे । व्रतं कुरु सुखं तिष्ठ यथा ते रोचते मनः ७१ इति तद्वचनं श्रुत्वा पुनः पप्रच्छ लक्षणा । अज्ञानादृष्टभावाद्वा न विश्वासो ममेह वै ७२ प्रत्ययार्थं ततो ब्रह्मन् प्रत्यक्षं कुरु मेऽधुना । इति तद्वचनं श्रुत्वा याजको वाक्यमब्रवीत् ७३ शांडिल्य उवाच । कथं ते प्रत्ययो भूयादिति तां करुणानिधिः । सा चोवाच पुनर्विप्रं विस्मयोत्फुल्ललोचना ७४ नववैधव्यमापन्ना रुदत्येषा कुमारिका । अस्याः पतिः कथं जीवेद्वैधव्यं चैव नश्यति ७५ तथा कुरु मुनिश्रेष्ठ दया दानवतां धनम्

इति तद्वचन श्रुत्वा विस्मितो वाक्यमब्रवीत् ७६ शांडिल्य उवाच । अधुना मकर प्राप्तो भास्करो लोकभास्करः । माघोऽय च वरो मासः सर्वर्तुषु फलाधिक ७७ प्रातः स्नात्वा च मासेऽस्मिन्प्राप्नुवत्यतुल फलम् । स्नान कृष्णार्पणं कृत्वा देहि भर्त्रे मृताय च ७८ तेन जीवेदय नून सुरापी ब्रह्महापि च । यस्मादयं राजयक्ष्मरोगेण च मृतिं गतः ७९ तथापि माघमासस्य पुण्यादुज्जीवयिष्यति । दापयित्वा हरेराति कांस्यपात्रे घृतेन च ८० जीवपत्नी भव त्व हि यावदामरणं ध्रुवम् । लक्षणा वचन श्रुत्वा जलं स्पृष्ट्वा च वाग्यता ८१ स्नानं विष्णवर्पणं कृत्वा ददौ तस्मै फल तदा । तदा पुण्यप्रभावेण तत्क्षणादेव सोत्थितः ८२ भुजंगं संप्रेषयित्वा नीत्वा पात्र च कांस्यकम् । कुमार्यो दापयामास वैधव्यस्यापनुत्तये ८३ एतत्पुण्यप्रभावेण कुमारी सापि शोभना । यावज्जीवं जीवपत्नी बभूव बहुपुत्रिका ८४ कुमारी शोभना नाम पतिं प्राप्य सुशोभनम् । वह्निबान्धवास्तथा सर्वे तुष्टुवुस्तां च लक्षणाम् ८५ याजकं च बहु स्तुत्वा जग्मुस्ते स्वनिकेतनम् । लक्षणा सापि दासेन भुजगेन च संयुता ८६ माघस्नानं तथा कृत्वा व्रतमेतच्चकार सा । ततस्तु मरणं प्राप्तो दासस्तस्याः सहायकृत् ८७ गयो नाम महाराजा चक्रवर्ती बभूव सः । सा लक्षणा च तत्पत्नी सर्वलक्षणसंयुता ८८ बभूव लोकविख्याता जीवत्पत्नी सुपुत्रिका । अनेनैव विधानेन विष्णुवर्तिं करोति यः ८९ पुत्रपौत्रैः परिवृतो राज्य प्राप्नोति शाश्वतम् । एवं या कुरुते नारी सर्वपापैः प्रमुच्यते ९० लक्षवर्तिकथामेतां प्रीत्या श्रोष्यति मानवः । सोपि तत्फलमाप्नोति नात्र कार्या विचारणा ९१ ॥ इति श्रीवायुपुराणे माणिक्यवर्तिव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ विष्णुवर्तिव्रत लिख्यते ॥ युधिष्ठिर उवाच । देवदेव जगन्नाथ संसारार्णवतारक । वद मे सर्वपापघ्नं व्रतं सर्वव्रतोत्तमम् ॥ यस्याचरणमात्रेण जनानां सर्वकामदम् । यस्ति किंचित्तदा ब्रूहि मम देव दयानिधे ॥ श्रीकृष्ण उवाच । लक्षवर्तिव्रतं वक्ष्मि सर्वकाम-

फलप्रदम् । विष्णुवर्तीति विख्यातं शृणु राजन्समासतः ॥ शुभे तिथौ शुभे लग्ने ताराचंद्रे च शोभने । सम्यग्विशोध्य कार्पासं तृणधूलिविवर्जितम् ॥ तस्य सूत्रं विधायाशु चतुरंगुलिकं तथा । पंचसूत्रयुतावर्तिर्विष्णुवर्तीति कथ्यते ॥ एवं कुर्याल्लिक्षसंख्या गोघृतेन परिप्लुताः । उद्दीपयेच्च विष्ण्वग्रे पात्रे राजतमृन्मये ॥ अथवा प्रत्यहं देयाः सहस्रद्वयसंमिताः । एवं दिनानि पंचाशदंते उद्यापनं चरेत् ॥ कुरु राजन्प्रयत्नेन सर्वपापप्रणाशनम् । भुक्त्वा यथेप्सितान्भोगानंते सायुज्यमाप्नुयात् ॥ पार्वत्या च पुरा पृष्टं शंकराय महात्मने । तेनेदं कथितं देव्या विष्णुवर्तिव्रतं शुभम् ॥ तया कृता विष्णुवर्ती लक्षसंख्या शुभप्रदा । उद्दीपिता तया भक्त्या संतुष्टोऽहं व्रतेन च ॥ दत्तं कैलासभवनं शंकरेण च धारिता । कर्तव्यं तु प्रयत्नेन जनेन शुभमिच्छता ॥ येन चोद्दीपितो विष्णुः सर्वसौभाग्यदायकः ॥ स भवेत्पापनिर्मुक्तो विष्णुलोके महीयते ॥ उद्यापनं यथार्थं त्वं शृणु राजन्ममाग्रतः । येन कृत्वा च सकलं फलं प्राप्नोति मानवः ॥ कार्तिक्यामथवा माघ्यां वैशाख्यां वा शुभे दिने । प्रतिमां कारयेद्विष्णोः सौवर्णीं माषमात्रतः । सकलं कारयेत्ताम्रं पूर्णपात्रेण संयुतम् । आचार्यं वरयेत्पूर्वं पंचऋत्विग्युतं व्रती ॥ पुण्याहवाचनं कृत्वा गणेशं पूजयेत्ततः । विधाय सर्वतोभद्रं पंचवर्णं यथाविधि ॥ स्थापयेत्प्रतिमां विष्णोः कलशे च नवे शुभे । वस्त्रद्वयेन संवेष्ट्य पूजयेत्कलशोपरि ॥ पूजयेच्च यथाशक्त्या ब्रह्माद्या देवताः शुभाः । रात्रौ जागरणं कुर्याच्छृणुयाद्वैष्णवीं कथाम् ॥ प्रभाते विमले स्नात्वा पुनः संपूज्य वै विभुम् । प्रतिष्ठाप्य ततो वह्निं पायसं हवने स्मृतम् ॥ जुहुयाद्विष्णुगायत्र्या सहस्रं पायसं शुभम् । तर्पणं दशसाहस्रं मार्जनं शतमाचरेत् ॥ सौवर्णीं वर्तिकां कृत्वा पात्रे राजतसंभवे । कार्पासवर्तिसंयुक्तैर्नीराज्यो हरिरीश्वरः ॥ नाचार्यं पूजयित्वा तु मंडलं तु निवेदयेत् । ब्राह्मणान्भोजयेत्सम्यक् स्वयं भुंजीत वाग्यतः ॥ इति

विष्णुरहस्ये विष्णुवर्त्युद्यापनं सपूर्णम् ॥ ॥ अथ देहवर्तिव्रतं लिख्यते ॥ सूत उवाच । कैलासशिखरासीनं देवदेवं जगद्गुरुम् । पंच
वक्त्रं दशभुजं शूलपाणिं त्रिनेत्रकम् १ कपालखट्वांगधरं खड्गखेटकधारिणम् । पिनाकपाणिं देवेशं वरदाभयपाणिनम् २ भस्मांगव्याल
शोभाढ्यं शशांककृतशेखरम् । कैलासशिखरावास सूर्यकोटिसमप्रभम् ३ क्रीडते भगवांस्तत्र गणेशादीन्विसृज्य च । विसृज्य देवताः
सर्वा एकाकी उमया सह ४ तं दृष्ट्वा देवदेवेशं महादेवं चारुलोचनम् । अथापृच्छत्तदा देवी यच्चोर्ध्वं व्रतमुत्तमम् ५ देव्युवाच । तदहं श्रो
तुमिच्छामि कथयस्व मम प्रभो । दानधर्माननेकांश्च तपस्तीर्थान्यनेकशः ६ नास्ति मे निश्चयो देव भ्रामिताऽहं त्वया पुनः । व्रतानामु
त्तम देव भुक्तिमुक्तिप्रदायकम् ७ येन चीर्णेन देवेशो मानुषैः प्राप्यते भुवि । स्वर्गापवर्गदं सौख्यं नरकार्णवतारकम् ८ तदहं श्रोतुमिच्छामि
मनुष्याणां हिताय च । येन श्रुतेन लोकोयं शिवसायुज्यमाप्नुयात् ९ शिव उवाच । यन्न कस्यचिदाख्यातं नराणां मुक्तिदायकम् ।
शृणु देवि प्रयत्नेन कथयामि तवाखिलम् १० कार्तिके मार्गशीर्षे वा माघे मासि प्रयत्नतः।पक्षयोरुभयोर्मध्ये शुभे योगे शुभे दिने ११ एकाद
श्यां त्रयोदश्यां चतुर्दश्यामुपोषितः । कार्पासं निस्तृणं कृत्वा वर्तिं कृत्वा प्रयत्नतः १२ पादांगुष्ठशिखांतं च स्वशरीरप्रमाणतः ।
सूत्रं निर्माय यत्नेन तंतुत्रिशयसंयुतम् १३ तस्य वर्तिं विधायाथ सम्यग्लोक्य घृतेन वै । दीपदानं प्रकुर्वीत प्रीतये मम मानवे १४
प्रत्यहं दापयेद्दीपं यावत्संवत्सरं भवेत् । अथवा एकमासे वा षष्ठ्युत्तरशतत्रयान् १५ दीपान्प्रज्वालयेद्भक्त्या मम संतोषहेत
वे । उद्यापनं वत्सरांते कुर्याद्विभवसारतः १६ देहदीपसमं दानं न किंचिदिह विद्यते । महापापप्रशमनं स्वर्गद्वारविवर्द्धनम् १७
अत्रेदं कथयिष्यामि इतिहासं पुरातनम् । शृणु देवि प्रयत्नेन कथां पौराणिकीं शुभाम् १८ ईश्वर उवाच । अरण्ये वर्तमानास्ते

पड्वा भार्यया सह । आत्मनो दुःखनाशार्थं पप्रच्छुः केशवं प्रति १९ युधिष्ठिर उवाच । केनोपायेन देवेश संकटादुद्धराम्यहम् । भुक्त्वा राज्यं च देहांते केन मुक्तिर्भवेन्मम २० श्रीकृष्ण उवाच । अस्ति गुह्यं महाराज व्रतं सर्वार्थदायकम् । नारीणां च विशेषेण पुत्रपौत्रप्रवर्द्धनम् २१ देहवर्तिसमाख्याता प्राणिनां सौख्यदायिका । आत्मदेहसमं सूत्रं तंतुत्रितयसंयुतम् २२ तस्य वर्तिं विधायाशु आज्ये योज्य प्रदीपयेत् । एवं संवत्सरं पूर्णं दद्याच्छंकरतुष्टये २३ अथवा मासमध्ये वा दिनमध्ये यथाविधि । नीराजयेन्महादेवं तेन तुष्यति शंकरः २४ ददाति विपुलान्भोगानंते सायुज्यमाप्नुयात् । इति श्रुत्वा चकारासौ धर्मराजो नृपोत्तमः २५ उद्यापनं तथा कुर्यान्मंडपं कारयेच्छुभम् । पुण्याहवाचनं कार्यमाचार्यं वरयेत्ततः २६ ऋत्विजश्च रुद्रसंख्यान्वृणुयाच्छिवतुष्टये । विरच्य सर्वतोभद्रं कलशं च नवं दृढम् २७ सौवर्णीं प्रतिमां तत्र भवानीशंकरस्य च । उपचारैः षोडशभिः पूजयेत्कलशोपरि २८ दीपपात्रं राजतं हि वर्तिं कृत्वा सुवर्णजाम् । त्र्यंबकेण च मंत्रेण हुनेदष्टोत्तरंशतम् २९ आचार्याय च तत्पीठं दद्याद्दक्षिणया युतम् । ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत वाग्यतः ३० इदं व्रतं महादेवि सर्वकामसमृद्धिदम् । कुरु त्वं च प्रयत्नेन सर्वान्कामानवाप्स्यसि ३१ ॥ इति श्रीस्कंदपु० पार्वतीशंकरसंवादे देहवर्त्युद्यापनं सं० ॥ ॥ अथ विष्णुसूर्यलक्षनमस्कारविधिः ॥ अंबरीष उवाच । इक्ष्वाकूणां कुलगुरो ब्रह्मन्धर्मज्ञ सुव्रत । ब्रूहि पापक्षयकरं व्रतं सर्वोत्तमं मुने ॥ ब्रह्मघ्नस्य सुरापस्य गुरुदारावमर्शिनः । संध्याकर्मविहीनस्य तथा दुर्मार्गवर्तिनः ॥ दासीवेश्यासंगिनश्च चांडालीगामिनस्तथा । परस्वहारिणश्चापि देवद्रव्यापहारिणः ॥ देवब्राह्मणवृत्तीनां छेदकस्य नरस्य च । रहस्यभेदकस्यापि रहस्यकृतपापिनः ॥ ब्रह्मयज्ञविहीनस्य दुःशास्त्रनिरतस्य च । गुरुनिंदादिश्रोतुश्च गुरुद्रव्यापहारिणः । नरा-

र्णां च विशेषेण प्रायश्चित्तं व्रत वद ॥ वसिष्ठ उवाच । शृणु गोप्यातिगोप्यं च व्रतानामुत्तमं व्रतम् । चतुर्वेदैः पुराणैश्च स्मृतिभिर्मैव निश्चितम् ॥ ब्रह्महत्यादिपापानां प्रायश्चित्तं यदीच्छसि ॥ सकलीकरणानां च मलिनीकरणस्य च ॥ अपात्रीकरणानां च प्रायश्चित्तं यदीच्छसि । भ्रातृपत्नीसुताना च गामिनः कामिनस्तथा ॥ श्वश्रूमातृवधूनां च इच्छयागामिनस्तथा । तदा लक्षनमस्कारं व्रत कुरु महीपते ॥ संध्याकर्मादित्यागस्य चांडालीगामिनस्तु वै । दासीवेश्याप्रसंगिनश्च क्षयं च यदि वांछसि ॥ शृणु भूप विधिं वक्ष्ये स्मरणात्पापनाशनम् । चातुर्मास्ये तु संप्राप्ते केशवे शयनं गते ॥ आषाढस्य सिते पक्षे एकादश्यां समाहितः । संकल्पं तु विधायादौ पुरतश्चक्रपाणिनः ॥ अहं लक्षनमस्कारव्रतं कर्तुं समुद्यतः । निर्विघ्नं त्वत्प्रसादेन कुरु त्वं कृपया हरे ॥ पापपंके निमग्नं मां पापरूपं दुरासदम् । व्रतेनानेन सुप्रीतो समुद्धर जगत्पते ॥ इति संकल्प्य मनसा प्रारभेद्व्रतमुत्तमम् । विष्णोर्वाऽथ सवित्रे वा नमस्कारान्प्रयत्नतः ॥ प्रातः स्नात्वा सदा कुर्यान्मध्याह्नावधि वाग्यतः । यथासंख्यां प्रकुर्वीत कार्तिके तु समापयेत् ॥ दुष्टशाकमयान्नं वा न भुंजीत कदाचन । अनृतं न वदेत्क्वापि न ध्यायेत्पापपूरुषम् । देवार्चनं जप होमं न त्यजेत्तु कथंचन । अतिथीन्पूजयेन्नित्यं यथाशक्त्या तु कारयेत् ॥ कार्तिके मासि संप्राप्ते पौर्णमास्यां ततःपरम् । संस्थाप्य कलशं पूर्णं सवस्त्रं सपिधानकम् ॥ विष्णोश्च प्रतिमां कुर्यात्सत्सूर्यस्यापि स्वर्णजाम् । नामभिः केशवाद्यैश्च मित्राद्यैश्च प्रपूजयेत् । परमान्नं च नैवेद्यं कुर्यात्पश्चाच्च तर्पणम् ॥ पौरुषेण च सूक्तेन तिलगोधूमतंदुलैः । देवदेव जगन्नाथ सर्वक्रतुफलप्रद ॥ व्रतेनानेन सुप्रीतो गृहाणार्घ्यं मयाऽर्पितम् । एवमर्घ्यत्रयं दद्यात्पश्चाद्धोमं समाचरेत् ॥ पौरुषेण च सूक्तेन शतमष्टोत्तरं चरुम् । आकृष्णेनेति सूर्यार्थं शतमष्टोत्तरं हुनेत् ॥ होमशेषं समाप्याथ पूर्णाहुतिमतःपरम् । आचार्यं पूजयेत्पश्चाद्गुणं विंशतिर्वस्त्र च ॥ दक्षिणां च

यथाशक्त्या मंडलं चैव दापयेत् । अनुज्ञातस्तु तत्रैव स्वयं भुंजीत बंधुभिः ॥ इदं पुण्यं व्रतं राजन्पापारण्यदवानलम् । सर्वकामप्रदं नृणां सद्यो विष्णुप्रियंकरम् ॥ मोक्षप्रदं च कर्तॄणां ज्ञानमार्गप्रदं शुभम् । नानेन सदृशं किंचित्रिषु लोकेषु विद्यते ॥ सर्वेषामाश्रमाणां च विहितं श्रुतिचोदितम् । नारीणां सधवानां च विधवानां विशेषतः ॥ इति श्रीभविष्यपु० सूर्यविष्णुलक्षनमस्कारोद्यापनं संपूर्णम् ॥ ॥ अथ मंगलागौरीव्रतम् ॥ विवाहात्प्रथमं वर्षमारभ्यापंचवर्षकम् । श्रावणे मासि भौमेषु चतुर्षु व्रतमाचरेत् ॥ प्रथमे वत्सरे मातुर्गेहे कर्तव्यमेव च । ततो भर्तृगृहं कार्यमवश्यं स्त्रीभिरादरात् । पंचमे वत्सरे प्राप्ते कुर्यादुद्यापनं शुभम् ॥ ॥ अथ पूजाविधिः ॥ अद्येत्यादिदेशकालौ संकीर्त्य मम पुत्रपौत्रादिवृद्ध्ये अवैधव्यायुरादिसकलसिद्धिद्वारा श्रीशिवमंगलागौरीप्रीत्यर्थं पंचवर्षपर्यंतं[1] मंगलागौरीव्रतं करिष्ये । तदंगत्वेन गणपतिपूजनं च करिष्ये । कुंकुमागरुलिप्तांगां सर्वाभरणभूषिताम् । नीलकंठप्रियां गौरीं वंदेऽहं मंगलाह्वयाम् । ध्यानम् ॥ अत्रागच्छ महादेवि सर्वलोकसुखप्रदे । यावद्व्रतमहं कुर्वे पुत्रपौत्रादिवृद्धये । आवाहनम् ॥ रौप्येण चासनं दिव्यं रत्नमाणिक्यशोभितं । मयानीतं गृहाण त्वं गौरि कामारिवल्लभे । आसनम् ॥ गंधपुष्पाक्षतैर्युक्तमर्घ्यं संपादितं मया । गृहाण मंगले गौरि सर्वान्कामांश्च पूरय । पाद्यम् ॥ गंधपुष्पाक्षतैर्युक्तमर्घ्यं संपादितं मया । गृहाण पुत्रपौत्रादीन्प्रसन्ना भव सर्वदा । अर्घ्यं ॥ कामारिवल्लभे देवि कुर्वाचमनमंबिके । निरंतरमहं वंदे चरणौ तव पार्वति । आचमनीयम् ॥ पयो दधि घृतं चैव मधु शर्करया समम् । पंचामृतेन स्नपनात्प्रीयतां परमेश्वरी । पंचामृतम् ॥ जाह्नवीतोयमानीतं शुभं कर्पूरसंयुतम् ॥ स्नापयामि सुरश्रेष्ठे त्वां पुत्रादिफलप्रदाम् । स्नानम् ॥ आचमनीयम् । वस्त्रं च सोमदैवत्यं लज्जायास्तु निवारणम् । मया निवेदि-

१ पंचवर्षपर्यंतमित्यत्र प्रतिवार्षिकपूजायां । "पूर्वांगीकृतमंगलागौरीव्रतांगत्वेन पूजनमहं करिष्ये इति संकल्पः"

त भक्त्या गृहाण परमेश्वरि । वस्त्रम् ॥ कञ्चुकीमुपवस्त्रं च नानारत्नैः समन्वितम् । गृहाण त्वं मया दत्तं पार्वति जगदीश्वरि । कंचुकीवस्त्रम् ॥
कुंकुमागरुकर्पूरचंदनं कस्तुरीं तथा । विलेपनं महादेवि गंधं दास्यामि भक्तितः । गंधम् ॥ रंजिताः कुंकुमौघेन अक्षताश्चातिशोभनाः । म
मैषां देवि दानेन प्रसन्ना भव पार्वति । अक्षतान् ॥ हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितम् । सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ।
सौभाग्यद्रव्याणि । सेवंतिकाबकुलचंपकपाटलाब्जैः पुंनागजातिकरवीररसालपुष्पैः । बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि
जगदीश्वरि मे प्रसीद । पुष्पाणि ॥ आपामार्गस्य पत्रैश्च दूर्वाधत्तूरसंज्ञकैः । षोडशैर्बर्वसख्याकैर्बिल्वपत्रादिपत्र च ॥ इति पत्रपूजा कार्या ॥
॥ अथांगपूजा ॥ उमायै नमः पादौ पू० । गौर्यै न० जंघे पू० । पार्वत्यै न० जानुनी० । जगद्धात्र्यै० ऊरू० । जगत्प्रतिष्ठायै० कटी० । शांतिरू
पिण्यै० नाभिं० । देव्यै न० उदरं० । लोकवंद्यायै० स्तनौ० । कान्त्यै० कंठं० । शिवायै० मुखं० । भवान्यै० नेत्रे० । रुद्राण्यै० कर्णौ० । म-
हादेव्यै० ललाटं० मंगलदात्र्यै० शिरः० । पुत्रदायिन्यै० सर्वांगं पू० ॥ देवद्रुमरसोद्भूतो कृष्णागरुसमन्वितः । आघ्रेयः सर्वदेवानां धूपोयं प्र
तिगृह्यताम् । धूपम् ॥ त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् । आत्मज्योतिः परधाम दीपोयं प्रतिगृह्यताम् । दीपम् ॥ अन्नं चतु
र्विधं स्वादु रसैः षड्भिः समन्वितम् । भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् । नैवेद्यम् । आचमनीयम् । करोद्वर्तनम् । फलम् । तांबूल
म् । दक्षिणाम् । वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितम् । पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम् । भूषणम् ॥ नीराजनम् । नमो देव्यै० ।
पुष्पांजलिम् ॥ प्रदक्षिणाः । नमस्कारान् ॥ पुत्रान्देहि धनं देहि सौभाग्यं देहि मंगले । अन्यांश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते । इति
प्रार्थना ॥ ततो वैणवपात्रे तु सौभाग्यद्रव्यमाक्षिपेत् । अन्नं कंचुकिसंयुक्तं सवस्त्रं फलदक्षिणम् ॥ वायनं गौरि विप्राय ददामि प्रीतये

तव । सौभाग्यारोग्यकामानां सर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थं वायनं ते ददाम्यहम् । इति मंत्राभ्यां वायनम् ॥ ताम्रे वा वैणवे पात्रे सौभाग्यद्रव्यमाक्षिपेत् । लड्डुकंचुकिसंयुक्तं सवस्त्रफलदक्षिणम् । मात्रे सुवासिनीभ्यश्च देयं वायनमुत्तमम् ॥ जननीं मातृसंबंधिस्त्रियः षोडश भोजयेत् । नीराजनं ततः कुर्याद्दीपैः षोडशसंख्यकैः ॥ भोक्तव्या दीपिकाश्चाथ स्त्रीभिः सह स्वयं ततः । अन्नं लवणवर्ज्यं तु मौनेन भोजयेत्स्वयम् ॥ सुवासिनीश्चापि तथा वस्त्रालंकारभूषणैः । पूजयेच्च ततः पश्चात्कुर्याद्गौरीविसर्जनम् ॥ विप्राय प्रतिमा देया रत्नवस्त्राणि भूरिशः । एवं कृते विधानेस्मिन्नार्यैवैधव्यमाप्नुयात् ॥ इति मंगलागौरीपूजाविधिः ॥ ॥ अथ कथा ॥ युधिष्ठिर उवाच । नंदनंदन गोविंद शृण्वतो बहुलाः कथाः १ । श्रुता, उत्कृष्टपुत्रायुष्करं श्रावय मे व्रतम् । श्रीकृष्ण उवाच । अवैधव्यकरं वक्ष्ये व्रतं चारिनिषूदन । शृणु त्वं सावधानः सन्कथां वक्ष्ये पुरातनीम् २ कुंडिनं नाम नगरं ख्यातस्तत्र द्विजप्रियः । आसीद्वणिग्धर्मपालो नाम्ना बहुधनोपि सः ३ सपत्नीको ह्यपुत्रोसौ नास्तीति व्याकुलो हृदि । तस्य गेहे भस्मलिप्तो देहे रुद्राक्षधारकः ४ जटिलो भिक्षुको नित्यमागच्छन्प्रियदर्शनः । न स्वीकुर्वत्योदन्नं स इति दृष्ट्वा ऽबला ऽवदत् ५ स्वामिन्नयं सदाऽऽयाति भिक्षुको जटिलो गृहे । न स्वीकरोत्यस्मदन्नमिति दृष्ट्वा ममाधिकम् ६ दुःखं प्रजायते नित्यं, श्रुत्वा भार्या वचोऽब्रवीत् ७ धर्मपाल उवाच । प्रिये कदाचिद्गुप्ता त्वं सस्तुवर्णांगणे भव । यदा भिक्षार्थमायाति भिक्षोर्वस्त्रांतरे त्वया ८ तदा तस्य प्रदेयानि सुवर्णानि प्रियेऽनघे । अनंतरं तस्य भार्या ऽचीकरत्स्वामिनोदितम् ९ जटिलेन तु सा शप्ता ऽपत्यं ते न भविष्यति । श्रुत्वा भिक्षोरिदं वाक्यं दुःखिता तमुवाच ह १० स्वामिन् शप्ता त्वया पापाच्छापादुद्धर संप्रति । इत्युक्त्वा तस्य चरणौ ववंदे दीनभाषिणी ११ जटिल उवाच । भर्तुः समीपे वक्तव्यं त्वया पुत्रि ममाज्ञया ।

नीलवस्त्रः समारुह्य नीलाश्व गच्छ काननम् १२ खनन तत्र कर्तव्य यत्राश्वस्ते स्खलिष्यति । रम्य पक्षिभिरायुक्त मृगसत्द्रुमाकुलम् १३ सुवर्णरचितं रत्नमाणिक्यादिविभूषितम् । नानापुष्पैः समायुक्त द्रक्ष्यं देवालयं ततः १४ वर्तते तत्र भवती भवानी भक्तवत्सला । आराधय त्वं मनसा यथाविघ्नुद्धरिष्यति १५ त्वां भवानीति, वचनं श्रुत्वा भिक्षोः सुखप्रदम् । ववदे तस्य चरणौ पुनः पुनरुवाच ह१६ तदेव काले जटिलो स्वतर्भूतो बभूव सः । साऽवदत्पतिमत्रेहि शृणु भिक्षुकमादरात् १७ यथोक्तमवदन्नर्ता तच्छ्रुत्वा वाक्यमत्रवीत् । नीलवस्त्रः समारुह्य नीलाश्व प्रस्थितो वनम् १८ गच्छन्नानाविधान्वृक्षान्पथि पश्यन्भयाकुलः । मृगान्सिंहान्दंदशूकान्पथि पश्यन्भयाकुल १९ ददर्शासौ तडाग च बाहुल्येन विराजितम् । रक्तनीलोत्पलैश्चक्रवाकद्वंद्वैश्च राजितम् २० स्नानं चकार तत्रासौ तर्पणाद्यपि भूरिशः । पुनरश्व समारुह्य जगाम गहन वनम् २१ स्खलित वाजिन पश्यन्नश्वादुत्तीर्य एव च । खनन पृथिवीं तत्र यावद्देवालयं गतः २२ ददर्श च महास्थूलं देवालयमसौ ततः । रत्नैर्मुक्ताफलैश्चैव माणिक्यैश्चापि सर्वतः २३ पूजयामास जटिलवाक्य स्मृत्वाऽतिविस्मितः सुवर्णयुक्तवस्त्राणि चदनान्यक्षताङ्कुमान् २४ चपकादीनि पुष्पाणि धूपदीपौ विशेषतः । नानापक्वान्नसंयुक्त रसैः षड्भिः समन्वितम् २५ नानाशाकैः समाक्रांत सदुग्धघृतशर्करम् । नैवेद्य करशुद्ध्यर्थं चदन मलयाद्रिजम् २६ सपाद्य मुखवासयः फलतांबूलदक्षिणाः । जजाप मत्रान्सुसोऽसौ सगुणध्यानपूर्वकम् २७ देवी भक्तं तदालोक्य लोभयामास सादरम् । मत्समा ऽवदत्त्रेय पूजा संपादिता कथम् २८ येन सपादिता तस्मै ददामि वरमद्भुतम् । इति श्रुत्वा धर्मपालो देव्यग्रे प्रांजलिः स्थितः २९ भगवत्युवाच । धर्मपाल त्वया मय्यद्य पूजा सपादिता ऽनघ । वरं याचय मत्तस्त्व ददामि बहुलं धनम् ३० धर्मपाल उवाच । नतुक्ता धनसंपत्तिर्वर्तते त्व

त्प्रसादतः । अपत्यं प्राप्तुमिच्छामि पितॄणां तारकं शुभम् ३१ आयाति भिक्षुको गेहे गृह्णाति न मदन्नकम् । तेन मे बहुलं दुःखं सभार्यस्योपजायते ३२ इति दीनवचः श्रुत्वा देवी वचनमब्रवीत् ॥ देव्युवाच । धर्मपालक ते ऽदृष्टे ऽपत्यं नास्ति सुखप्रदम् ३३ तथापि किं याचयसि कन्यां विगतभर्तृकाम् । पुत्रमल्पायुषं वाथाप्यंधं दीर्घायुषं सुतम् ३४ धर्मपाल उवाच । पुत्रमल्पायुषं देहि तावता कृतकृत्यताम् । प्राप्नोमि चोद्धरिष्यामि पितॄंश्च मम घोरगान् ३५ देव्युवाच । मत्पार्श्वे वर्तमानस्य नाभावारुह्य शुंडिनः । तत्पार्श्वकंतिचूतस्य गृहीत्वा फलमद्भुतम् ३६ पत्न्यै देयं ततः पुत्रो भविष्यति न संशयः । इति देवीवचः श्रुत्वा गत्वा तत्पार्श्व एव च ३७ नाभिं गजमुखास्याथारुह्य जग्राह मोहतः । फलान्युतीर्य च ततः फलमेकं ददर्श सः ३८ एवं पुनः पुनः कुर्वन् फलमेकं ददर्श सः । क्षुब्धो गणपतिश्चाथ धर्मपालं स शप्तवान् ३९ षोडशे वत्सरे प्राप्ते अहिः पुत्रं दशिष्यति । धर्मपालः फलं सम्यग्वस्त्रे बध्वा ऽगमद्गृहम् ४० फलं पत्न्यै ददौ सापि भक्षयित्वा पतिव्रता । गर्भं सा धारयामास पत्या सह सुसंगता ४१ संपूर्णे नवमे मासे प्रासूत सुतमुत्तमम् । जातकर्म चकारास्य पिता संतुष्टमानसः ४२ षष्ठीपूजां चकारास्य षष्ठे तु दिवसे ततः । द्वादशे ऽहनि संप्राप्ते शिवनाम्ना ऽऽजुहाव तम् ४३ षष्ठे मासि चकारासावन्नप्राशनमद्भुतम् । तृतीये वत्सरे चूडामष्टमे ऽब्दे ह्यनुत्तमम् ४४ कृत्वोपनयनं पार्थ विप्रो ऽभूत्तुष्टमानसः । दशमे वत्सरे प्राप्ते ऽब्रवीद्भार्या पतिव्रता ४५ भार्योवाच । बालकस्य विवाहोपि कर्तव्यः सुमुहूर्तके ॥ धर्मपाल उवाच । मया संकल्पितं काश्यां गमनं बालकस्य तत् ४६ कृत्वा समायातु ततो विवाहो ऽस्य भविष्यति । पुत्रोसौ प्रेषितस्तेन शालकेन समन्वितः ४७ वाराणस्यां प्रस्थितो ऽसौ गृहीत्वा बहुलं धनम् । कुर्वंतौ पथि सद्धर्मं प्रतिष्ठापुरमीयतुः ४८ क्रीडंत्यः कन्यका दृष्टास्तत्र देशे मनोरमे । तासां समाजे गौरांगी सुशीला नाम क-

न्यता ४९ तया सह सखी काचिच्चकार कलह मृशम् । गालन च ददौ तस्यै रिं ऽभाग्ये मुहुर्मुहुः ५० सुशीलोवाच । सखि त्वया गालनं मे व्यर्थं दत्त शुभानने । जनन्या मे मानवत्याश्चास्ति गौरीव्रत शुभम् ५१ तस्य प्रसादात्सकलाः संविधिन्य प्रियाः स्त्रियः । आजन्माविधवा जाताः किं पुनः कन्यका ध्रुवम् ५२ वक्ष्ये तस्य प्रभाव किं व्रतराजस्य भामिनि । पूजने धूपदीपाय यत्र तत्र सुख भवेद ५३ इति श्रुत्वा ततो वाक्य विस्मयोत्फुल्ललोचनः । मातुर्लम्भितयामास बालकस्य प्रियं ततः ५४ शतजीवो भवेदेप एतद्धस्ताक्षता यदि । पतत्यमुष्य शिरसि इति भाव्य पुनः पुनः ५५ सुशीलामेव पश्यन्स विस्मयोत्फुल्ललोचनः । सुशीला प्रस्थिता गेहे तदनु प्रस्थितावुभौ ५६ स्वगृह प्राप गौरांभी निकटे तद्गृहस्य तौ । सचरागे रम्यदेशे वास चक्रतुरादरात ५७ विवाहकाले संप्राप्ते सुशीलाजनको हरिः । विवाहोद्योगवान् जातो योजयन्न हरं वरम् ५८ असमर्थ हर दृष्ट्वा तन्माता पितरावुभौ । ययाचतुः शिव बध्वांजली विनययुक्तो ५९ वरपितरावूचतुः । उपस्थितो विवाहो नो पुत्रस्य शुभया हरेः । सुशीलया कन्ययाऽयमसमर्थश्च दृश्यते ६० अतो देय शिव श्रीमॉल्लग्नकाले त्वया विभो । लग्नं भविष्यति ततो देयो ऽस्माभिः शिवस्तव ६१ मातुल उवाच । अवश्यं लग्नकाले ऽसौ शिवो ग्राह्यः प्रियंवद । ततो मुहूर्ते संप्राप्ते विवाहमकरोच्छिवः ६२ तत्रैव शयनं चक्रे स सुशीलः प्रियंवदः । स्वप्ने सा मंगला गौरी मातृरूपेण भास्वता । सुशीलामवदत्साध्वी हितं वचनमेव च ६३ गौर्युवाच । सुशीले तव गौरांगि भर्तुर्दशार्यमागतः । महान्भुजग उत्तिष्ठ दुग्धं स्थापय तत्पुरः ६४ घटं च स्थापयाशु त्वं तन्मध्ये स गमिष्यति । कूर्पासमंगान्निष्कास्य बंधनीयस्त्वया घटः[१] ६५ मात-

१ कूर्पासं कंचुकीम् ।

रुत्थाय देहि त्वं मात्रे वायनकं शुभम् । इति गौरीवचः श्रुत्वा सुशीला क्षणमुत्थिता ६६ ददर्शाग्रे निःश्वसंतं कृष्णसर्पं महाभयम् । ततश्चकार गौर्युक्तं प्रवृत्ता निद्रितुं ततः ६७ उवाच वर आसन्नो क्षुल्लभा महती मम । भक्षणायाशु देहि त्वं लड्डूकादिकमुत्तमम् ६८ श्रुत्वेति वाक्यं पात्रे सा ददौ लड्डुकमुत्तमम् । भक्षयित्वा शिवं हैमे तस्मिन्पात्रेंगुलीयकम् ६९ दत्त्वा तत्स्थापयामास स्थले गुप्ते शुभाननः । सुखेन शयनं चक्रे पृथिव्यां सर्वकोविदः ७० ततः प्रभातसमये शिव आगाद्गृहं स्वकम् । स्नानशुद्धा सुशीला सा मात्रे वायनकं ददौ ७१ माता ददर्श तन्मध्ये मुक्ताहारमनुत्तमम् । ददौ प्रियायै कन्यायै सहसा तुष्टमानसा ७२ क्रीडाकाले सुसंप्राप्ते हर आगात्तु मंडपे । आदेशयत्सुशीलां तां क्रीडार्थं जननी ततः ७३ सुशीलोवाच । नायं वरो मे जननि येन पाणिग्रहः कृतः । अनेन सह मनसा क्रीडनेच्छा तथा न मे ७४ इति श्रुत्वा समाक्रांतौ चिंतया पितरौ ततः । अन्नदानमुपायं च विरचेतुरिति द्रुतम् ७५ तदारभ्य चक्रतुस्तौ पुराणोक्तविधानतः । सुशीला पादयोश्चक्रे क्षालनं मुद्रिकान्विता ७६ जलधारां ददौ माता चंदनं पुत्रको हरेः । हरिर्ददौ च तांबूलं बुभुजुस्तत्र मानवाः ७७ इतिरीत्याऽन्नदानं तत्प्रवृत्तं भिक्षुसौख्यदम् । तावुभौ प्रस्थितौ काश्यां प्राप्तौ काशीं सुखप्रदाम् ७८ निर्मलांभसि गंगायाः स्नानं चक्रतुरादरात् । स्वर्गद्वारं प्रस्थितौ तौ कुर्वंतौ धर्ममुत्तमम् ७९ पीतांबराणि ददतुर्भिक्षुकाणां गृहे गृहे । आशिषश्च ददुस्तस्मै चिरंजीवी भवेदिति ८० विश्वेश्वरं समायातौ नत्वा स्तुत्वा पुनः पुनः । स्वयं गृहं प्रस्थितौ तौ शिवो मार्गेऽब्रवीदिदम् ८१ शिव उवाच । काये मे किंचिदस्वास्थ्यं मातुल प्रतिभाति हि । ततः प्राणोत्क्रमे तस्य यमदूता उपस्थिताः ८२ मंगलागौरिका चापि तेषां युद्धमभून्महत् । जित्वा तान्मंगला प्राणान्ददौ तस्मै शिवाय च ८३ शिवोऽकस्मादुत्थितोऽसौ मातुलं प्रत्युवाच ह । स्वप्ने युद्धं म-

पा इटं मंगल्यमभ्युत्ययोः ८४ जितास्ते मगळागौर्या ततो ऽहं शयनच्युतः ॥ मातुल उवाच । यज्जातं शिव तज्जात न स्मर्तव्य त्व
या पुनः ८५ गच्छाव आवा नगरे पितरौ द्रष्टुमुत्सुकौ । प्रस्थितौ तौ ततस्तस्मात्प्रतिष्ठापुरमापतु ८६ रम्ये तडागे तत्रैतौ पाकारम
विचक्रतु । दृष्टौ तौ हरिदासीभिर्धैर्यौदार्यधरौ शुभौ ८७ दास्य ऊचुः । अन्नदान हरेर्गेहे प्रवृत्तं तत्र गम्यताम् ॥ उभावूचतु । भो दा
स्यो पात्रिकावावां गच्छावो न कस्मिंश्चिद्गृहे ८८ इति श्रुत्वा तयोर्वाक्यं दास्यो जग्मुः स्वकं गृहम् । स्वस्वामिनिकटे वाक्यमवदन्सादरं त
दा ८९ सर्वं दासीवच श्रुत्वा तदर्थं प्रभुरादरात् । प्रेषयामास हस्त्यादिरत्नवस्त्राणि भूरिशः ९० तद्दृष्ट्वा विस्मितौ तौ च जग्मतुश्च हरेर्गृ
हम् । हरिर्मातुलमभ्यर्च्य शिवं पूजितुमागतः ९१ क्षाळयंती च सा कन्या चरणौ तस्य सत्रपा । अभूद्वरो मेऽयमिति जननीं प्रत्युवाच
ह ९२ हरि पप्रच्छ साश्चर्यं शिव मगलदर्शनम् ॥ हरिरुवाच । किंचिच्चिह्न तवास्त्यत्र ब्रूहि मे वरदर्शने ९३ शिव उवाच । ममेद चि
ह्नमस्तीह इत्युक्त्वा गृहमागत । तत आनीय तत्पात्रं दर्शयामास सादरम् ९४ तत्पात्रं च ह रिर्दृष्ट्वा कन्यादान चकार सः । ददौ र-
त्नानि वस्त्राणि सुवर्णानि बहून्यपि ९५ तामादाय प्रस्थितौ तौ ददतौ बहुळ धनम् । श्रावणे मा सि सप्रासे व्रत भौमे चकार सा ९६
मुक्त्वा सर्वे प्रस्थितास्ते योजन जग्मुरुत्सुकाः ९७ सुशीलोवाच । गौरीविसर्जनं चापि दीपमानं विशेषतः । कृत्वा गतव्यमस्माभिः पि
तरौ द्रष्टुमादरात् ९८ इत्युक्त्वा आगता यत्र गौर्या आवाहनं कृतम् । ददृशुस्तत्र सौवर्णं देवाळयमनुत्तमम् ९९ गौरीविसर्जन दीपमान
सा च व्यचीकरत् । ततः सर्वे प्रस्थितास्ते पितरौ द्रष्टुमुत्सुकाः १०० कुंडिनासन्नदेशे तान्दृष्ट्वा विस्मयिनो जनाः । अन्नुवंस्ते धर्मपाळं
सोत्कंठं प्रियदर्शनाः १ जना ऊचुः । धर्मपाळाय ते पुत्र समार्यं शाळकं तथा । समायातं ...

नावर्द्दतीत्थं तावत्सोपि समागतः । नमस्कारांश्चकारासौ पितृभ्यां पितृवल्लभः ३ मातुलोपि नतिं चक्रे भगिनीधर्मपालयोः । सुशीला श्वशुरायापि श्वश्रूं नत्वा स्थिता तदा ४ श्वश्रूरुवाच । सुशीले तद्व्रतं ब्रूहि यद्व्रतस्य प्रभावतः । आयुर्वृद्धिः शिशोर्मे हि जाता कमललोचने ५ सुशीलोवाच । न जानेऽहं व्रतं श्वश्रू जाने मानवतीहरौ । श्वशुरं धर्मपालं च श्वश्रूं च भवतीं तथा ६ मंगलां देवतां जाने वरं तु युवयोः सुतम् । इत्युक्त्वा च सुशीला सा बुभुजे स्वांतहर्षिता ७ कृष्ण उवाच । तस्माद्व्रतमिदं धर्मं स्त्रीभिः कार्यं सदैव तु ॥ युधिष्ठिर उवाच । फलमस्य श्रुतं कृष्ण विधानं ब्रूहि केशव ८ कृष्ण उवाच । श्रावणे मासि भौमेषु चतुर्षु व्रतमाचरेत् । प्रातरुत्थाय सुस्नाता संकल्प्य व्रतमुत्तमम् । उपचारैः षोडशभिः पूजयेन्मंगलां तथा ९ युधिष्ठिर उवाच । उद्यापनविधिं ब्रूहि व्रतराजस्य केशव । यतो निरुद्यापनकं व्रतं निष्फलमुच्यते ॥१०॥ कृष्ण उवाच । वदामि व्रतराजस्य स्त्रीणां कर्तव्यमुत्तमम् । प्रथमे वत्सरे मातुर्गेहे कर्तव्यमेव च १११ ततो भर्तृगृहे कार्यमवश्यं स्त्रीभिरादरात् । पंचमे वत्सरे प्राप्ते कुर्यादुद्यापनं शुभम् १२ श्रावणे मासि भौमेषु ह्युद्यापनविधिं चरेत् । प्रातरुत्थाय सुस्नाता संकल्प्योद्यापनं ततः १३ आचार्यं वरयेत्तत्र वेदवेदांगपारगम् । चतुःस्तंभं चतुर्द्वारं कदलीस्तंभमंडितम् १४ घण्टिकाचामरयुतं कारयेन्मण्डपं शुभम् । मध्ये वितानं बध्नीयात्पंचवर्णैरलंकृतम् १५ तन्मध्ये स्थापयेत्पीठं दृषदमुपलं तथा १६ रौप्येण कारयेत्पीठं दंडः कांचननिर्मितः । रौप्यहेम्नोरभावे तु पाषाणस्य विधीयते १७ पीठोपरि न्यसेद्देवीं ततोऽग्रे दृषदं तथा । तस्याग्रे लिंगतोभद्रं लिखेद्रंगैश्च पंचभिः १८ हरिद्रापिष्टकं कृत्वा तन्मध्ये ऽष्टदलं लिखेत् । तस्योपरि न्यसेद्व्रीहीन्द्रोणेन परिसंमितान् १९ सौवर्णं राजतं ताम्रं कलशं विन्यसेद्बुधः । पञ्चरत्नानि निक्षिप्य सर्वौषधिसमन्वितम् १२० तस्योपरि न्यसेत्पात्रं ताम्रं वा वैणवं तथा ।

उमामहेश्वरीं मूर्ति काञ्चनेन विनिर्मिताम् २१ तस्योपरि न्यसेद्धान्यं पूजयेच्छिवमंगलाम् । गृहाणे इति मंत्रेण मूर्तिं पीठोपरि न्यसेत्
२२ तदस्तुमित्रावरुणाइत्यावाहनमाचरेत् । गौरीर्मिमायमंत्रेण पूजयेन्मंगलां पराम् २३ गोधूमोद्भवपिष्टेन कारयेद्दीपमुत्तमम् । कृत्वा
प्रज्वलितो दीपो घृतवर्तिसमन्वितः २४ उपचारैः षोडशभिर्गंधपुष्पादिभिस्तथा । पत्रैः पुष्पैः षोडशभिर्नानाजातैश्च जीरकैः १२५ तण्डुलै
र्धान्यकैश्चैव स्वच्छैः षोडशसंख्यकैः । अपामार्गस्य पत्रैश्च दूर्वाभिश्चतुरपत्रकैः २६ सर्वैः षोडशसंख्याकैर्बिल्वपत्रैश्च पंचभिः । नीराजनं ततः कुर्या
द्दीपैः षोडशसंख्यया २७ मात्रे सुवासिनीभ्यश्च देयं वायनमुत्तमम् । भोक्तव्या दीपकाश्चापि अन्नं लवणवर्जितम् २८ विसर्जनं मंगलाया दीपमा
नं ततः क्रमात् । पंच संवत्सरेष्वेवं कर्तव्यं पतिमिच्छुभिः १२९ ॥ इति म० मंगलागौरीव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ मौनव्रत ॥ नंदिके-
श्वर उवाच । न कथयस्व प्रभावेण व्रतं परमदुर्लभम् । येनासौ वरदो देवस्तन्मे कथय षण्मुख १ स्कंद उवाच । शृणु नंदिन्प्रवक्ष्यामि व्रतं परम
दुर्लभम् । न कस्यचिन्मया ख्यातं त्वामेव कथयाम्यहम् २ येन संचीर्णमात्रेण सर्वपापैः प्रमुच्यते । शाकल्यनगरे रम्ये सोमशर्मा द्विजोत्तमः
३ सर्वदा दुःखितो दीनो द्रव्यहीनो बुभुक्षितः । तस्य कन्याद्वयं जातं सौंदर्यशुभलक्षणम् ४ रूपलावण्यसंपन्ना गृहार्चनरता सदा । ज्ये-
ष्ठा रूपवती नाम कनिष्ठा च सुपर्णिका ५ वत्सानां पालनार्थाय जग्मतुस्ते सरोवरम् । हंसकारंडवैर्युक्तं चक्रसारसमण्डितम् ६ कदलीपा-
रिजातैश्च चंपकैर्बिल्वकैस्तथा । तीरे जलगर्तमध्ये लिंगं तत्रैव स्थापितम् ७ दृष्ट्वाऽर्चनरतानां च अप्सराणां कदंबकम् । आवाहनं कृतं स्नान
ताभिस्तत्र सरित्तटे ८ तत्र रम्यं ददृशतुर्नत्वा पप्रच्छतुश्च ते । क्रियते किमिदमिति ता ऊचुस्ते दयान्विताः ९ अप्सरस ऊचुः । मौनव्रतं महेशस्य
क्रियतेऽस्माभिरुत्तमम् ॥ कृतेनानेन सम्यग्वै सर्वान्कामानवाप्स्यथ । पृच्छतां श्रीमहादेवं सम्यक् कन्यके शिवम् १० षोडशग्रंथिसंयुक्तं करे

बध्वा सुदोरकम् ॥ दूर्वांकुरैः षोडशभिर्देवस्योपरि विन्यसेत् ११ पुष्पाक्षतादिधूपैश्च सर्वं मौनेन कारयेत् । एवं विधिसमायुक्तं पूजयस्व महेश्वरम् १२ नैवेद्यं तु कृतं दानं व्रतं ताभ्यां गृहीतवान् । दध्योदनं च तन्मध्यान्निक्षिप्त्वा च सरित्तटे १३ फलानि पिप्पलबूकं स्वगृहे याति गृह्यताम् । ततः प्रभातसमये नैवेद्यं तु समर्पितम् १४ तत्सर्वं हेम संजातं व्रतस्यास्य प्रभावतः । तद्दृष्ट्वा महदाश्चर्यं पिता तस्याः प्रकंपितः १५ रूपवत्या तदा प्रोक्तं व्रतस्यास्य प्रभावतः । न भेतव्यं त्वया तात गृहीतं तु मया वने १६ द्वितीयेऽह्नि पुनस्ताभ्यां वत्सा नीताः सरित्तटम् । वने तु कन्यके भ्रामंस्तत्र राजा उपागतः १७ प्रतापमुकुरो राजा मृगयासक्तमानसः । श्रांतस्तृषितवान्प्राप्तो यत्रास्ते कन्यकाद्वयम् १८ राजा ह्यपृच्छत्तां कन्ये उदकं तव सन्निधौ । इत्युक्तवति राजेंद्रे रूपवत्या मुदान्वितम् १९ आनीतं शीतलं वारि ओदनं दधिसंयुतम् । ततो भुक्त्वा तु राजाऽसौ परिवारेण संयुतः २० पुनः प्रष्टुं समारेभे कस्य कन्या सुलोचने । रूपवत्युवाच । सोमशर्मा पिता राजन् जानासि यदि वा न वा २१ तस्य कन्याद्वयं राजन्वने चागतवत्यहम् । इत्याकर्ण्य ततो राजा गतवान्मंदिरं प्रति २२ दूतान्संप्रेषयामास कन्यार्थी विप्रसन्निधौ । अथ जग्मुस्ततो दूताः सोमशर्मगृहं प्रति २३ राजा आहूयते शीघ्रं गच्छ विप्र महीपतिम् । ततो गत्वा समं दूतैस्तै राज्ञे सन्निवेदितः २४ राज्ञा तु प्रार्थिता ज्येष्ठा रूपवत्यभिधायिनी । पुण्यमाणवकाख्याय कनिष्ठा च सुपर्णिका २५ पाणिग्रहस्तदा तत्र जातः कन्यकयोस्तयोः ।देवस्याराधनं त्यक्तं रूपवत्या मदेन च २६ व्रतस्य त्यागदोषेण राज्यलक्ष्मीर्गताऽभवत्। कनिष्ठाया गृहे चैव राज्यं प्राप्तमनुत्तमम् २७ तस्या वेश्मनि संप्राप्ता ज्येष्ठा भिक्षुगृहं प्रति । तां दृष्ट्वा दुःखिता जाता कनिष्ठा प्रत्युवाच ह २८ किमिदं तव दारिद्र्यं राज्यं कुत्र गतं तव।साब्रवीत्परसैन्यैश्च सर्वं जित्वा दुरात्मभिः२९ हृतं सर्वस्वमस्माकं तन्नास्ति इति भुज्यते। व्रतभंगप्रभावेण दारिद्र्यं समु-

पागतम् ३० इत्याकर्ण्य सुपर्णा सा घनकुंभं ददौ तदा। घनकुंभं गृहीत्वा सा ज्येष्ठागच्छद्गृहं प्रति ३१ मार्गे चौरैस्ततो नीतो घनकुंभो मनोहर
दुःखं तदा तु संप्राप्त शोकाकुलितमानसा ३२ कनिष्ठाया गृहं पश्चाज्जगाम अतिदुःखिता। पुनर्ददर्श तां ज्येष्ठां करुणासक्तमानसः ३३ वंशय-
ष्टिं समादाय तस्यां स्वर्णं निधाय च। ददौ ज्येष्ठां सुपर्णा सा विससर्ज गृहं प्रति ३४ शनैः शनैस्तां गच्छंतीं चोरास्तत्र समागताः।
वंशयष्टिं गृहीत्वा ते जग्मुस्तत्र यथागतम् ३५ ज्येष्ठा तु शोकसंपन्ना सुपर्णां समुपागतम्। दुःखं वक्तुं समारेभे कुपितः शंकरो मम ३६
सुपर्णा तद्वच श्रुत्वा नत्वा शंकरमब्रवीत् ॥ सुपर्णोवाच। धन्याऽहं कृपया देव यदालोकितवानसि ३७ त्वत्प्रसादान्महादेव मुच्यते कर्म
बंधनात्। रक्ष रक्ष जगन्नाथ त्राहि मां भवसागरात् ३८ सुपर्णां देवदेवेशो माभैर्माभैरमापत। पुनः सुपर्णा इत्याह श्रूयतां जगदी
श्वर ३९ ज्येष्ठा मे भगिनी पापा व्रत त्यक्तं तवेश्वर। रक्षितव्या जगन्नाथ यदि तुष्टोसि शंकर ४० ईश्वर उवाच। त्वद्भगिन्या त्वज्ञानतया
व्रतभंगो महान्कृतः। सर्वं तदस्तु संपूर्णं त्वद्भक्तया मत्प्रसादतः ४१ इत्युक्त्वा देवदेवेशो राज्यं दत्त्वा दिवं ययौ। पुनर्व्रतप्रभावेण राज्य
प्राप्तं मनोरमम् ४२ नंदिकेश्वर उवाच। देव केन प्रकारेण व्रतस्योद्यापनं वद। कथ्यतां श्रीमहाभाग व्रतसंपूर्णहेतवे ४३ स्कंद उवाच॥
वर्षे षोडशसंपूर्णे कुर्यादुद्यापनं बुधः। आदौ मध्ये तथा चांते कुर्यादुद्यापनं ततः ४४ मासे भाद्रपदे शुक्ले पक्षे प्रतिपदातिथौ। मंडपं का
रयेत्तत्र कदलीस्तंभमंडितम् ४५ नानापुष्पैश्च शोभाढ्यं मसरं तत्र कारयेत्। तन्मध्ये लिंगतोभद्रं पंचरंगैः समन्वितम् ४६ कलशं स्था-
पयेत्तत्र हेमपात्रसमन्वितम्। भवानीसहितं शंभुं सुवर्णेन च कारयेत्। पुष्पैर्धूपैश्च दीपैश्च नानाफलसमन्वितम् ४७ फलानि पिष्टपका
नि दद्याद्विप्राय षोडश। तांबूलं दक्षिणोपेतं यथाशक्त्या तु दापयेत् ४८ प्रसीद देवदेवेश चराचरजगद्गुरो। ईशानाय नमस्तुभ्यं व्योमरूपा-

पिन्नमोस्तु ते ४९ इति क्षमाप्य देवेशं भक्त्या तत्परमानसः । रात्रौ जागरणं कुर्याद्गीतवाद्यादिमंगलैः ५० ततः प्रभाते उत्थाय स्नानं कृत्वा विधानतः । होमस्तत्र प्रकर्तव्यो तिलाज्येन समन्वितः ५१ मूलमंत्रेण होतव्यमष्टोत्तरशतं बुधैः । आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः ५२ धेनुं दद्यात्सवत्सां च वस्त्रालंकारसंयुताम् । पयस्विनीं कांस्यदोहां नानालंकारसंयुताम् ५३ ततः शैवान्प्रपूज्याथ षोडशैस्तांस्तपोधनान् । कौपीनास्तु प्रदातव्यास्तथा दद्यात्कमंडलून् ५४ भक्त्या क्षमाप्य तान्सर्वान्व्रतसंपूर्णहेतवे । भोजनं तत्र दातव्यं लेह्यपेह्यसमन्वितम् ५५ दक्षिणां च ततो दद्याद्वित्तशाठ्यं न कारयेत् । एवं विधिसमायुक्तः करोति व्रतमुत्तमम् ५६ राज्यं च लभते लोके पुत्रपौत्रैः समन्वितः । सर्वपापविनिर्मुक्तः सर्वदोषविवर्जितः ५७ भुक्त्वा भोगान्यथाकाममंते गच्छेत्परं पदम् । लभते परमां मुक्तिं शिवलोके महीयते५८॥इति श्रीभविष्यपु० मौनव्रतकथोद्यापनं संपूर्णम्॥ ॥ अथ पंचधान्यलक्षपूजा लिख्यते ॥ देव्युवाच। देवदेव जगन्नाथ भवसागरतारक। सर्वकारण देवेश सर्वसिद्धिप्रदायक ॥ अहमेकं महागुह्यं प्रष्टुमिच्छामि शंकर। प्राप्ताऽहं केन पुण्येन त्वामाशु कथयस्व मे ॥ ईश्वर उवाच। शृणु देवि प्रवक्ष्यामि पृष्टं यत्तु त्वया प्रिये। पुण्यापुण्यतरं श्रेष्ठमिह मोक्षप्रदायकम् ॥ त्वया यल्लक्षपूजाख्यं कृतं तत्पूर्वजन्मनि ॥ तेन प्राप्तासि मां देवि सर्वैश्वर्यानुभाविनि॥ पार्वत्युवाच। महाश्चर्यकरं गुह्यं देवदेव जगत्पते। विस्तरेण च तत्सर्वमाशु मे कथय प्रभो ॥ ईश्वर उवाच। धान्यानां वै लक्षपूजाविधिं वक्ष्ये च पार्वति। लोकानामुपकारार्थं सर्वसंपत्करं शुभम्॥ श्रावणे कार्तिके वापि माघे वा माधवेपि वा। शुभे वाऽप्यथवाऽन्यस्मिन्यदा भक्तिः शिवे नृणाम् ॥ चित्तं वित्तं भवेद्यस्मिन्काले चैवार्चयेच्छिवम्। नित्यकर्म समाप्यादौ शुचिर्भूत्वा समाहितः ॥ समभ्यर्च्य विधानेन लक्षपूजां समाचरेत्। पंचाक्षरेण मंत्रेण त्र्यंबकेण तथैव च ॥ शिवनाम्नाऽथवा कुर्यात्पूजनं पार्वतीपतेः। तंडुलानां मुष्टि-

मात्रं मृगीमुद्रा तिलस्य च ॥ ग्रासार्धमात्रमन्नानां यवमष्टोत्तरं शतम् । तथा सैस्याकृते धान्यं समूहं तंडुलादिकम् ॥ यवगोधूममुद्राश्च तंडुला वै तिलाः क्रमात् । पंचधान्यमिति प्रोक्तं शांतिके देवपूजने । तंडुलैश्च प्रकुर्वंति लक्षपूजाविधिं नराः । तेषां स्वर्गं च मोक्षं च प्रददातीह शंकरः ॥ एवं तिलैः प्रकुर्वंति लक्षपूजाविधिं नराः ॥ तेजस्विनो महाभागाः कुलेन च शतेन वै । स्त्रीकामेन प्रकर्तव्यं गोधूमैः पूजनं महत् ॥ उत्तमां स्त्रियमाप्नोति प्रसादाच्छंकरस्य च । पुत्रकामेन कर्तव्यं यवैः पूजनमुत्तमम् ॥ अंते सायुज्यमाप्नोति नात्र कार्या विचारणा । वश्यकामेन कर्तव्यं मुद्गैः पूजनमुत्तमम् ॥ देवदानवगंधर्वा वशीभवंति नान्यथा । पूजां कुर्यात्प्रयत्नेन यथाशक्तो भवेत्तदा ॥ कारयेद्ब्राह्मणद्वारा विधिना सर्वमानवैः । पूजेयं पंचधान्यानां सर्वकामार्थसिद्धिदा ॥ पूजयेत्पार्वतीनाथं भक्तियुक्तेन चेतसा । यं यं चिंतयते कामं तं तं प्राप्नोति मानवः ॥ समाप्तौ धान्यपूजाया उद्यापनविधिं चरेत् । आचार्यं वरयेत्तत्र वेदवेदांगपारगम् ॥ पुष्पमंडपिकां कृत्वा पूजास्थाने समाहितः । सुवर्णप्रतिमां कृत्वा पार्वत्या शंकरस्य च ॥ यथाशक्त्या नंदिनं च रौप्यकेण समन्वितम् । अभिषिंच्य महादेवमुमया सहितं शिवम् ॥ नवांबरे सिते शुद्धे स्थापयेत्पार्वतीपतिम् । समभ्यर्च्य द्विजैः सार्द्धं महापूजां समाचरेत् ॥ यवगोधूममुद्गैश्च तिलैर्हाटकनिर्मितैः । रौप्येण तंडुलं कृत्वा भक्तिभावपुरःसरः ॥ सुवर्णरौप्यधान्यानि कृत्वा शंभोः समर्पयेत् । यत्र धान्यार्पणं क्रिया तत्रैव पूजनं स्मृतम् ॥ लक्षसंख्याकृतं धान्यसमूहं तंडुलादिकम् ॥ सुवर्णरौप्यसहितं ब्राह्मणाय निवेदयेत् ॥ अर्चनस्य दशांशेन ब्राह्मणान्भोजयेत्ततः । तद्दशांशेन वै होमं कुर्याच्चरुतिलाज्यकैः ॥ आचार्यं च सपत्नीकं तोषयेद्दक्षिणादिभिः । अशक्तश्चेन्नरो यस्तु पंचाशत् पंचविंशतिः ॥ शक्तो सत्यां न कुर्याच्चेत्पूजनं निष्फलं भवेत् । ये कुर्वंति नरा भक्त्या शिवपूजां विधानतः ॥ मुक्त्वेह स-

कलान्भोगानंते सायुज्यमेव च । एतत्ते कथितं गुह्यं मम सान्निध्यकारकम् ॥ पुत्रपौत्रधनायुष्यसंपत्तिसुखमेव च । कांता च सुभगा तस्य भवेद्धर्ममतिः सदा ॥ ब्रह्महा मद्यपः स्तेयी तथैव गुरुतल्पगः । सद्यः पूतो भवेल्लक्षपूजनात्पार्वतीपतेः ॥ इति श्रीभविष्यपु० पंचधान्यलक्षपूजोद्यापनं संपूर्णम् ॥ ॥ अथ शिवामुष्टिव्रतं बाल्यावस्थायां स्त्रीणामुक्तं भविष्ये ॥ देव्युवाच । देवदेव जगन्नाथ जगदानंदकारक । कौतुकेनेप्सितं किंचिद्धर्मप्रश्नं करोम्यहम् १ श्रुतानि देवदेवेश व्रतानि नियमास्तथा । तीर्थानि च महंतीनि यज्ञदानान्यनेकशः २ नास्ति मे निश्चयो देव भ्रामिता ऽहं त्वया पुनः । कथयस्व महादेव यद्गोप्यं व्रतमुत्तमम् ३ केन त्वं हि मया प्राप्तस्तपोदानव्रतादिना । अनादिमध्यनिधनो भर्ता चैव जगत्प्रभुः ४ शिव उवाच । श्रृणु देवि प्रयत्नेन व्रतानामुत्तमं व्रतम् । शिवामुष्टयभिधानं च सर्वोपद्रवनाशनम् ५ सुखसंपत्करं चैव पुत्रराज्यसमृद्धिदम् । शंकरप्रीतिजनकं शिवस्थानप्रदायकम् ६ स्वभर्त्रा सह नारीणां महास्नेहकरं परम् । तेन व्रतप्रभावेण प्राप्तमर्धासनं प्रिये ७ इतिहासं पुरावृत्तं श्रृणु वै त्वं समाहिता । पुरा सरस्वतीतीरे विमलाख्या महापुरी ८ तत्र चंद्रप्रभुर्नाम राजा ऽभूद्धनदोपमः । तस्य स्त्री रूपलावण्यसौंदर्यस्मरविभ्रमा ९ स हि चंद्रप्रभू राजा कौतुकेन समन्वितः । माहात्म्यं शिवपूजायाः पत्नीं प्रत्यवदत्तदा १० राजोवाच । महादेवि विशालाक्षि भार्ये बालमृगेक्षणे । राज्ञस्तु कस्यचित्सप्त पुत्रा जाता विशारदाः ११ तेषां मध्ये कश्चिदेकस्तस्य भार्या पतिव्रता । तस्याः काले हि संजातौ द्वौ पुत्रौ लक्षणान्वितौ १२ एका कन्या प्रसूता सा सर्वलक्षणसंयुता । अप्रिया स्वामिने जाता सा राज्ञी वनमागता १३ सा कदाचिद्वनं गत्वा चारयंती गवां गणम् । तत्र शार्दूलवाराहवनमाहिषकुंजरान् १४ दृष्ट्वा भयेन व्यथिता मूर्च्छिता निपपात ह । उत्थाय चैव बभ्राम तृषार्ता विपिनं महत् १५

चकोरचक्रकारण्डवंचरीकशताकुलम् । उत्फुल्लपद्मकह्लारकुमुदोत्पलमण्डितम् १६ राजपत्नी तदा पूर्वं ददर्शाप्सरसां गणम् । समासाद्य सरस्तीरं पीत्वा जलमनुत्तमम् १७ शिवं चोमामर्चयन्तं ददर्शाप्सरसां गणम् । किमेतदिति पप्रच्छ ता ऊचुर्योषितं प्रति १८ शिवामुष्टि व्रतमिदं क्रियते ऽस्माभिरुत्तमम् । सर्वसंपत्करं स्त्रीणां तत्कुरुष्व पतिव्रते १९ राजपत्न्युवाच । विधानं कीदृशं ब्रूत किं फलं चास्य तन्म म । ता ऊचुर्योषितः सर्वा श्रावणे चेंदुवासरे २० प्रारब्धव्यं व्रतमिदं शिवोऽर्च्य पंचवत्सरान् । तच्छ्रुत्वा सापि जग्राह व्रतं नियममान सा २१ चतुर्षु चेंदुवारेषु फलैरन्यैः प्रपूजयेत् । प्रथमे चेंदुवारेऽह्नि पूजयेच्च शिवापतिम् २२ तंडुलैर्गोधूमतिलैर्मुद्गैरन्यैः प्रपूजयेत् । धा न्यानां सार्द्धमुष्टिं च फलैः सह प्रपूजयेत् २३ नारीकेरं मातुलिंगं रंभाकर्कटिसंभवम् । उमामहेश्वरीं मूर्तिं स्थावरीं च प्रपूजयेत् २४ ततस्तद्व्रतमाहात्म्यात्प्रीति प्रियतरा भवेत् । ततः प्राप्य व्रतं भक्त्या शिवमभ्यर्चयेत्सदा २५ पूजयेद्वस्त्रपुष्पैश्च गंधधूपैश्च दीपकैः । ना नाप्रकारैर्नैवेद्यैः पूजयेच्च उमापतिम् २६ रौप्येण तंडुलं कृत्वा नारीकेरेण संयुतम् । गोधूमतिलमुद्गाश्च हाटकेन विनिर्मिताः २७ मातु लिंगं च केरं च कर्कटी सहपूजयेत् । एवंविधैर्धान्यफलैर्मंत्रेणानेन पूजयेत् २८ ॐ नमः शिवाय शांताय पंचवक्त्राय शूलिने । नंदिभृंगिमहा कालगणयुक्ताय शंभवे २९ ब्राह्मणान्भोजयेत्तत्र यथाशक्त्या च भूरिशः । भर्त्रा सह कथां श्रुत्वा भक्तियुक्तेन चेतसा ॥ यं यं चिंतयते कामं तं तं प्राप्नोति भामिनी ३० देव्युवाच । उद्यापनविधिं ब्रूहि शिवामुष्ट्याः सुरेश्वर । भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे ३१ महादेव उवाच । उद्यापनविधिं वक्ष्ये व्रतराजस्य शोभने । यस्यानुष्ठानमात्रेण संपूर्णं हि व्रतं भवेत् ३२ तस्माद्व्रतमिदं देवि स्त्रीभिः क र्तव्यमद्भुतम् । श्रावणे मासि सोमेषु चतुर्षु व्रतमाचरेत् ३३ प्रातरुत्थाय स्नाता संकल्प्य व्रतमुत्तमम् । पंचमे वत्सरे मासे कुर्याद्वृत्या

पर्नं व्रती ३४ चतु स्तंभं चतुर्द्वारं कदलीस्तंभमंडितम् । घंटिकाचामरयुतं कदल्याद्युपशोभितम् ३५ चंदनागरुकर्पूरैर्लेपितं मंडपं शुभम् । मध्ये वितानं बध्नीयात्पंचवर्णैरलंकृतम् ३६ तन्मध्ये स्थापयेल्लिंगं पूजयेच्च उमापतिम् । सुवर्णरूपधान्यैश्च फलैरक्तैश्च पूजयेत् ३७ ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रालंकारभूषणैः । अन्येभ्यो विप्रवर्येभ्यो दक्षिणां च प्रयत्नतः ३८ भूयसीं परया भक्त्या प्रदद्याच्छिवतुष्टये । उद्दिश्य पार्वतीशं च सर्वं कुर्यादतंद्रितः ३९ बंधुभिः सह भुंजीत पतिपुत्रजनैः सह । एवं या कुरुते नारी व्रतराजं मनोहरम् ४० सौभाग्यमखिलं तस्याः सप्तजन्मस्वसंशयः । एतत्ते कथितं देवि तवाग्रे व्रतमुत्तमम् ४१ कोटियज्ञकृतं पुण्यमस्यानुष्ठानमात्रतः । जायते नात्र संदेह ऋषिभिः परिकीर्तनात् ४२ ये शृण्वंति त्विमां भक्त्या कथां पापहरां शुभाम् । व्रतजं प्राप्नुवंतीह तेऽपि पुण्यं न संशयः ॥४३॥ इति श्रीभविष्यपुराणे गौरीशंकरसंवादे शिवामुष्टिव्रतकथोद्यापनं संपूर्णम् ॥ ॥अथ हस्तिगौरीव्रतं लिख्यते॥ कुंत्यां वनादुपेतायां करिणापुरमुत्तमम् । मानितायां नरेंद्रेण तनयैः पंचभिः सह १ तस्याः कुशलमन्वेष्टुमाजगाम स माधवः । अभिवंद्य सुखासीनं देवदेवं जनार्दनम् ॥ उवाच कुंती सानंदा सम्यक्प्रश्नमिदं वचः २ कुंत्युवाच । धन्यास्मि कृतकृत्यास्मि सनाथास्मि परंतप । अहं संभाविता यस्मात्त्वया यदुकुलेश्वर ३ यदि मे सुप्रसन्नोसि तदाचक्ष्व व्रतं प्रभो । यद्विधानात्सुखं राज्यं प्राप्नुयां तनयैः सह ४ कृष्ण उवाच । कुंति ते कथयिष्यामि व्रतानामुत्तमं व्रतम् । यत्कृत्वा सुखसंतानधनधान्यसमन्विता ५ विधूतदुष्कृता पुण्या सपुत्रा राज्यमाप्स्यसि । हस्तिगौरीव्रतं भद्रे कुरुष्व स्वस्थमानसा ६ यत्कृत्वा भक्तिभावेन लभ्यते वांछितं फलम् ॥ कुंत्युवाच । यदुक्तं ते व्रतं नाथ विधानं तस्य कीदृशम् ७ केन पूर्वं कृतं वीर तन्मे ब्रूहि जनार्दन ॥ श्रीकृष्ण उवाच । कैलासशिखरे पूर्वं हस्तसंस्थे दिवाकरे ८ दिवा प्रस्वपिता गौरी

स्वप्ने शंभुं ददर्श ह । अर्धदेहं वृषार्धेन अर्धचन्द्रकलान्वितम् ९ प्रबुद्धा सा तदा गौरी शिवसन्निधिमागमत् । प्रणम्य देवदेवेशमिदमाह
शुचिस्मिता १० देव खण्डितदेहोऽय स्वप्ने दृष्टस्तव प्रभो । किमिदं तन्ममाचक्ष्व तप्यते मानसं मम ११ ईश्वर उवाच । देवि पूर्वं निपि
दोऽस्ति हस्तनक्षत्रगते रवौ । स्वापः सुविहितस्तत्र दृष्टं तस्य फलं त्वया १२ शृणु देवि त्वया ऽनेन खण्डितोऽहं विलोकिता । त्वयाऽऽरब्धव्रत
देवि ममाराधनकाम्यया १३ अपूर्णं च त्वया त्यक्तं मम नापि समर्पितम् । अपूर्णव्रतभावेन दृष्टोऽहं तादृशस्त्वया १४ तत्कुरुष्वाधुना
देवि हस्तगौरीव्रतं शुभे । येन पूर्णव्रता नारी सपूर्णव्रततामियात् १५ लभते सर्वसंपत्तिं पुत्रपौत्रसुखानि च १६ देव्युवाच । आरभ्यते
व्रतं नाथ विधानेन महेश्वर । आरंभोऽस्य कदा कार्यं को विधिः कस्य पूजनम् १७ ईश्वर उवाच । यस्मिन्नहनि हस्तर्क्षे उदयं प्राप्यते
रविः । तस्मिन्कुर्यात्प्रयत्नेन सौवर्णं कुंभरोत्तमम् १८ कांचनी प्रतिमा गौर्या हेरंबस्य हरस्य च । तस्योपरि निधातव्या सर्वालंकारभू
पिता १९ अ वहं कांचनैः पुष्पैः पूजा मुक्ताफलैः शुभैः । नैवेद्यैश्चंदनैश्चैव शृणुयात्सत्कथां कथाम् २० ॥ दिने चतुर्दशे प्राप्ते सुस्नाता
शुचिमानसा । शुक्लवस्त्रधरा दांता भावनेऽर्घ्यं निवेद्य च २१ पूजागृहे सुसंलिप्ते स्थापयेत्प्रतिमां शुभाम् । स्वर्णभाजनयुग्मं च
पक्वान्नैः पाचितैः शुभैः २२ सार्धत्रयोदशमितैर्नैवेद्यमुपकल्पयेत् । फलमूलानि चान्यानि शुभानि समुदाहरेत् २३ पूजयेत्स्वर्णकुसुमैः
पुष्पैर्माल्यैः सुगंधिभिः । देवीं चंदनपुष्पैश्च तथा पत्राक्षतैः शुभैः २४ ध्यायेच्च हृदये गौरीं हरहेरंबसंयुताम् । दक्षिणां च ततो दत्त्वा नत्वा
देवीं विसर्जयेत् २५ सार्धत्रयोदशशतं दीपिकाः श्राद्धयान्विताः । पतिवत्यै स्त्रियै दद्यात्तावती स्वयमाहरेत् २६ व्रतं समाचरेदेवं यावद्वर्षं त्र
योदश । स्वर्णभाजनयुग्मं च प्रतिवर्षं विसर्जयेत् २७ ततश्चतुर्दशे वर्षे उद्यापनमाचरेत् । हेरंबशंभू गौरी च कांचनी मण्डपके २८ पूर्वो

क विधिना पूज्या वासराणि त्रयोदश। चतुर्दशदिने प्राप्ते संयुता प्रातरुत्थिता २९ कृतोपवासनियमा सुस्नाता शुद्धवेश्मनि। स्थापयित्वा ततो देवीं नक्तं कुर्यात्ततो ऽर्चनम् ३० सप्तविंशतिपात्राणि पूर्वोक्तेन विधानतः। पूर्वोक्तमेव पक्वान्नं विन्यसेच्च पृथक्पृथक् ३१ अन्यानि फलमूलानि पक्वान्नानि च कल्पयेत्। धूपदीपाक्षतैः पुष्पैश्चंदनैर्वरवाससा ३२ भक्त्या समर्पयेद्देवीं प्रतिमां प्रतिपादयेत्। स्वं कथं पूजयामीति मा त्वं चित्ते व्यथां कुरु ३३ अनादिव्रतमेतद्धि नात्र कार्या विचारणा॥ देव्युवाच। सौवर्णी प्रतिमा हस्तिपात्रपुष्पाणि कल्पितुम् ३४ यस्या न शक्तिः सा नारी कथं कुर्याद्व्रतं विभो॥ ईश्वर उवाच। अशक्तो मृद्गजः कार्यः प्रतिमा चापि मृन्मयी ३५ पात्राणि वेणवान्येव पुष्पाणि ऋतुजानि च। अक्षतैस्तंडुलैश्चैव श्रद्धया फलमाप्यते ३६ श्रीकृष्ण उवाच। ततश्चक्रे व्रतं गौरी ह्यलभद्वांछितं फलम्। पूर्णव्रता च सा जाता भाग्यसौभाग्यसंयुता ३७ त्वमप्येतद्व्रतं कुंति कुरु श्रद्धासमन्विता। अथ हस्तिव्रतं कुंती साभिमानाऽकरोद्व्रतम् ३८ गांधारी चापि तच्छ्रुत्वा चक्रे तद्व्रतमादरात्। तस्याः पुत्रशतैश्चापि आनीता शुभमृत्तिका ३९ कृत्वा वारणगां गौरीं सपुत्रां सशिवां तथा। व्रतं त्वरितमारेभे निशाम्य च विषादिनी ४० तच्छ्रुत्वा शोकसंतापो कुंत्याऽभून्मानसो ज्वरः। कुंती वाक्यमुवाचेदं गांधारी पुण्यकारिणी ४१ यस्याः पुत्रशतं शक्तं शासने वर्तते सदा। मम पंच सुतास्तेपि न शक्ताः क्वापि कर्मणि ४२ श्रुत्वा तदर्जुनः प्राह मा मातर्विमना भव। किं मृदः प्रतिमा कार्या त्वरया समुपाहरेत् ४३ साक्षादिह हरं गौरीं ऐरावतमिभाननम्। कृत्वा तं पूजनं मातः सम्यक्फलमवाप्स्यसि ४४ इत्युक्त्वा त्वरितं पार्थो गंगातीरं समाहितः। तत्र तुष्टाव गौरीशं सूक्तैः स्तुतिसमीरितैः ४५ तस्य तुष्टो ऽभवच्छंभुः समायाचे वरं ततः॥ अर्जुन उवाच। देवदेव गजासीन गौरीहेरंबसंयुतः ४६ गृह्याण पूजामागत्य मम मातुर्गृहे भव। तथेत्युक्त्वा ऽऽलयं

तस्य तद्दिशो हर आगत ४७ साष्टांगं प्रणता गौरीं कुंती पूजामथाकरोत् । पंचोपचारैः संपूज्य नैवेद्यादिभिरुत्तमैः ४८ तुष्टा च भ
क्तिभावेन सा गौरी च ततोऽब्रवीत् । कुंति ते परितुष्टाऽस्मि वरं वरय सुव्रते ४९ कुंत्युवाच । देहि मे सर्वसंपत्तिं सर्वसौख्यं सदोत्सव
म् । प्रयच्छ मम पुत्राणां सदा राज्यमनामयम् ५० ममास्त्वव्याहता भक्तिस्त्वयि जन्मनि जन्मनि । व्रतमेतत्तु यः कुर्यात्तव लोकमवा-
प्नोति ५१ न दारिद्र्यं न वैधव्यं न शोको नापि दुष्कृतम् । कृच्छ्रं नापत्ननमिदं कदाचित्संभविष्यति ॥ तथेत्युक्त्वा ततो गौरी सगजां
तरधीयत ५२ एतद्व्रतं सकलदुःखविनाशदुःखं सौभाग्यराज्यफलसाधनमाचरंत्यः । या योषितः सुखमनंतमिहोपभुज्य गौरीसमीपमुपयांति
हि देहनाशे ५३ ॥ इति श्रीभविष्योत्तरपु० हस्तिगौरीव्रतकथोद्यापनं संपूर्णम् ॥ ॥ अथ हस्तिगौरीपूजा ॥ देशकालौ संकीर्त्य । ममेहज-
न्मनि जन्मांतरे चाखंडसौभाग्यप्राप्तये पुत्रपौत्रराज्यकामनया हस्तिगौरीव्रतांगत्वेन गौरीमहेश्वरप्रीत्यर्थं हेरंबसमेतगौरीपूजनं करिष्ये । तदं-
गत्वेन गणपतिपूजनं स्वस्तिवाचनं आचार्यादिवरणं च करिष्ये इति संकल्प्य ॥ हस्तिगौरीं सदा वंदे हृदये भक्तवत्सलाम् । शिवांगार्धस्थि-
तामेकदंतपुत्रेण शोभताम् । ध्यायामि ॥ आगच्छ भो हस्तगौरि ऐरावतगजोपरि । शंभुना ऽत्र गणेशेन पार्षदैः स्वसखीगणैः । आवा-
हनम् ॥ आसने स्वर्णरत्नाढ्ये सर्वशोभासमन्विते । उपविश्य जगन्मात प्रसादाभिमुखी भव । आसनम् ॥ इदं गंगाजलं सम्यक् सुवर्णकल
शे स्थितम् ॥ पाद्यार्थं ते प्रयच्छामि क्षालयामि पदांबुजे । पाद्यम् ॥ गंधपुष्पाक्षतारक्तपुष्पतोयसमन्वितम् । सुवर्णपात्रे स्वर्णांगि गृहाणार्घ्यं
नमोस्तु ते । अर्घ्यम् ॥ कर्पूरैलामृगमदैः सुवासैरुपशोभितम् । आचम्यतां महादेवि शिशिरं विमलं जलम् । आचमनम् ॥ नदीनदस-
मुद्भूतं पवित्रं निर्मलं जलम् । स्नानार्थं ते प्रयच्छामि प्रसीद जगदंबिके । स्नानम् ॥ पंचामृतेन स्नपनं करिष्ये भक्तवत्सले । पयो दधि

घृतं चैव माक्षिकं शर्करायुतम् । पंचामृतस्नानम् ॥ मंदाकिन्याः समानीतं हेमांभोरुहवासितम् । स्नानार्थं ते मयानीतं गृहाण जगदंबिके । शुद्धोदकस्नानम् ॥ कौशेयं वसनं दिव्यं कंचुकया च समन्वितम् । उपवस्त्रेण संयुक्तं गृहाण परमेश्वरि । वस्त्रम् । यज्ञोपवीतम् ॥ इदं गंधं महद्दिव्यं कुंकुमेन समन्वितम् । विलेपनं मया दत्तं गृहाण वरदा भव । गंधम् ॥ कज्जलं चैव सिंदूरं हरिद्राकुंकुमानि च । भक्त्याऽर्पितं मया गौरि सौभाग्यं च गृहाण भो । सौभाग्यद्रव्याणि ॥ नानाविधानि माल्यानि सुगंधीनि हरिप्रिये । गृहाण सुमनानीशे प्रसादाभिमुखी भव । पुष्पाणि ॥ धूपं मनोहरं दिव्यं सुगंधं सुमनोहरम् । दशांगसहितं देवि धूपं मे प्रतिगृह्यताम् । धूपम् ॥ दीपं तमोहरं ज्योत्स्नं ज्ञानसंबोधकं सदा । दीपं गृहाण मातस्त्वमपराधशतापहे । दीपम् ॥ नानाविधानि भक्ष्याणि व्यंजनानि हरिप्रिये । गृहाण देवि नैवेद्यं सुखदं सर्वदेहिनाम् । नैवेद्यम् ॥ गंगोदकं समानीतं मयाऽऽचमनहेतवे । तेनाचम्य महादेवि वरदा भव चंडिके । आचमनीयम् ॥ करोद्वर्तनम् ॥ रंभाफलं दाडिमं च मातुलिंगं च खर्जुरम् । नारीकेरं च जंबीरं फलान्येतानि गृह्यताम् । फलानि ॥ पूगीफलमिति तांबूलम् । हिरण्यगर्भेति दक्षिणा ॥ नीराजयामि देवेशि कर्पूराद्यैश्च दीपकैः । गृहाण मंगलान् दीपान् वरदा भव शोभने । नीराजनम् ॥ यानिकानिचपा० । प्रदक्षिणाः ॥ नानाविधानि दिव्यानि बिल्वपत्रयुतानि च । दूर्वांकुरैः संयुतानि ह्यंजलिस्थानि गृह्यताम् । मंत्रपुष्पम् ॥ अपराधस० । नमस्कारः ॥ यस्यस्मृत्येति प्रार्थना ॥ उपायनमिदं० । वायनम् ॥ इति श्रीभ० पु० हस्तिगौरीपूजाविधिः समाप्तः ॥ ॥ अथ कूष्मांडीव्रतं लिख्यते ॥ युधिष्ठिर उवाच । कृष्ण कृष्ण महाभाग ब्रह्मरुद्रादिवंदित । व्रतधर्मास्त्वया प्रोक्ताः श्रुतास्ते सकला मया १ इदानीं श्रोतुमिच्छामि व्रतमेकं कृपानिधे । यत्कृत्वा सर्वपापानि विलयं यांति तत्क्षणात् २ संततिर्वर्द्धेत नित्यं सौ-

भाग्य च धनादिकम् । अल्पायासे महत्पुण्यं सर्वकामसमृद्धिदम् ३ कथयस्वेंदिराकांत कृपा यदि ममोपरि ॥ श्रीकृष्ण उवाच ।
साधु पृष्टं महाराज त्वया कुरुकुलोद्भव ४ वच्मि सर्वं विधानेन तच्छृणुष्व जगद्धितम् । व्रतस्थानां महत्पुण्य कूष्मांडयाख्यानमुत्तमम् ५
तच्छृणुष्व महाभाग स्त्रीणां चापि सुखोदयम् । सर्वसंपत्करं राजन् पुत्रपौत्रप्रवर्धनम् ६ नारदेन समाख्यात चन्द्रसेनाय भूपते ७
आर्यावर्ते पुरा कश्चिच्चंद्रसेनो महीपतिः । नारद परिपप्रच्छ पुत्रपौत्रप्रदं व्रतम् ८ चन्द्रसेन उवाच । देवर्षे सर्वधर्मज्ञ सर्वलोकनमस्कृत । त्व
त्समो नास्ति लोकेषु हितवक्ताऽपरो नृणाम् ९ अथ मद्भाग्ययोगेन संजातं दर्शनं तव । पृच्छाम्येवमिदानीं त्वामात्मश्रेयस्करं परम् १०
दान धर्मं व्रतं वापि वद सत्पुत्रदायकम् । इद राज्य धन वापि विना पुत्रेण मे प्रभो ॥ निष्फलं मुनिशार्दूल कृपया वद मे विभो ११
कृष्ण उवाच । इति तद्वचन श्रुत्वा नारदो मुनिसत्तमः । चन्द्रसेनमुवाचेदं व्रत गोप्य सुरैरपि १२ नारद उवाच । चन्द्रसेन महाभाग सुरुच्या
प्रियया सह । व्रत कुरु मया प्रोक्तं कूष्मांड्याः सर्वसिद्धिदम् १३ यत्कृत्वा सर्वराजेंद्र भविष्यति महाबलाः । सत्पुत्राः परधर्मज्ञा वीर्य
वंतो बहुश्रुताः १४ आयुष्मंतो ऽतिकुशला राज्यपालनतत्पराः ॥ श्रीकृष्ण उवाच । तच्छ्रुत्वा नारदेनोक्त चन्द्रसेनोऽतिधार्मिकः १५ व्रत च-
कार कूष्मांड्याः पुत्राणां प्राप्तये किल । अष्टौ जाताः सुतास्तस्य दिक्पालसमतेजसः १६ सुरूपः सुमुखः शांत सुप्रसादोऽथ सोमकः ।
चन्द्रकेतुः सदानंदः सुतंतुश्च यथा क्रमात् १७ पुत्रैस्तैः सह धर्मात्मा सुरुच्या भार्यया सह । सतोषं परमं प्राप देवब्राह्मणपूजकः । १८ कू
ष्मांडीव्रतमाहात्म्याद्यत्पुरा मनसीप्सितम् । तत्सर्वं प्राप्य राजेंद्रः कृतकृत्यो बभूव ह १९ श्रीकृष्ण उवाच । त्वमपीद व्रत राजन्समा-
चर यथाविधि । द्रौपद्या सह धर्मज्ञ सर्वान्कामानवाप्स्यसि २० युधिष्ठिर उवाच । कर्तव्यं तु कदा कृष्ण विधिं तस्य वदस्व मे । कस्मि-

न्मासे तिथौ कस्यां रोपणीया ऽथवा भवेत् २१ श्रीकृष्ण उवाच । वैशाखस्यासिते पक्षे चतुर्दश्यां नराधिप । शुचौ देशे स्थलं शोध्य कूष्मांडी रोपयेदथ ॥ षण्मासं पूजयेन्नित्यं षण्मंत्रैर्नामभिः सह २२ ब्रह्मणा निर्मितासि त्वं सावित्र्या प्रतिपालिता । ईप्सितं मम देवि त्वं देहि सौभाग्यमेव नः । सौभाग्यायैनमः २३ आषाढे पूजयिष्ये त्वां मातः सर्वसुखाय हि । आशां कुरुष्व सफलां सर्वकामप्रदे नमः । सर्वकामप्रदायैन० २४ श्रावणे पूजयिष्यामि भक्तविघ्ननाशिनि । कूष्मांडीं बहुबीजाढ्यां पुत्रदे त्वां नमोस्तु ते निवा । पुत्रदायैन० २५ भद्रे भाद्रपदे शुभ्रे भद्रपीठोपरि स्थिते । पूजयिष्यामि मातस्त्वां धनदायै नमो नमः । धनदायैनमः २६ आश्विने पूजयिष्यामि बहुबीजप्रपूरिते । कूष्मांडीनामसंयुक्ते फलदे त्वां नमो नमः । कूष्मांड्यैन० २७ कार्तिके पूजयिष्यामि सफलां सकलां शुभाम् । सुखदे शुभदे मातर्मोक्षदे त्वां नमो नमः । मोक्षदायैनमः २८ षण्मासं पूजयेदेवं कूष्मांडीं धर्मनंदन । ततः स्वर्णमयीं कृत्वा कूष्मांडीं सफलां शुभाम् २९ परितः पूजयेद्देवान्लोकपालांश्च मंडले । मंडले पूजयेत्तत्र सर्वतोभद्रदेवताः ३० कूष्मांडीं पूजयेत्कुंभे वस्त्रालंकारभूषिताम् । सौभाग्यद्रव्यसंयुक्तां पुष्पमालाभिरावृताम् ३१ तन्मूले संप्रतिष्ठाप्य चतुर्दश्यां प्रपूजयेत् । मंडपं कारयेत्तत्र तोरणैरुपशोभितम् ३२ चतुर्द्वारसमायुक्तं पताकाभिरलंकृतम् । तन्मूले वेदिकां चैव चतुरस्रां तु कारयेत् ३३ एवं कृत्वा महाराज आचार्यं वरयेत्ततः । सपत्नीकं सुशीलं च वेदवेदांगपारगम् ३४ वरणात्पूर्वमेवेह कारयेत्स्वस्तिवाचनम् । सर्वत्र मंडपं कुर्याद्रंगवल्यामनोहरम् ३५ तदग्रे सर्वतोभद्रं नानारंगैस्तु कारयेत् । अव्रणं कलशं स्थाप्य वस्त्रयुग्मेन वेष्टयेत् ३६ महाफलेन संयुक्तं पंचरत्नसमन्वितम् । जलप्रपूरितं कृत्वा पुष्पपल्लवसंयुतम् ३७ ब्रह्माणं चैव सावित्रीं पूजयेद्विधिवद्व्रती । पंचामृतेन संस्नाप्य ततः कुर्याच्च पूजनम् ३८ षोड-

शीरुपधारैश्च पूजयेत्परमेश्वरीम् । पूजयेत्पुरुषसूक्तेन मूलमंत्रेण वा व्रती ३९ कूष्मांड्यै कामदायिन्यै ब्रह्माण्यै व्रतहेतवे । नमोस्तु शिव
रुपिण्यै सफलं कुरु मे व्रतम् ४० एवं कृत्वा महाराज पूजनं सर्वकामदम् । रात्रौ जागरणं कृत्वा गीतवाद्यादिमंगलैः ४१ कथां श्रुत्वा
विधानेन यथोक्तां राजसत्तम । ततः प्रभाते पूर्णायां होमं कुर्याद्यथाविधि ४२ प्रणोदेवीतिर्मंत्रेण जुहुयात्तिलसर्पिषा । अष्टोत्तरशत होमं
कुर्यात्तस्य यथाविधि ४३ होमशेषं समाप्याथ आचार्यं पूजयेन्नृप । वस्त्रादिभिरलंकारैस्तोषयेच्च सपत्निकम् ४४ पश्चिमाभ्याय संपूज्यों
दक्षिणावस्त्रभूषणैः । ततो दानं च कुर्वीत कूष्मांड्याः पीठसंयुतम् ४५ दानमंत्रः— । कूष्मांडीं बहुबीजाढ्यां वस्त्रालंकारभूषिताम् । हे
मबीजसमायुक्तां गृहाण द्विजसत्तम ४६ कूष्मांडीव्रतसिद्ध्यर्थं कुर्यात्रोदानमुत्तमम् । व्रतसंपूर्तिसिद्ध्यर्थमाचार्याय निवेदयेत् ४७ ततश्च
शक्त्या विप्रेंद्रान् भोजयेद्भक्तिसंयुतः ॥ दक्षिणां च ततो दद्याद्व्रतपूर्णहेतवे ४८ एवं कृते महाराज व्रते सर्वसुखप्रदे । ईप्सितांल्लभते
कामान्नात्र कार्या विचारणा ४९ ॥ इति श्रीपद्मपुराणे कूष्मांडीव्रतोद्यापन संपूर्णम् ॥ ॥ अथ कर्कटीव्रतं लिख्यते ॥ ऋषय ऊचुः ।
कथितानि त्वया साधो श्रेयांसि सुबहून्यपि । आख्यातानि विचित्राणि चतुर्वर्गफलान्यपि १ पुण्यानि च व्रतान्यादौ तत्फलान्यपि भा
गशः । स्वर्गसाधनभूतानि निःश्रेयसकराण्यपि २ तत्र यन्नवता प्रोक्तं योषिद्वैधव्यनाशनम् । पुत्रपौत्रादिजनकं भर्तुरारोग्यदायकम् ३
कामभोगप्रदं चान्यद्व्रतमस्तीति चोक्तवान् । तद्व्रतान्नतकं पुण्यं वक्तुमर्हस्यशेषतः ४ येन चीर्णेन सर्वत्र न वैधव्यमवाप्नुयात् । ईप्सितां
ल्लभते कामान् भर्तुरायुश्च शाश्वतम् ५ एवं निशम्य मुनिपर्यवचोभिशेष प्रश्नप्रहृष्टवदनः स तु सूतसूनुः । आनंदयन्मुनिसदः सुवचोमृतो
दैः प्रोवाच शौनकमिदं बहुदीक्षितास्यम् ६ सूत उवाच । साधु प्रश्नो महाभागा भवद्भिर्यदुदाहृतः । तद्वक्ष्ये च यथाज्ञानं श्रुतं वो त्र

नकाद्भवम् ॥ योषिन्मूलो हि संसारो पुंसः श्रेयोविधानकः । योषितोपि महाभागास्तारयंति निजं पतिम् ८ आपद्भ्यो नरकेभ्यश्च
पातिव्रत्यपरायणाः । सीमंतिन्यो धारयंति भुवनत्रयमंडपम् ९ पातिव्रत्येन धर्मेण दमेन नियमेन च । भानुर्बिभेति सततं करैः स्प्रष्टुं
पतिव्रताम् १० सा चेद्भर्तृयुता साध्वी तारयेद्भुवनत्रयम् । दैवादपि वियुक्ता स्यादशुचिस्तु सदैव हि ११ अमंगलेभ्यः सर्वेभ्यो प्राप्ता
वैधव्यमंगना । जलहीना यथा गंगा प्राणहीना यथा तनुः १२ दर्भहीना यथा संध्या धर्महीना यथा क्रिया । सत्यहीना यथा वाणी
नृपहीना यथा पुरी १३ भर्तृहीना तथा नारी भाति लोके न कुत्रचित् । तस्माद्वैधव्यशांत्यर्थं यत्नः कार्यो हि योषिता १४ न प्रयत्नै-
र्बहुविधैर्वैधव्यं यांति योषितः । विना पुण्यैर्व्रतैर्वापि भूरिदानैरहर्निशम् १५ तस्मादेकं व्रतं विप्रा योषिद्वैधव्यनाशनम् । कथयामीष्टफ-
लदं संवादं शिवयोः शुभम् १६ पुराऽवंतीपुरे ह्यासीद्धरिदीक्षितसंज्ञकः । वेदवेदांगसंपन्नः कौशिको द्विजसत्तमः १७ यज्वा विदितत
त्त्वार्थो ज्ञानदीपो भवार्णवे । तस्य भार्या गुणवती सती सर्वगुणान्विता १८ पतिशुश्रूषणरता तत्पदांबुनिषेविनी । भर्तुः सकाशात्प्राप्ता
सा कन्यारत्नानि सप्त वै १९ वत्सरे वत्सरे सा वै वरिष्ठा सर्वयोषिताम् । ताः कन्या रूपसंपन्ना ववृधुः पितृवेश्मनि २० इलाऽमृता
शुचिः शांता गुणज्ञा मलिनी ध्रुवा । रूपलावण्यसंपन्नाः कन्यास्ताश्चारुहासिनी २१ दृष्ट्वा ननंदतुस्तौ हि दंपती परया मुदा । ददौ
पिता मुनींद्राय इलां सत्याय धीमते २२ विवाहमकरोद्यत्नात्प्रीत्या परमया युतः । जाते परिणये सोऽथ सत्यः पितृगृहे वसन् २३
कालधर्ममुपेयाय शीतज्वरप्रपीडितः । दिनानि पंचषट् चैवं भुक्त्वा विषयजं सुखम् २४ मृतेऽथ जामातरि सोपि दीक्षितो वत्सेपि चुक्रो-
श सुदुःखपीडितः । हाहेति किं ते भगवन्विचेष्टितं दिनेश दुःखं मयि पातितं त्वया २५ विलपन्निति विप्राग्र्यो जामातुः समकारयत् ।

और्ध्वदेहिकसंस्कारं ददौ चापि तिलांजलिम् २६ इह वैधव्यसंपन्ना पन्नगीव श्वसन्मुहुः । समूर्च्छ्र ऽभूत्तदा बाला बालवैधव्यपीडिता
२७ एवं चापि ताः सर्वा वैधव्य प्रतिपेदिरे । मातुः शोककराश्चैव वैधव्येन प्रपीडिताः २८ पाणिपीडनवेलायां चरमायां द्विजोत्तमः ।
चिंताकुलार्णवे मग्नः कर्तव्य नाभ्यपद्यत २९ यस्य यस्याश्च निलय आगमच्चरिदीक्षितः । सुतां दातुं न शक्तो ऽभूत्तस्य तस्य भया-
त्पुमान् ३० वयोवृद्धिं सुतायाश्च वीक्ष्य चिंतामवाप सः । इत्थं मनसि संचिंत्य समगत्कामिन द्विजः ३१ सुतामादाय सुश्रोणीं गतो
ऽरण्यं महद्ध्रुवम् । एतानि पक्षिणां यस्मिन्न संति न च मानवाः ३२ तत्र न नार्ककिरणा यस्मिन्शक्ताः प्रकाशितुम् । अनेकमृगसंकीर्णं
शार्दूलमृगसेवितम् ३३ अन्यैश्च विविधैः सत्त्वैः सेव्यमानमहर्निशम् । तत्रोपलं महानीलमपश्यच्च द्विजाग्रणीः ३४ चिंतयित्वा मनस्येवं
समरमने प्रददौ सुताम् । वेदोक्तेनैव विधिना पाणिग्राहमकारयत् ३५ त्वं धर्मचारिणी चास्य सुते भव भयं त्यज । भर्तुरुक्त्वा भजस्वे
नमुपलं फलमाप्स्यसि ३६ इति दत्त्वा सुतां तस्मै स द्विजो ऽगात्स्वमंदिरम् । कंदमूलफलानां च मिषेणैव जगाम सः ३७ गते पितरि
सा बाला दुःखशोकाकुला ऽभवत् । कांतारे कुररी यद्वत्क्रोश भृशदुःखिता ३८ चिंतयित्वा मनस्येव भर्तृबुद्ध्या महोपले । दधार ह
भावं सा नन्वसौ मे पतिर्ध्रुवम् ३९ ननु देवाः प्रयच्छंति शिलाप्रतिमसंस्थिताः ॥ वांछितार्थान्मनुष्याणां भावो हि फलदायकः ४०
एतस्मिन्नंतरे काले जगादोषैः पुरंदरः । पपात चाशनिस्तस्मिन्महत्युपलमस्तके ४१ स भिन्नो वज्रपातेन चूर्णीभूतस्ततः क्षणात् । दृष्ट्वा सुतापि
तत्सर्वं पुनर्निंदां चकार सा ४२ एतस्मिन्नेव काले तु पार्वत्या त्रिपुरांतकः । युक्तो यदृच्छया गच्छन्व्योमयानेन मंदिरम् ४३ पार्वत्युवा-
च । भगवन्कथमद्य स्त्री रुदती मे कृपानिधे । दीना दीनतरा नित्यं तत्सर्वं मे वद प्रभो ४४ इति देव्या वचः श्रुत्वा प्रोवाच गिरिशः

च । भगवन्कथमद्य

तस्येयमात्मजा साध्वी वैधव्यमगमद्ध्रुवम् ४६ प्राप्तो मरणधर्मोऽयं
शिवाम् ४५ महादेव उवाच । देवि कौशिकदायादो हरिदीक्षितसंज्ञकः । तस्येयमात्मजा साध्वी वैधव्यमगमद्ध्रुवम् ४६ प्राप्तो मरणधर्मोऽयं
पाषाणः प्रतिजानि हि । एवमस्याश्च सोदर्यः षडतीव मनोहराः ४७ वैधव्यमापुः सर्वास्ताः पाणिग्रहणमात्रतः । पित्रा दत्ता मुनींद्राणां
पुत्रेभ्यो विपदं गताः ४८ आसां ललाटगा रेषा दैवाद्वैधव्यदायिनी । तां निराकर्तुकामो ऽयं प्रस्तराय समर्पयत् ४९ सोपि पंचत्वमाप-
न्नो दैवी रेषा बलीयसी । सर्वज्ञस्य वचः श्रुत्वा कृपाक्रांताऽब्रवीदुमाम् ५० पार्वत्युवाच । कर्मणा केन भगवन्वैधव्यं प्रापिताः सुताः । मुने-
रनुत्तमं ब्रुहि तत्पापं पूर्वजन्मजम् ५१ कथं वा शुभजन्मासां भवेद्भवदनुग्रहात् । गिरिजा वचनं श्रुत्वा प्राह शंभुर्यथोदितम् ५२ महादे-
व उवाच । पूर्वमेवं मुनेः पुत्र्यः समासन् गुणशालिने । पित्रा दत्ता मुनींद्राय मुनये विधिपूर्वकम् ५३ मुनींद्रं प्राप्य भर्तारं समासन् दु-
ष्टचेतसाः । सापत्न्यभावाद्दुष्टास्ता नित्यं कलहतत्पराः ५४ परस्परेर्षया नित्यं भर्तुः सेवां न चक्रिरे । स्वयं मिष्टान्नभोजिन्यो भर्तृद्वेषण-
तत्पराः ५५ तेन तापेन संतप्तो गतो वै स्वर्गमुत्तमम् । सप्तापि च सपत्न्यस्ताः प्रत्यगच्छन्य यमालयम् ५६ यामिनीं यातनां भुक्त्वा
दुःखिताः पुनरागताः । इह जन्मनि कस्यापि कौशिकस्याभवन्सुताः ५७ रूपलावण्यसंपन्ना वैधव्यं प्रतिपेदिरे । प्रलंभितः पतिः पूर्वं
तेन दोषेण वंचिताः ५८ पतयो वंचयांचक्रुः कृत्वा वै पाणिपीडनम् । इति शंभोर्वचः श्रुत्वा हिमाद्रितनया ऽब्रवीत् ५९ पार्वत्युवाच ।
भवंत्येवंविधाः सर्वा भर्तृद्वेषणतत्पराः । अस्मद्दृग्गोचरी चेयं नोपेक्ष्या करुणानिधे ६० एवमाकर्ण्य पार्वत्या वचनं त्रिपुरांतकः । वैधव्य-
भंजनं लोके कथयामास तद्व्रतम् ६१ येन चीर्णेन पौरंध्र्यो वैधव्यं नाप्नुवंति हि । उमे शृणुष्व व्रतकं योषिद्वैधव्यनाशनम् ६२ ता-
रणं सर्वपापानां योषितां च विशेषतः । कर्कटे द्युमणौ कल्पवल्ली शीघ्रं दधत्फलम् ६३ कर्कटी सफला ह्येषां वांच्छितार्थप्रदायिनी ।

तद्व्रतं तेऽभिधास्यामि शृणु सुश्रोणि सादरम् ६४ कर्कटीव्रतपुण्येन सर्वान्कामानवाप्नुयात् । योषिद्वा पुरुषो वापि नात्र कार्या
विचारणा ६५ त्वमप्येतद्व्रतं भद्रे कुरुष्व मम सर्वदा । कर्कटस्थे रवौ नारि श्रावणे मासि भामिनि ६६ चन्द्रवारे विशेषेण स्त्रीभिः
कार्यमिदं शुभम् । प्रातः शुक्लतिलैः स्नात्वा देहशुद्धिं विधाय च ६७ त्यक्त्वा च शतगंडूषान् मुखदुर्गंधिनाशने । पंचगव्यं गृहीत्वाऽथ
व्रतसंकल्पमाचरेत् ६८ आचार्यं वरयेत्प्राज्ञं शांतं दांतं कुटुम्बिनम् । सर्वलक्षणसंपूर्णं वस्त्रैराभरणैस्तथा ६९ मंडपं कारयेत्पश्चाच्चतु
र्द्वारं सतोरणम् । तन्मध्ये भद्रपीठस्थां पूजयेदुमया सह ७० सौवर्णीं प्रतिमां कृत्वा वृषभं रजतस्य च । कर्कटीं पूजयेद्यत्ना-
त्सफलां कांचनीं शुभाम् ॥ वस्त्रयुग्मेन संवेष्ट्य कुंभोपरि निधाय च ७१ कल्पवल्लि महाभागे सदा सौभाग्यदायिनि । प्रार्थयिष्ये
वरदां त्वां भर्तृश्रेयोभिवृद्धये ७२ इति संप्रार्थ्य तां तत्र कर्कटीं च शिवं तथा । उपचारैः षोडशभिर्भक्तिभावसमन्वितः ७३ नैवेद्यं
सफलं दत्त्वा मत्वा तोयं च शोभने ॥ एकादशफलानां वै वायनं च प्रदापयेत् । वेणुपात्रेण सहितं सतांबूलं सदक्षिणम् ७४
कर्कटी नाम या वल्ली विधात्रा निर्मिता पुरा । मम तस्याः प्रदानेन सफलाश्च मनोरथाः ७५ गीतैर्वाद्यैश्च नृत्यैश्च पुराणपठनादि
भिः । रात्रौ जागरणं कृत्वा सपत्नीको द्विजैः सह ७६ प्रभाते विमले स्नात्वा प्रातःसन्ध्यां विधाय च । स्वशाखोक्तविधानेन होतव्यं कर्म
सिद्धये ७७ प्रधानं पायसं सर्पिः सतिलं जुहुयाद्व्रती । अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तु वा ७८ कद्रुद्रायेति मन्त्रेण जुहुयाद्रुद्रतुष्ट
ये । गौरीर्मिमायेति तथा पार्वत्याः प्रीतये हुनेत् ७९ होमकर्म समाप्याथ हुनेत्पूर्णाहुतिं तथा । आचार्यं पूजयेत्पश्चाद्वस्त्रालंका-
रभूषणैः ८० गौर्देया तु सवत्सा च वस्त्रालंकारभूषिता । आचार्याय प्रदातव्या व्रतसंपूर्णहेतवे ८१ दशदानानि कुर्वीत शक्त्या

वित्तानुसारतः । सवस्त्रप्रतिमं कुंभमाचार्याय निवेदयेत् ८२ यथाशक्त्या प्रकुर्वीत वित्तशाठ्यविवर्जितः ८३ दानमंत्रः— । गृहाणेमां कर्कटीं त्वं द्विज स्वर्णेन निर्मिताम् । संपूर्णं मे व्रतं चास्तु दानेनानेन शंकर ८४ इमं मंत्रं समुच्चार्य दद्यात्कर्कटिकां द्विजे । ब्राह्मणान्भोजयेत्पश्चाद्रुद्रसंख्यामितांस्तथा ८५ आशिषः प्रतिगृह्णीयाद्द्विजानां सुफलाप्तये । व्रतमेतद्वरं कांते भोगस्वर्गापवर्गदम् ८६ ध्रुवां कथय साध्वि त्वं व्रतं वैधव्यभंजनम् । इति तस्य वचः श्रुत्वा विमानादवरुह्य च ८७ ध्रुवां सा कथयामास कृपां कृत्वा व्रतं शुभम् । स्वर्गं गता महेशानी अनुकंप्य द्विजात्मजाम् ८८ ध्रुवापि च व्रतं चक्रे कांतारेऽऋषिमंडले । तदैव दिव्यपुरुषः पाषाणादाशु सुश्रवाः ८९ सोपि द्विजः पूर्वपतिस्तस्या एष मृगीदृशः । वरयामास तां बालां तदद्भुतमिवाभवत् ९० शापेन कस्यचित्सोपि पाषाणत्वमुपागतः । तौ दंपती बहून्वर्षान् भुक्त्वा भोगान्यथेप्सितान् ९१ पुत्रपौत्रसमृद्धिं च प्राप्यांतेपि परं पदम् । एवं रहस्यं परमं कथितं वो मुनींद्रकाः ९२ कथाश्रवणमात्रेण नारी सौभाग्यमाप्नुयात् । कर्तव्यं तु प्रयत्नेन चतुर्वर्णाभिरुत्तमम् ९३ ॥ इति श्रीस्कंदपुराणे कर्कटीव्रतकथोद्यापनं संपूर्णम् ॥ ॥ अथ कर्कटीपूजनम् ॥ तिथ्यादिसंकीर्त्य । मम अखंडसौभाग्यप्राप्त्यर्थं पुत्रपौत्रादिसंतत्यै कर्कटीव्रतांगत्वेन कर्कटीपूजनं करिष्ये। पंचवक्त्रं त्रिनयनमुमया सहितं शिवम् । शुद्धस्फटिकसंकाशं चिंतयेद्भक्तवत्सलम् । ध्यानम् ॥ आवाहयामि देव त्वामस्मिन्स्थाने स्थिरो भव । कर्कटीव्रतहेतोर्हि पार्वतीसहितः प्रभो । आवाहनम् ॥ आसनं मणिसंयुक्तं चतुरस्रं समंततः । भक्त्या निवेदितं तुभ्यं गृहाण सुरसत्तम । आसनम् ॥ देवदेव नमस्तेऽस्तु भक्तानामभयप्रद । पाद्यं गृहाण देवेश पार्वतीसहितः प्रभो । पाद्यम् ॥ गौरीवल्लभ देवेश त्रिपुरांतक शंकर । भालनेत्र नमस्तेऽस्तु गृहाणार्घ्यं मम प्रभो । अर्घ्यम् ॥ कांचने कलशे सुस्थं सुगंधं च सुशीतलम् । आचम्यतां महादेव पार्वत्या सहितं प्र-

भो । आचमनीयम् ॥ पयो दधि घृतं चैव मधु शर्करया युतम् । पंचामृतेन स्नपन करिष्ये भक्तवत्सल । पंचामृतस्नानम् ॥ शुद्धोदक
स्नानम् ॥ गंगागोदावरीरेवासमुद्भूत सुशीतलम् । स्नानार्थं ते मयानीतं गृहाण जगदीश्वर । स्नानम् ॥ आचमनम् ॥ चंद्ररश्मिसमं शुभ्रं
कार्पासेन विनिर्मितम् । देहसंरक्षणार्थाय वस्त्रं शंकर गृह्यताम् । वस्त्रम् ॥ त्रिसूत्र्यां त्रिवृत शुभ्र विधात्रा निर्मितं पुरा । ब्रह्मण्यरक्षण सू-
त्रमुपवीतं गृहाण भो । उपवीतम् ॥ श्रीखंडचं० । गंधम् ॥ अक्षताश्च० । अक्षतान् ॥ नानाविधानि पुष्पाणि बिल्वपत्रयुतानि च । पूजा
र्थं ते प्रयच्छामि गृहाण परमेश्वर । पुष्पाणि ॥ वनस्पतिरसोद्भूतो० । धूपम् ॥ साज्यंचवर्तिं० । दीपम् ॥ अन्नं चतुर्विधं स्वादु रसैः
षड्भिः समन्वितम् । गृहाण पार्वतीकांत कर्कटीसहितः प्रभो । नैवेद्यम् ॥ उत्तरापोशनम् । करोद्वर्तनम् । इदं फलं महादेव कर्कटीसंभव
शुभम् । गृहाण वरदो भूत्वा पूजां मे सफलां कुरु । फलम् ॥ पूगीफलम् । तांबूलम् ॥ हिरण्यगर्भग० । दक्षिणाम् ॥ चक्षुर्दं सर्वलोका
नां तिमिरस्य निवारणम् । सर्वसौख्यकरं देव आर्तिक्यं प्रतिगृह्यताम् ।नीराजनम् । नमोस्तु कर्कटीदेवि सर्वसौभाग्यदायिनि । मंत्रपुष्पं गृहा
णेदं सुमया सहितः प्रभो । मंत्रपुष्पम् ॥ यानि कानि च पापानि० । प्रदक्षिणा ॥ नमस्ते देवदेवेश नमस्ते सुरवल्लभ । व्रतसंपूर्तिकामश्च नमस्कार
करोम्यहम् । नमस्कारम् ॥ अपराधसहस्राणि० । प्रार्थना ॥ अथ वायनम्— । कर्कटीव्रतांगविहितं तत्सांगतासिद्ध्यर्थं ब्राह्मणाय वायनप्रदान
महं करिष्ये ॥ ब्राह्मणं संपूज्य । एकादश फलान्यद्य कर्कटीसंभवानि भो । तांबूलदक्षिणाभ्यां च गृहाण द्विजसत्तम । वायनम् । विसर्जयामि शंभो
त्वां कर्कट्या उमया सह । पूजां च प्रतिगृह्याथ गम्यतां निजमंदिरम् । विसर्जनम् ॥ आधाराय च पीठं सन्निवेश्य सकलं ततः । ब्राह्मणा भोजनीयाश्च
रुद्रस्यामिताः शुभाः ॥ इति कर्कटीपूजा समाप्ता ॥ ॥ अथ विष्णुपंचकव्रत ॥ सूत उवाच । द्वापरांते महाराजः कुंतीपुत्रो युधिष्ठिरः ।

भ्रातृभिः सह धर्मात्मा द्रोणं भीष्मं तथा कुरून् १ पुत्रान्पौत्रांस्तथा भ्रातॄनन्यानपि महीपतीन् । राज्यस्य हेतवे तत्र कुलक्षयमथा-
करोत् २ हत्वा वंश्यान्कुरून् राजा पश्चात्तापेन तापितः । राजा कुरुमहीपालस्तत्पापक्षयकारणात् ३ चतुरंगबलोपेतो भ्रातृभिः प-
रिवारितः । यत्र सम्यक् स्थितः कृष्णो द्वारवत्यां जगत्प्रभुः ४ स जगाम तदा तत्र प्रणम्य जगदीश्वरम् । कृष्णं संस्तूय वचसा तेनापि
प्रतिनंदितः ५ पप्रच्छ किल वंश्यानां वधदोषप्रशांतये । व्रतमेकं समाचक्ष्व येनायं प्रतिशाम्यति ६ कुलक्षयकृतं दोषं क्षयं कर्तुं त्वमर्ह-
सि । इतिविज्ञापनं कृत्वा पश्चात्तापोऽभवत्पुनः ७ युधिष्ठिर उवाच । यत्कृत्वा मुच्यते जंतुर्महापातकपंचकात् । तद्व्रतं ब्रूहि गोविंद यदि
तुष्टोसि केशव ८ श्री कृष्ण उवाच । साधु साधु महाभाग शृणुष्वैकाग्रमानसः । येन संचीर्यमाणेन मुच्यते पंचपातकात् ९ तथा
व्रतमिदं वक्ष्ये मम प्राणस्त्वमेव हि । निमित्तमात्रं भवता कुलक्षयः कृतो भुवि १० प्रौष्ठपद्यां सिते पक्षे द्वादश्यां श्रवणेऽथवा ।
तदारभ्य व्रतं कार्यं मार्गशीर्षं तथा नृप ११ एकादश्यामुपवसेत्प्रतिपक्षे च पर्वणि । श्रवणे च तथोपोष्य पूजयेद्गरुडध्वजम् १२ एवं
वर्षं भवेद्यावत्तावत्संपूज्य केशवम् । वत्सरांते प्रकुर्वीत पंचमूर्तिं जनार्दनम् १३ सश्रीकं च सकामं च सचक्रं सगदं विभुम् । होमं तत्र
प्रकुर्वीत एभिर्नामपदैः शुभैः १४ श्रवणे देवतानां च अपूपैर्जुहुयाद्घृतम् । पुरुषोत्तमः शार्ङ्गधन्वा तथैव गरुडध्वजः १५ गोवर्द्धनोह्य-
नंतश्च पुंडरीकाक्ष एव च । तथा नित्यो वेदगर्भो यज्ञपुरुष एव च १६ सुब्रह्मण्यो जयः शौरिरेताः[1] श्रवणदेवताः । शुक्लद्वादशिदेवेभ्यो
जुहुयाद्गुडपायसम् १७ नामभिः केशवाद्यैश्च द्वादशैर्जुहुयात्सुधीः । एताः संपूजयेच्छुक्लद्वादश्यामधिदेवताः १८ पौर्णमास्याश्च दे-

१इतीति सूतोक्तिः ।

वेभ्यो जुहुयाद्घृतपायसम् । विधुः शशी शशांकश्च चंद्रः सोमस्तथोडुप १९ मनोहरो ऽमृतांशुश्च हिमांशुः पावनस्तथा । निशाकरश्चद
माश्च पूर्णिमादेवताः क्रमात् २० कृष्णद्वादशिदेवेभ्यो जुहुयात्पचामृतोदनम् । संकर्षणादिनामानः कृष्णद्वादशिदेवताः २१ शुद्धोदनति
लाज्य च अमावास्यां तु देवताः । महीधरो जगन्नाथो देवेंद्रो देवकीसुतः २२ चतुर्भुजो गदापाणिः सुरमौलः सुलोचन । चार्वंगश्चक्र
पाणिश्च सुरमित्रोऽसुरांतकः २३ दर्शस्य पक्षमासेषु देवताः षष्टिकीर्तिताः । स्वाहाकारान्वितैरेतैश्चतुर्थ्यंतैश्च होमयेत् २४ एवं विधिवि
धान च होतव्य च पृथक्पृथक् । होमांते पूजयेद्देवेराचार्यं भूषणैः शुभैः २५ भूमिं सस्यवतीं श्रेष्ठां सवत्सां गां पयस्विनीम् । गोमेदं
पुष्परागं च वैडूर्यं चेंद्रनीलकम् २६ माणिक्यं च प्रदातव्यं पचपातकनाशनम् । पंचरत्नानि देयानि पचपातकनाशिने २७ पचमूर्तिं
सुवर्णेन जातरूपं जनार्दनम् । सवस्त्रं सकलं चैव आचार्याय निवेदयेत् २८ इरावतीतिमंत्रेण गां दद्यात्सपयस्विनीम् । घृतवतीतिसूक्तेन भूदान
कारयेत्ततः २९ तद्विष्णोरिति मन्त्रेण जातमूर्तिं प्रदापयेत् । हिरण्यगर्भमंत्रेण दातव्य च हिरण्यकम् ३० पचमहापातकानि क्षयं यांति न
संशयः । ब्राह्मणं च गणेशं च वस्त्रालंकारभूषणैः ३१ वत्संति पूजयेद्भक्त्या गोभूरत्नहिरण्मयम् । दत्त्वा प्रदक्षिणां कृत्वा यथानुज्ञां विसर्जये
त् ३२ ब्राह्मणान्भोजयेद्राजन्वैष्णवान् षष्टिसंख्यकान् । ब्रह्महत्यासुरापानं सुवर्णस्तेयमेव च ३३ गुरुस्त्रीगमन चैव तत्संसर्गी च पच
कम् । गोघ्नश्चैव कृतघ्नश्च भ्रूणहा वृषलीपतिः ३४ अन्येभ्यो विविधेभ्यश्च पापेभ्यो मुच्यते नर । वसते चैव वैकुंठे यावद्विष्णुः सना-
तनः ३५ इह लोके सुखासीन पुत्रपौत्रादिसंयुतः । अविच्छिन्नमिय भुक्त्वा अंते याति परां गतिम् ३६ तस्मात्त्वं कुरु राजेंद्र व्रत
पातकनाशनम् । अयोध्यानगरे रम्ये त्रेतायां च नराधिपः ३७ राजा दशरथो नाम शशास पृथिवीमिमाम् । स राजा मृगयासक्तो ज

गाम गहनं वनम् ३८ सरयूनामनद्याः स तीरे गत्वा महावने । धनुर्बाणयुतो रात्रौ स्थितोऽसौ मृगसाधने ३९ अर्धरात्रौ व्यतीतायां
तस्यास्तीरे मुनीश्वरः । पितृभक्तिसदाचारः पितरौ तेन नीयते ४० तस्य तौ पितरौ तत्र तृषया पीडितौ तदा । जलमानीयतां पुत्र ता-
भ्यां संप्रेषितः सुतः ४१ स कुंभो मुनिपुत्रेण जलपूर्णस्त्वकारितः । निशम्य राजा तच्छब्दं मुमोच शरमुत्तमम् ४२ मृगमन्वेषयन्राजा
मृगबुद्ध्या च घातितम् । विलोकयत्तत्र राजा ब्राह्मणं शंसितव्रतम् ४३ आत्मानं ब्रह्महंतारं ज्ञात्वा राजा सुदुःखितः । तत्पापपरिहारा-
र्थं नैमिषारण्यमागतः ४४ तत्र ज्ञात्वा ज्ञानवृद्धान् प्रणिपत्य यथाक्रमम् ॥ शृण्वंतु मुनयः सर्वे ब्रह्महत्या मया कृता ४५ कथं पापा-
द्विमुच्येहं वक्तव्यं तु महर्षयः । क्षणं ध्यात्वा महाभागा राजानमिदमब्रुवन् ४६ ऋषय ऊचुः । राजन्रघुकुलश्रेष्ठ कुरुष्व व्रतमुत्तमम् ।
विष्णुपंचकसंज्ञं च पंचपातकनाशनम् ४७ मासे भाद्रपदे शुक्ले द्वादश्यां श्रवणं यदि । तदारभ्य व्रतं कार्यं मार्गशीर्षेऽथवा नृप ४८ ए-
कादशीद्वयं चैव श्रवणं पौर्णमासिका । दर्शं चोपोषयेद्भक्त्या वर्षमेकं समाचरेत् ४९ एकादशीद्वये मासे श्रवणं विष्णुदैवतम् । पौर्ण-
मास्यां शशी चैव दर्शे विष्णुः सनातनः ५० द्वादशैव तु नामानि प्रत्येकं पूजयेद्व्रती । माघे मासे पंचकं च पूजयेच्च जगत्प्रभुम् ५१
नामभिर्द्वादशे मासे पंचधा दशसंख्यया । उद्यापनं ततः कुर्यादादौ मध्ये प्रयत्नतः ५२ अंते वापि प्रकर्तव्यं व्रतसाद्गुण्यहेतवे । घृत-
प्लुतं च श्रवणे शुक्ले तु गुडपायसम् ५३ पायसाज्यं पौर्णमास्यां कृष्णे पंचामृतोदनम् । तिलैश्च दर्शे मुद्गान्नं होतव्यं घृतसर्पिषा ५४
अनेन विधिना राजन् कुरुष्व व्रतमुत्तमम् । पापेभ्यो मुच्यसे राजन् पुत्रपौत्रांश्च प्राप्स्यसि ५५ तेषां तद्वचनं श्रुत्वा चकार व्रतमुत्त-

१ श्रावणाख्येनेत्यर्थः । २ 'हे पुत्र जलं आनय' इत्युक्त्वा ताभ्यां पितृभ्यां सुतः श्रावणः संप्रेषित इत्यर्थः

मम्। राजा दशरथः सद्यो मुक्तो वै पातकाघतः ५६ तस्माद्ब्रह्मवधान्मुक्तः ब्रह्महत्यादोषतः प्रभुः। सुराचार्यो महाराज सुरापानाद्बृहस्पतिः ५७ गुरुस्त्रीगमनाच्चंद्रः सुवर्णहरणाद्बलिः। अन्यैरपि महीपालैर्दिलीपसगरादिभिः ५८ महापातकजैर्दोषैर्विमुक्त्यर्थं कृतं तदा। तस्मात्त्वमपि राजेंद्र कुरुष्व व्रतमुत्तमम् ५९ छद्मक्षयकृतेभ्यश्च दोषेभ्यो मुच्यसे व्रतात्। यदीच्छसि महाराज सद्गतिं गतिमात्मनः ६० मा कुरुष्वाद्य संदेहं व्रतं कुरु यथोचितम्। उपाख्यानं च श्रोतव्यं यदुक्तं विष्णुपंचकम् ६१ ये च शृण्वंति सततं ये पठंति द्विजोत्तम। सर्वे ते मुक्तिमायांति महापातकजाद्भयात् ६२ कथानुवादको भक्त्या पूजनीयः सदा नरैः। तेन संतुष्यते विष्णुर्जगत्कर्ता जनार्दनः ६३ ॥ इति श्रीभविष्यपु० विष्णुपंचकव्रतं संपूर्णम् ॥ ॥ अथोद्यापनम् ॥ मम इहजन्मनि जन्मांतरे च ब्रह्महननमद्यपानसुवर्णस्तेयगुरुतल्पगमनागम्यागमनतत्संसर्गजनितोपपातकानां बुद्धिपूर्वाणामबुद्धिपूर्वाणां महापातकानां लघुपातकानां च प्रायश्चित्तार्थं आचरितस्य विष्णुपंचकव्रतस्य संपूर्णतासिद्ध्यर्थमुद्यापनं करिष्ये[1] ॥ पुण्याहं वाचयित्वा सर्वतोभद्रे ब्रह्मादिदेवता आवाह्य कलशे विष्णोः सुवर्णप्रतिमां स्थाप्य रात्रौ जागरणं कुर्यात्। प्रभाते स्नात्वा शुभदेशे स्थंडिलं कृत्वाग्निं प्रतिष्ठाप्यान्वाधानं कुर्यात् ॥ चक्षुषीत्यंतमुक्त्वा अत्र प्रधानम्। पुरुषोत्तमं शार्ङ्गधन्वानं गरुडध्वजं गोवर्धनं अनंतं पुंडरीकाक्षं नित्यं वेदगर्भं यज्ञपुरुषं सुब्रह्मण्यं जयं शौरिं एता श्रवणदेवता अपूपद्रव्येण १। केशवाद्या दामोदरांताः द्वादश शुक्लद्वादशीदेवताः गुडपायसेन २। विधुं शशिनं शशांकं चंद्रं सोमं उडुपं मनोहरं अमृतांशुं हिमांशुं पावमानं निशाकरं चंद्रमसं एताः पूर्णिमादेवताः घृतपायसेन ३। संकर्षणादिश्रीकृष्णांताः द्वादश कृष्णद्वादशीदेवताः पं

१ मापश्चित्तार्थं विष्णुपंचकव्रतं करिष्य इति मतप्रहणारंभे संकल्पः।

चामृतौदनेन ४। महीधरं जगन्नाथं देवेद्रं देवकीसुतं चतुर्भुजं गदापाणिं सुरमीढं सुलोचनं चार्वंगं चक्रपाणिं सुमित्रं असुरांतकं एता दर्शदेवताः तिलमुद्गौदनेन ५। शेषेण स्विष्टकृतमित्युक्त्वा जुहुयात्। ततः होमशेषं समाप्य आचार्यं संपूज्य पीठदानं कुर्यात् ॥ तथा यथाशक्त्या ब्राह्मणान्भोजयित्वा तेभ्यो वस्त्रालंकारान्दत्त्वा स्वयं वाग्यतो भूत्वा बंधुभिः सह भुंजीत ॥ इति विष्णुपंचकव्रतोद्यापनं संपूर्णम् ॥ ॥ अथ कोटिदीपदानविधिः ॥ स्कंद उवाच । रुद्रसंख्या शिवायाथ ह्यर्पयेद्दीपमुत्तमम् । वर्षमेकं तदर्धं वा वर्षद्वयमथापि वा ॥ कोटिसंख्यार्धसंख्या वा तदर्धं वा स्वशक्तितः । तस्य दीपस्य संपूर्त्यै कुर्यादुद्यापनं बुधः ॥ उपवासं प्रकुर्वीत पूर्वस्मिन्दिवसे तदा । कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः ॥ प्रतिमां शंकरस्याथ उमया सहितस्य च । कलशं स्थापयेद्रात्रौ स्वस्तिवाचनपूर्वकम् ॥ आचार्यं वरयेत्तत्र अभिज्ञं वेदपारगम् । उमामहेश्वरं चात्र स्थापयेत्कलशोपरि ॥ उपचारैः षोडशभिः पूजयित्वा पृथक्पृथक् । रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः ॥ प्रातःस्नानं विधायाथ होमशेषं समारभेत् । तिलैर्यवैश्च चरुणा सर्पिषा बिल्वपत्रकैः ॥ आज्यप्लुतैश्च प्रत्येकं सद्योजातादिमंत्रतः । शतमष्टोत्तरं हुत्वा होमशेषं समापयेत् ॥ उमामहेश्वरं देवं पूजयेच्च पुनर्व्रती । प्रतिमां वस्त्रसहितमाचार्याय निवेदयेत् ॥ सहिरण्यां सवत्सां च धेनुं दद्यात्प्रयत्नतः । अनेन विधिना यस्तु व्रतमेतत्समाचरेत् ॥ स भुक्त्वा विपुलान्भोगान् शिवसायुज्यमाप्नुयात् । ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रालंकारभूषणैः ॥ गुरोराज्ञां गृहीत्वा तु सेष्टो भुंजित मानवः। एवं यः कुरुते मर्त्यो कोटिदीपप्रदीपनम् ॥ नरो वाप्यथवा नारी सोश्नुते पदमव्ययम् । ज्ञानमुत्पद्यते तस्य संसारभयनाशनम् ॥ सर्वपापक्षयकरं जन्मजन्मार्जितं बहु ॥ बाल्यं वयसि यत्पापं यौवने वापि यत्कृतम् । वार्धकेपि कृतं पापं तत्सर्वं नश्यति ध्रुवम् ॥ सर्वपापविनि-

भुंक्ते भुक्त्वा भोगाननेकशः । सर्वान्कामानवाप्याथ सोऽश्नुते पदमव्ययम् ॥ इति परममितिहासं पावनं तीर्थभूतं वृजिनविलयहेतुं यः शृ
णोतीह भक्त्या । स भवति खलु पूर्णः सर्वकामैरभीष्टैर्जयति च सुरलोकं दुर्लभं यज्ञसंघैः ॥ इति श्रीस्कंदपुराणे कोटिदीपोद्यापनं संपू
र्णम् ॥ ॥ अथ पार्थिवलिंगोद्यापनम् ॥ नारद उवाच । कथं पार्थिवपूजाया विधिर्ज्ञेयः सुरेश्वर । किं फलं चास्य विज्ञेयं कथमुद्यापनं
भवेत् ॥ कियत्कालं च कर्तव्यं प्रारम्भं कदा भवेत् । कथमाशु महादेव लोकानामुपकारकम् ॥ ईश्वर उवाच । धर्मार्थकाममोक्षार्थं पार्थि
वं पूजयेत्सदा । मृदमानीय शुद्धां वै शर्करावर्जितां शुभाम् ॥ सिच्योदकेन शुद्धेन मर्दयित्वा तु वंदयेत् । प्रारम्भोऽस्य प्रकर्तव्यो माघ
मासे सितेतरे ॥ चतुर्दश्यां विशेषेण सर्वकार्यार्थसिद्धये । अथवा श्रावणे मासि इंदुवारे शुभे ग्रहे ॥ स्नात्वा संपूज्य गणपं स्वस्तिवाचनपू
र्वकम् ॥ आजन्म पूजयेच्छंभुं संवत्सरमथापि वा ॥ समाप्य सर्वसंभारान्पूजयेन्मृन्मयं शुभम् । शिवेति मृदमादाय महेशो घटने स्मृ
तः ॥ शुभः प्रोक्तो मविष्टायां पिनाकी प्राणने मतः । शशिशेखरः पूजायां वामदेवोऽपि धूमके ॥ विरूपाक्षोऽपि विज्ञेयो दीपदाने विशेष
तः । उपहारे कपर्दी स्यात्तांबूले शितिकंठकः ॥ दक्षिणायामुमाकांतो नीललोहितविसर्जने । एवं पूजा प्रकर्तव्या तंडुलैर्बिल्वपत्रकैः ॥ सं-
वत्सरे तु संपूर्णे उद्यापनविधिं चरेत् । आचार्यं वरयेत्पूर्वं द्वादशास्त्वित्विजस्ततः ॥ विरच्य लिंगतोभद्रं पंचवर्णैः शुभं स्थलम् । ब्रह्मादि-
स्थापनं कृत्वा कलशं स्थापयेत्ततः ॥ शिवप्रतिमा सौवर्णी रजतस्य वृषस्ततः । वस्त्रद्वयेन संवेष्ट्य उपचारैस्तु षोडशैः ॥ पूजयित्वा वि
धानेन अधिवासनपूर्वकम् । गीतवादित्रनिर्घोषैर्जागरं तत्र कारयेत् ॥ स्तोत्रैश्च विविधैः सूक्तैः पूजयेत्परमेश्वरम् । चतुर्दशी दर्शयुक्ता पारणे
ऽप्यधिका मता ॥ मृत्युंजयेति मंत्रेण अग्नौ हुत्वा च पायसम् । लिंगसंख्यादशांशेन होमः कार्यो विधानतः ॥ अथवा नाममंत्रेण पा

यसं जुहुयाद्व्रती । तर्पणं च प्रकर्तव्यं तद्दशांशेन सर्वदा ॥ मार्जनं तद्दशांशेन तद्दशांशेन भोजयेत् । आचार्यं पूजयेद्भक्त्या वस्त्रालंकार-भूषणैः ॥ धेनुं दद्यात्सवत्सां च शिवसंतोषहेतवे । शिवरूपाश्च ते विप्रा दक्षिणा वस्त्रसंयुता ॥ पूजयित्वा विधानेन नमस्कुर्यात्पुनः पुनः । शिवपीठं च तत्सर्वमाचार्याय निवेदयेत् ॥ शिवभक्त्यात्मकं यस्माज्जगदेतच्चराचरम् । तस्मादेतेन मे सर्वं करोतु भगवाञ्छिवः ॥ कैलासवासी गिरिशो भगवान्भक्तवत्सलः । चराचरात्मको लिंगरूपी दिशतु वांच्छितम् ॥ इति प्रार्थ्य ततो विप्रान्नमस्कृत्वा विसर्जयेत् । स्वयं भुंजीत वै भक्त्या बंधुवर्गैः समन्वितः ॥ इति ते कथितं विप्र सर्वकामार्थसिद्धिदम् । शिवलोकं समासाद्य तत्रैव वसते चिरम् ॥ ॥ इति श्रीभविष्यपुराणे० पार्थिवलिंगोद्यापनं संपूर्णम् ॥ ॥ छ ॥ ॥ अथ उक्तव्रतानामनुक्रमणिका लिख्यते ॥ ॥ व्रतार्के चिंतितानर्थान् शुभार्थं च विपश्चितान् । बहून्प्रपंचितानर्थान्दर्शयामि यथाक्रमम् १ व्रतस्य लक्षणं चादौ कालदेशौ ततःपरम् । व्रताधिकारिणः पश्चाद्व्रतधर्मास्ततःपरम् २ उपवासश्च धर्मश्च हविष्याणि व्रतस्य च । पंचरत्नस्वरूपं च पल्लवानां ततःपरम् ३ पंचगव्यस्वरूपं च मंत्रास्तत्र यथाक्रमम् । पंचामृतस्वरूपं च षड्रसानां तथैव च ४ गंधस्य भागमानं च देवतानां यथाक्रमम् । सर्वगंधमिति प्रोक्तं यक्षकर्दमसंज्ञकम् ५ सर्वौषध्यस्ततः प्रोक्ता मंडले पंचवर्णकम् । मृदः सप्तविधाः प्रोक्ता धातवश्च तथा स्मृताः ६ सप्तधान्यं ततः प्रोक्तं यथाष्टादशसंख्यकम् । कुंभस्य लक्षणं पश्चात्प्रतिमाद्रव्यतन्निधिः ७ धान्यमानं ततः प्रोक्तं कलशस्थापने शुभम् । पूजाद्रव्याणि सर्वाणि यथादैवतमादिशेत् ८ धूपाश्चापि तथा प्रोक्ता देवताभेदतः परम् । अनादेशे च संख्याया अष्टोत्तरशताधिका ९ होमद्रव्यप्रतिनिधिर्मंत्रदेवतयोस्तथा । कथनं चाप्यनादेशे द्रव्यगतिनिर्येस्तथा १० पवित्रलक्षणं पश्चात्पात्रसंख्या ततःपरम् । धूपाश्चापि तथा प्रोक्ता होमयोग्याग्नयोपि च ११ हेमरौप्यादिधातूनां धान्यानां मानमीरितम् । हो-

मद्रव्यस्य मान च ऋत्विजां वरण तथा ११ आचार्यकर्मकरणमग्न्यावाहनमेव च । सर्वतोभद्रसंज्ञं च लिंगतोभद्रमेव च १२ अथ मण्डलदेवानां मुद्राणां लक्षणानि च । षोडशोपचाराणां कथनं च पृथक्पृथक् १३ विधिश्चोद्यापने प्रोक्तो व्रतभंगे तथैव च । उपयुक्तपदार्थानामित्येव परिभाषणम् १५ अथ व्रतानि कथ्यंते प्रतिपत्प्रभृतिक्रमात् । चैत्रशुक्लप्रतिपदि संवत्सरविधिः स्मृत १६ आरोग्यप्रतिपत्पश्चाद्विद्याप्रतिपदस्तथा । तिलकव्रतकं प्रोक्तं विल्वरोटाख्यकं तथा १७ दौहित्रप्रतिपत्प्रोक्ता तत्रैव नवरात्रकम् । धूतप्रतिपदा प्रोक्ता ततः स्कंदव्रते स्मृता १८ चपाषष्ठीविधिस्तत्र बलिराज्यमतःपरम् । पूजागोवर्धनस्याथ प्रतिपद्यां यथाविधि १९ ततो यमद्वितीया वै भ्रातृसंज्ञा ततःपरम् । तृतीयायां ततः प्रोक्तं सौभाग्यशयनव्रतम् २० गौर्या दोलोत्सवः प्रोक्तो ह्यक्षय्याख्या ततः स्मृता । स्वर्णगौरी ततः प्रोक्ता हरितालिरततः स्मृता २१ बृहद्गौरी ततः प्रोक्ता सौभाग्याख्या ततःपरम् । चतुर्थ्यामथ संप्रोक्तं श्रावणे कृष्णपक्षके २२ संकष्टाख्यव्रतं प्रोक्तं गणेशस्य शुभप्रदम् । श्रावणे शुक्लपक्षे तु दूर्वागणपतिर्द्विधा २३ ततः सिद्धिविनायक्यां स्यमन्तकाख्यानमेव च । कपर्दिगणपति प्रोक्तः करकाख्या ततः स्मृता, २४ शुभा ज्ञेया दाशरथी ततो गौरीति संज्ञिता । वरदाख्या ततो ज्ञेया शुक्ला वै गणनायके २५ संकष्टा माघकृष्णे तु चतुर्थ्यंगारकी तथा । व्रतं च नागपंचम्यां नागदष्टव्रतं तथा २६ ऋषिपंचमिसंज्ञाख्या शुभांगललिता स्मृता । वसंतपंचमी प्रोक्ता माघशुक्ले हरिप्रिया २७ आद्या तु ललिता षष्ठी कपिलाव्रतकं तथा । स्कंदषष्ठी ततः प्रोक्ता चम्पाषष्ठी ततः स्मृता २८ मंगाख्या सप्तमी प्रोक्ता शीतलासप्तमी ततः । मुक्ताभरणसंज्ञाख्या सरस्वत्याश्च पूजनम् २९ रथाख्यासप्तमी ज्ञेया अचलासप्तमी तथा पुत्रसंज्ञा च तत्रैव सप्तमीव्रतमुत्तमम् ३० बुधाष्टमी ततः प्रोक्ता दशाफलविधाष्टमी । जन्माष्टमी तत प्रोक्ता सैव गोकुलसंज्ञका ३१ ज्येष्ठाष्टमी ततो ज्ञेया

दूर्वाष्टमी शुभप्रदा । महालक्ष्मीस्ततः प्रोक्ता व्रतं षोडशवासरम् ३२ महाष्टमी ततः प्रोक्ता अशोकाष्टमिसंज्ञका । कालाष्टमी ततो ज्ञेया भैरवाख्या शिवप्रिया ३३ नवमी रामविख्याता सर्वपापहरा शुभा । ततो वै रामनामस्य लेखनं पूजनं शुभम् ३४ नवमी शारदा प्रोक्ता दुर्गाख्या च शुभप्रदा । अक्षय्यनवमीसंज्ञाकार्तिके शुक्लपक्षके३५ततो विवाहो धात्र्याश्च तुलस्याश्च शुभप्रदः । ततो दशहरास्तोत्रं व्रतं दशहरं शुभम् ३६ आशादशम्यथ ख्याता व्रतं दशावतारकम् । दशमी विजयानाम शम्यापात्राभिमानतः३७एकादशी ततः प्रोक्ता सनिर्णयशुभप्रदा । निर्णयो द्वादशीनां च अष्टानां परिकीर्तितः३८उद्यापनमथोच्यंते एकादश्याः शुभप्रदम् । शुक्ला कृष्णा द्विधा प्रोक्ता सामान्याद्द्वादशी तथा ३९ मार्गशीर्षादिमारभ्य कथनं चाघनाशनम् । चतुर्विंशतिसंख्याक मेकादशीव्रतं शुभम् ४० चतुर्विंशतिनामानि महिमा च पृथक्पृथक् । शयन्येकादशी प्रोक्ता चातुर्मास्यव्रते शुभा ४१ व्रतानि तत्र कथ्यंते वार्षिकाणि बहूनि च । सोद्यापनानि सर्वाणि मानवानां शुभानि च ४२ भीष्मपंचकसंज्ञं च गोपद्माख्यव्रतं शुभम् । प्रबोधो वै तुलस्याश्च कर्तव्यो वंशवृद्धये ४३ द्वादश्यो ह्यथ कथ्यंते दमनाख्या शुभप्रदा । वैशाखी योगयुक्ता चेद्व्यतीपाताभिधा मता४४आषाढी पारणे ज्ञेया पवित्रारोपणं ततः । वामनाख्या विशेषेण श्रवणेन समन्विता४५ततो ज्ञेया सुरूपा वै द्वादशी परिकीर्तिता । त्रयोदशी जया प्रोक्ता पार्वती पूजने शुभा४६गोत्रिरात्रव्रतं प्रोक्तं दशभेदाद्द्विधा स्मृता । अशोकाख्यं ततः प्रोक्तं महावारुणिकं ततः ४७ शनिप्रदोषसंज्ञं च पक्षसंज्ञप्रदोषकम् । अनंगाख्याभिधा ज्ञेया त्रयोदशी शुभा स्मृता४८ चतुर्दशी मधौ प्रोक्ता स्नाने वै शिवसन्निधौ । नृसिंहाख्या ततः प्रोक्ता ततो ऽनंतचतुर्दशी४९रंभाव्रते ततः प्रोक्ता नरकाख्या ततःपरम् । वैकुंठाख्या ततः प्रोक्ता चतुर्दशी शिवप्रिया५०शिवरात्रिस्ततो ज्ञेया शिवव्रतविधा स्मृता । पौर्णिमा वटसावित्री गोपद्माख्या ततःपरम् ५१

कोकिलाव्रतमाहात्म्यं ततो रक्षाभिधा स्मृता । उमामहेश्वरव्रतं पौर्णमास्यां शुभप्रदम् ५२ कोजागरं ततः प्रोक्तं त्रिपुरोत्सवमग्रतः । वत्तिशी-
पौर्णिमा ज्ञेया कोकिलाख्या ततःपरम् ५३ अमा पिठोरिसंज्ञाख्या लक्ष्मीसंज्ञा ततःपरम् । गौरीतपोव्रतं प्रोक्तममासोमेन संयुता ५४ अर्वोद
यस्ततः प्रोक्तो ह्यमावास्यां विशेषतः । अतःपरं प्रवक्ष्यामि मलमासादिकं व्रतम् ५५ स्वस्तिकाख्यं व्रतं पश्चात्पंचवर्णैः सुशोभितम् । रविवार-
व्रतं पश्चादाशादित्यव्रतं तथा ५६ ततो दानफलं प्रोक्तं भानुवारे महत्फलम् । सोमवारव्रतं पश्चात्काम्यमोक्षं द्विधा तथा ५७ विशेषेणेंदुवारे वै
एकभुक्तिव्रतं ततः । भौमवासरसंज्ञं च ततो वै भृगुवासरम् ५८ शनैश्चरव्रतं पश्चाद्व्यतीपात तत परम् । मेषसंक्रमणं पश्चाद्वृषसंक्रमणं त-
था ५९ तेजःसंक्रमणं ज्ञेयं सौभाग्याख्यं ततःपरम् । प्रोक्ता तांबूलधका तिर्मनोरथविधानतः ६० अशोकाख्या ततः प्रोक्ता आयुर्वृद्धि
करी ततः । धनसंक्रमणं प्रोक्तं कृसरान्नेन भोजनम् ६१ ततो मकरमासे वै घृतस्नानं रवेः स्मृतम् । घृतकंबलदानं च दधिमंथनमेव च
६२ तांबूलस्य ततो दानं सोद्यापनमुदाहृतम् । मौनव्रतं ततो ज्ञेयं प्रपादानं ततःपरम् ६३ लक्षपर्ण ततः प्रोक्त लक्षदीपास्ततःपरम् ।
लक्षदूर्वास्ततः प्रोक्ताः शिवलक्षपरिक्रमम् ६४ प्रदक्षिणाविधिः प्रोक्तो ह्यश्वत्थस्य बुधैस्ततः । विष्णुप्रदक्षिणाः प्रोक्तास्तुलस्याश्च ततःपरम्
६५ गोविप्राभिहनुमल्लक्षक्रमणं परम् । लक्षबिल्वदलैः प्रोक्तं नानापुष्पैश्च पूजनम् ६६ तुलसीलक्षपत्रैश्च का विष्णुपूजा ततःपरम् ।
बिल्ववर्ती ततो ज्ञेया रुद्रवर्ती ततःपरम् ६७ माणिक्यवर्तिसंज्ञं च विष्णुवर्ती ततःपरम् । देहवर्ती ततः प्रोक्ता सर्ववर्ती तत स्मृता
६८ विष्णुसूर्यनमस्कारलक्षसंख्यास्ततःपरम् । मंगलाख्या ततो गौरी मौनव्रतमतःपरम् ६९ पंचधान्याख्यपूजा वै शिवामुष्टिस्ततःपर
म् । हस्तिगौरी ततो ज्ञेया कूष्माण्डी च ततःपरम् ७० कर्कटिका ततो ज्ञेया विष्णुपंचकसंज्ञकम् । कोटिदीपास्ततो ज्ञेयाः पार्थिवाय

पनं ततः ७१ शिवमस्तु सर्वजगतः परहितनिरता भवंतु भूतगणाः । दोषाः प्रयांतु नाशं सर्वत्र जनः सुखी भवतु ७२ ॥ इति श्रीविश्वनाथविरचिते व्रतराजार्के ऽनुक्रमणिका समाप्ता ॥ ॥ छ ॥ ॥ अथ सप्तधान्यलक्षपूजा विधिर्लिख्यते ॥ ॥ तिलसार्द्धलक्षसप्तकैर्षैर्लक्षसंख्या भवति । तिललक्षपूजनाद्वर्षषष्टिसहस्रं स्वर्गवासः १ तंडुलमणार्धेन लक्षः । तस्य पूजनाद्वर्षचत्वारिंशच्चंद्रलोकवासः २ मुद्गमणार्द्धेन लक्षः । तस्य पूजनाद्वर्षलक्षषष्टिस्वर्गवासः ३ माषमणार्धेन लक्षः । तस्य पूजनाद्वर्षसहस्रं स्वर्गवासः ४ गोधूमकर्षविंशत्या लक्षः । तस्य पूजनाद्वर्षाशीति स्वर्गवासः ५ यवमणेन लक्षः । तस्य पूजनाद्वर्षसहस्रपंचकं स्वर्गवासः ६ कर्पूरलक्षपूजनाच्छिवलोकं प्राप्य कल्पांतपर्यंतं पश्चाच्चक्रवर्ती ७ ॥ ॥ अथ फलानां लक्षपूजा ॥ कदलीफललक्षपूजनाद्वर्षसहस्रं स्वर्गवासः । पश्चाद्राजा भवेत् १ पूगीफललक्षपूजनाद्वर्षमेकं स्वर्गे वासः २ नारिंगीफललक्षपूजनाद्वर्षमेकं स्वर्गे वासः ३ कर्कटीफललक्षपूजनाद्वर्षलक्षद्वयं स्वर्गे वासः । पश्चान्महाराजो भवेत् ४ जंबीरलक्षपूजनेन वर्षशतत्रयं शिवपुरे वासः । अनंताधिपतिर्भवति ५ बीजपूरलक्षपूजनाद्वर्षलक्षचतुष्टयं शिवपुरे वासः ६ लवंगपूजनाद्वर्षलक्षषट्कं शिवपुरे वासः ७ आखोटपूजनाद्वर्षसप्तलक्षकं शिवपुरे वासः । पश्चाद्धनपुत्रादिप्राप्तिर्भवति ८ पनसलक्षपूजनाद्वर्षसहस्राष्टकं स्वर्गे वासः ९ रायफलपूजनाद्वर्षलक्षदशकं स्वर्गे वासः । पश्चात्पृथिवीशो भवति १० सहकारलक्षपूजनात्कोटिवर्षं स्वर्गे वासः ११ जंबूफललक्षपूजनेन वर्षकोटिपर्यंतं स्वर्गे वासः १२ एलाफललक्षपूजनेन द्वादशसहस्रं स्वर्गे वासः । पश्चाच्चक्रवर्ती भवति १३ अखंडबिल्वपत्रलक्षपूजनात्कल्पांतं शिवपुरे वासः १४ अजीरकलक्षपूजनात्सप्तजन्मपर्यंतं सौभाग्यम् । पश्चाद्राज्यप्राप्तिः १५ ॥ इति धान्यफलानां लक्षपूजाविधिः ॥ ॥ अथ लक्षपूजोद्यापनम् ॥ यथाशक्तिब्राह्मणभोजनं नारीकेलार्घ्यदानम् । गजध्वजपताकाशिवस्यो-

परि कार्या श्वेतवस्त्राच्छादनम् । तत्राचार्यलक्षणम्— ह्रस्वं च कृष्णं चैव मतिदीर्घं जड तथा । चेतसा चाभिषेक्कार वधिरं हीनलिंगकम्॥ वेदहीन दुराचारं मलिन बहुभाषिणम् । निंदकं पिशुनं दक्षमंचक च विवर्जयेत् ॥ सपत्नीकं सपुत्रं च ह्यनूचानमनिंदकम् । कर्मज्ञ दोषरहितं सतुष्टं तु परीक्षयेत् । पूजांते च ततो होमं तिलद्रव्येण कारयेत् । ततस्त्वनंतरं पूजामाचार्येणैव कारयेत् ॥ यद्वारे मत्तमातंगा वायुवेगास्तुरंगमाः । पूर्णेंदुवदना नार्यो लक्षपूजाविधेः फलम् ॥ नमः शिवाय शांताय सगणाय ससूनवे । निवेदयामि चात्मानं त्व गतिः परमेश्वर ॥ भूमौ स्खलितपादानां भूमिरेवावलंबनम् । त्वयि जातापराधानां त्वमेव शरणं मम ॥ इति श्रीब्रह्मांडपुराणे लक्षपूजाविधिः समाप्तः ॥ ॥ ७ ॥ ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ७ ॥ ॥

॥ इति विश्वनाथदेवज्ञविरचितव्रतराजः समाप्तः

इद पुस्तकं मुम्बापुर्यां 'जगदीश्वराख्य' मुद्रणालये मुद्रितम् । शकाब्दाः १८२२।संवदब्दाः १९५७।



22/ꣲ॥ इति श्रीविश्वनाथदैवज्ञकृतव्रतराज. समाप्तः ॥